भट्टोजि दीक्षितकृत

# सिद्धान्त कौमुदी

17.10.1982
Mahagaon
(Near Gulbarga)

पाणिनि सूत्रपाठसहिता,

तत्त्व कौस्तुभः ब्रह्मसूत्रपाठसहितः

The paper for this book was kindly donated by Tribeni Tissues Ltd., Calcutta through the good offices of Shri. T.P. Kesan, of the above-mentioned Firm, and Shri. Hasmukh Shah, of Bombay Calcutta Paper & General Co. Pvt. Ltd., Bombay. The printing and binding were contributed by Shri. Kishore Sanghvi, Studio Bahar, Chowpatty, Bombay.

## A SHORT NOTE ON THIS COMPOSITION

At the behest of His Holiness Sri Chandrasekharendra Saraswati of Kanchi, this book was compiled in order to enable the serious students of Vedanta and Vyakarna to have in one handy volume, both the text and the commentary by Bhattoji Dikshitar, well-known as grammarian. His Tattwa Kaustabha, a commentary on the Brahma Sutras, though not as well known is presented.

It deals with the dvaita view presented by Ananda Tirtha followed by the accepted siddantha of the Advaitin scholars.

In his book, the last two lines (in bold) of the invocatory verses of the Tattwa Kausthuba is followed on the next page by the invocatory verses of the Sabda Kausthuba (3rd. verse in Bold), another work on Paninian Grammar by the Dikshitar in order to point out a beautiful sentiment.

> "Even as the milky ocean was churned by the Devas and Asuras to produce the Kausthuba (Crest Jewel), so the ocean of Sankara Bhasya has been churned to present this Tattwa Kausthuba for the edification of scholars by Battoji Dikshitar."

Again in the Sabda Kaustubha the ocean is compared to the Paninian Maha Bhashya.

It was the particular wish of His Holiness to bring home this point to the scholars who read this book.

The Tattwa Kaustubha contains three chapters. The first deals with Mimamsa. The second points out to the logical inconsistencies found in the Madhwa Bhashya. The third presents the Advaita view, which is the synthesis of the several seemingly contradictory statements made in the Upanishads.

The original printed version, from which this volume was reproduced, Sutras 21-33 on page 79-80 and Sutras 11-13 on page 91 of the II part of Tattwa Kaustubha were missing. These have been added after page 112, with a commentary of Brahmananda Saraswati, called Vedanta Sutra Muktavali, from the publication by Anandasrama series, Pune.

This is followed by Panini's Ashta Adhyayi and Siddantha Kaumudi by Bhattoji Dikshitar.

We crave the indulgence of the scholar, in compiling this work from many books, and rearrangement of some sequences of chapters it has not been possible to have a running numerical order. They are in seperate series of numbers.

A note on the distribution of the copies is enclosed.

## CONTENTS

A sculpture from the Varadaraja Temple, Kanchi showing Sutra Karah Bhagavan Vyasa and Bhashya Karah Bhagavatpada Sankara.

# ॥ ब्रह्मसूत्रम् ॥

अथातो ब्रह्मजिज्ञासा ॥ १ ॥

जन्माद्यस्य यतः ॥ २ ॥

शास्त्रयोनित्वात् ॥ ३ ॥

तत्तु समन्वयात् ॥ ४ ॥

ईक्षतेर्नाशब्दम् ॥ ५ ॥

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

हेयत्वावचनाच्च ॥ ८ ॥

स्वाप्ययात् ॥ ९ ॥

गतिसामान्यात् ॥ १० ॥

श्रुतत्वाच्च ॥ ११ ॥

आनन्दमयोऽभ्यासात् ॥ १२ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

नेतरोऽनुपपत्तेः ॥ १६ ॥

भेदव्यपदेशाच्च ॥ १७ ॥

कामाच्च नानुमानापेक्षा ॥ १८ ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

भेदव्यपदेशाच्चान्यः ॥ २१ ॥

आकाशस्तल्लिङ्गात् ॥ २२ ॥

अत एव प्राणः ॥ २३ ॥

ज्योतिश्चरणाभिधानात् ॥ २४ ॥

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

प्राणस्तथानुगमात् ॥ २८ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

## द्वितीयः पादः ॥

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

विवक्षितगुणोपपत्तेश्च ॥ २ ॥

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

शब्दविशेषात् ॥ ५ ॥

स्मृतेश्च ॥ ६ ॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं
व्योमवच्च ॥ ७ ॥

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

अत्ता चराचरग्रहणात् ॥ ९ ॥

प्रकरणाच्च ॥ १० ॥

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

विशेषणाच्च ॥ १२ ॥

अन्तर उपपत्तेः ॥ १३ ॥

स्थानादिव्यपदेशाच्च ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १५ ॥

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

रूपोपन्यासाच्च ॥ २३ ॥

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

अत एव न देवता भूतं च ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

# तृतीयः पादः ॥

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

नानुमानमतच्छब्दात् ॥ ३ ॥

प्राणभृच्च ॥ ४ ॥

भेदव्यपदेशात् ॥ ५ ॥

प्रकरणात् ॥ ६ ॥

स्थित्यदनाभ्यां च ॥ ७ ॥

भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

धर्मोपपत्तेश्च ॥ ९ ॥

अक्षरमम्बरान्तधृतेः ॥ १० ॥

सा च प्रशासनात् ॥ ११ ॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

दहर उत्तरेभ्यः ॥ १४ ॥

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

प्रसिद्धेश्च ॥ १७ ॥

इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

अन्यार्थश्च परामर्शः ॥ २० ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

अनुकृतेस्तस्य च ॥ २२ ॥

अपि च स्मर्यते ॥ २३ ॥

शब्दादेव प्रमितः ॥ २४ ॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

ज्योतिषि भावाच्च ॥ ३२ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

कम्पनात् ॥ ३९ ॥

ज्योतिर्दर्शनात् ॥ ४० ॥

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

पत्यादिशब्देभ्यः ॥ ४३ ॥

## चतुर्थः पादः ॥

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीते-
र्दर्शयति च ॥ १ ॥

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

तदधीनत्वादर्थवत् ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

महद्वच्च ॥ ७ ॥

चमसवदविशेषात् ॥ ८ ॥

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

प्राणादयो वाक्यशेषात् ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

समाकर्षात् ॥ १५ ॥

जगद्वाचित्वात् ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥

वाक्यान्वयात् ॥ १९ ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

अभिध्योपदेशाच्च ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

आत्मकृतेः परिणामात् ॥ २६ ॥

योनिश्च हि गीयते ॥ २७ ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

ॐ

# द्वितीयोऽध्यायः ॥

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष-
प्रसङ्गात् ॥ १ ॥

इतरेषां चानुपलब्धेः ॥ २ ॥

एतेन योगः प्रत्युक्तः ॥ ३ ॥

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

दृश्यते तु ॥ ६ ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

न तु दृष्टान्तभावात् ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्र-
सङ्गः ॥ ११ ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

भावे चोपलब्धेः ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ १६ ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ १८ ॥

पटवच्च ॥ १९ ॥

यथा च प्राणादि ॥ २० ॥

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

अधिकं तु भेदनिर्देशात् ॥ २२ ॥

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

देवादिवदपि लोके ॥ २५ ॥

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

स्वपक्षदोषाच्च ॥ २९ ॥

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

न प्रयोजनवत्त्वात् ॥ ३२ ॥

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥

न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

# द्वितियः पादः ॥

रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

प्रवृत्तेश्च ॥ २ ॥

पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

नित्यमेव च भावात् ॥ १४ ॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

उभयथा च दोषात् ॥ १६ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

उभयथा च दोषात् ॥ २३ ॥

आकाशे चाविशेषात् ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥

नासतो दृष्टत्वात् ॥ २६ ॥

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

नाभाव उपलब्धेः ॥ २८ ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

न भावोऽनुपलब्धेः ॥ ३० ॥

क्षणिकत्वाच्च ॥ ३१ ॥

सर्वथानुपपत्तेश्च ॥ ३२ ॥

नैकस्मिन्नसंभवात् ॥ ३३ ॥

एवं चात्माकार्त्स्न्यम् ॥ ३४ ॥

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

पत्युरसामञ्जस्यात् ॥ ३७ ॥

संबन्धानुपपत्तेश्च ॥ ३८ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

उत्पत्त्यसंभवात् ॥ ४२ ॥

न च कर्तुः करणम् ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

## तृतीयः पादः ॥

न वियदश्रुतेः ॥ १ ॥

अस्ति तु ॥ २ ॥

गौण्यसंभवात् ॥ ३ ॥

शब्दाच्च ॥ ४ ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

तेजोऽतस्तथाह्याह ॥ १० ॥

आपः ॥ ११ ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

चाराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

ज्ञोऽत एव ॥ १८ ॥

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

स्वात्मना चोत्तरयोः ॥ २० ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

गुणाद्वा लोकवत् ॥ २५ ॥

व्यतिरेको गन्धवत् ॥ २६ ॥

तथा च दर्शयति ॥ २७ ॥

पृथगुपदेशात् ॥ २८ ॥

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यऽथा ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

विहारोपदेशात् ॥ ३४ ॥

उपादानात् ॥ ३५ ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

उपलब्धिवदनियमः ॥ ३७ ॥

शक्तिविपर्ययात् ॥ ३८ ॥

समाध्यभावाच्च ॥ ३९ ॥

यथा च तक्षोभयथा ॥ ४० ॥

परात्तु तच्छ्रुतेः ॥ ४१ ॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वम-
धीयत एके ॥ ४३ ॥

मन्त्रवर्णाच्च ॥ ४४ ॥

अपि च स्मर्यते ॥ ४५ ॥

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

स्मरन्ति च ॥ ४७ ॥

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

असंततेश्चाव्यतिकरः ॥ ४९ ॥

आभास एव च ॥ ५० ॥

अदृष्टानियमात् ॥ ५१ ॥

अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

## चतुर्थः पादः ॥

तथा प्राणाः ॥ १ ॥

गौण्यसंभवात् ॥ २ ॥

तत्प्राक्श्रुतेश्च ॥ ३ ॥

तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

अणवश्च ॥ ७ ॥

श्रेष्ठश्च ॥ ८ ॥

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

अणुश्च ॥ १३ ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

प्राणवता शब्दात् ॥ १५ ॥

तस्य च नित्यत्वात् ॥ १६ ॥

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

भेदश्रुतेः ॥ १८ ॥

वैलक्षण्याच्च ॥ १९ ॥

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

---

ॐ

# तृतीयोऽध्यायः ॥

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

प्राणगतेश्च ॥ ३ ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥

स्मरन्ति च ॥ १४ ॥

अपि च सप्त ॥ १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

न तृतीये तथोपलब्धेः ॥ १८ ॥

स्मर्यतेऽपि च लोके ॥ १९ ॥

दर्शनाच्च ॥ २० ॥

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

नातिचिरेण विशेषात् ॥ २३ ॥

अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

रेतःसिग्योगोऽथ ॥ २६ ॥

योनेः शरीरम् ॥ २७ ॥

---

## द्वितीयः पादः ॥

संध्ये सृष्टिराह हि ॥ १ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

देहयोगाद्वा सोऽपि ॥ ६ ॥

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

अपि चैवमेके ॥ १३ ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

दर्शनाच्च ॥ २१ ॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

तदव्यक्तमाह हि ॥ २३ ॥

अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

पूर्ववद्वा ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥

परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

सामान्यात्तु ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥

स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

उपपत्तेश्च ॥ ३५ ॥

तथान्यप्रतिषेधात् ॥ ३६ ॥

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

फलमत उपपत्तेः ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥

धर्मं जैमिनिरत एव ॥ ४० ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

## तृतीयः पादः ॥

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

दर्शयति च ॥ ४ ॥

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

व्याप्तेश्च समञ्जसम् ॥ ९ ॥

सर्वाभेदादन्यत्रेमे ॥ १० ॥

आनन्दादयः प्रधानस्य ॥ ११ ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

आत्मशब्दाच्च ॥ १५ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

कार्याख्यानादपूर्वम् ॥ १८ ॥

समान एवं चाभेदात् ॥ १९ ॥

संबन्धादेवमन्यत्रापि ॥ २० ॥

न वा विशेषात् ॥ २१ ॥

दर्शयति च ॥ २२ ॥

संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

वेधाद्यर्थभेदात् ॥ २५ ॥

हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदु-
क्तम् ॥ २६ ॥

सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

छन्दत उभयाविरोधात् ॥ २८ ॥

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदु-
क्तम् ॥ ३३ ॥

इयदामननात् ॥ ३४ ॥

अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

सैव हि सत्यादयः ॥ ३८ ॥

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

आदरादलोपः ॥ ४० ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

प्रदानवदेव तदुक्तम् ॥ ४३ ॥

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥

विद्यैव तु निर्धारणात् ॥ ४७ ॥

दर्शनाच्च ॥ ४८ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ५१ ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

एक आत्मनः शरीरे भावात् ॥ ५३ ॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

मन्त्रादिवद्वा विरोधः ॥ ५६ ॥

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

नाना शब्दादिभेदात् ॥ ५८ ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥६०॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥

समाहारात् ॥ ६३ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥

## चतुर्थः पादः ॥

पुरुषार्थोऽतः शब्दाति बादरायणः ॥ १ ॥

शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

आचारदर्शनात् ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

श्रुतेश्च ॥ ४६ ॥

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥

ॐ

# चतुर्थोऽध्यायः ॥

---

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

लिङ्गाच्च ॥ २ ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

न प्रतीके न हि सः ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

आसीनः संभवात् ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥

स्मरन्ति च ॥ १० ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥

यदेव विद्ययेति हि ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

---

## द्वितीयः पादः ॥

---

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अत एव च सर्वाण्यनु ॥ २ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

भूतेषु तच्छ्रुतेः ॥ ५ ॥

नैकस्मिन्दर्शयतो हि ॥ ६ ॥

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥

स्मर्यते च ॥ १४ ॥

तानि परे तथा ह्याह ॥ १५ ॥

अविभागो वचनात् ॥ १६ ॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

रश्म्यनुसारी ॥ १८ ॥

निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥

अतश्चायनेऽपि दक्षिणे ॥ २० ॥

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

---

## तृतीयः पादः ॥

---

अर्चिरादिना तत्प्रथितेः ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

विशेषितत्त्वाच्च ॥ ८ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

स्मृतेश्च ॥ ११ ॥

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥

न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा[ऽ]दोषा-
त्तत्क्रतुश्च ॥ १५ ॥

विशेषं च दर्शयति ॥ १६ ॥

---

## चतुर्थः पादः ॥

संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

मुक्तः प्रतिज्ञानात् ॥ २ ॥

आत्मा प्रकरणात् ॥ ३ ॥

अविभागेन दृष्टत्वात् ॥ ४ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥

अभावं बादरिराह ह्येवम् ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

इति चतुर्थोऽध्यायः ॥

ब्रह्मसूत्राणि संपूर्णानि ॥

# INDEX TO SUTRAS

॥ श्रीः ॥

श्रीगणेशाय नमः ॥

श्रीवेदव्यासाय नमः ॥

# ॥ तत्त्वकौस्तुभः ॥

## ॥ भट्टोजिदीक्षितविरचितः ॥

विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत् ।
चरीकर्ति बरीभर्ति संजरीहर्ति लीलया ॥

केलदीवेङ्कटेन्द्रस्य निदेशाद्विदुषां मुदे ।
†ध्वान्तोच्छित्त्यै पटुतरस्तन्यते तत्त्वकौस्तुभः ॥

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।
शांकरादपि भाष्याब्धेस्तत्त्वकौस्तुभमुद्धरे ॥

+ 'ध्वान्त' इति श्लेषेण 'माध्व' निर्देशः । मध्वमतनिराकरणे ग्रन्थोऽयं
विशेषतोऽलंकर्मीण इति भावः ।

॥ श्रीः ॥

# अथ शब्दकौस्तुभः ।

॥ श्रीगणेशाय नमः ॥

विश्वेशं सच्चिदानन्दं वन्देहं योखिलं जगत् ॥
चरीकर्त्ति बरीभर्त्ति संजरीहर्ति लीलया ॥ १ ॥
नमस्कुर्वे जगद्वन्द्यं पाणिन्यादिमुनित्रयम् ॥
श्रीभर्तृहरिमुख्यांश्च सिद्धान्तस्थापकान्बुधान् ॥ २ ॥
**नत्वा लक्ष्मीधरं तातं सुमनोवृन्दवन्दितम् ॥**
**फणिभाषितभाष्याब्धेः शब्दकौस्तुभमुद्धरे ॥ ३ ॥**
परिभाव्य बहून् ग्रन्थान्योर्थः क्लेशेन लभ्यते ॥
तमशेषमनायासादितो गृह्णीत सज्जनाः ॥ ४ ॥
समर्प्य लक्ष्मीरमणे भक्त्या श्रीशब्दकौस्तुभम् ॥
भट्टोजिभट्टो जनुषः साफल्यं लब्धुमीहते ॥ ५ ॥

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

द्वितीये तु परिच्छेदे मध्वाधिकरणस्थितिः ।
प्रदर्श्यते खण्ड्यते च प्रायशो विदुषां मुदे ॥

वेदान्तविचारशास्त्रं नारम्भणीयम्, विषयाभावात् । न च ब्रह्म विषयः, तद्धि स्वप्रकाशं जीवाभिन्नं निर्गुणं चेति सर्वोपनिषद्भिः सिद्धम् । न च तत्र निरूपणीयं किंचिदस्तीति पूर्वः पक्षः । स्यादेवम्, यदि ब्रह्म निर्गुणं जीवाभिन्नं च स्यात् । न त्वेवम्; 'तद्विजिज्ञासस्व । तद्ब्रह्मेति' इति श्रुत्या जिज्ञासापदरूढ्यर्थस्य मननापरनामधेयस्य विचारस्य विषये धर्मिणि ब्रह्मपदं श्रावितम् । तच्च [1]गुणपूर्णत्ववाचकम्, 'अथ कस्मादुच्यते ब्रह्मेति? बृहन्तो ह्यस्मिन्गुणाः' इति श्रुतेः । ततश्चाल्पगुणाज्जीवसंघाद्भिन्नमेव ब्रह्मात्र विषय इति शास्त्रमारम्भणीयमिति सिद्धान्त इति माध्वाधिकरणशरीरम् ॥

तत्र पूर्वपक्षस्तावदयुक्तः, वस्तुतो जीवाभिन्नस्यापि ब्रह्मण आवृतत्वेन विचार्यत्वोपपत्तेः । त्वया हि 'पुंस्त्वादिवत्' इत्यधिकरणे जीवस्वरूपात्मकोऽप्यानन्द इदानीं भावरूपाज्ञानेन आवृतः, ब्रह्मस्वरूपतद्गुणगणादिकमप्यावृतं; परमेश्वरापरोक्षज्ञानेन तु मुक्तावभिव्यज्यत इति स्वीकृतम् । तथा सिद्धान्तोऽपि तुच्छः, ब्रह्मणो गुणपूर्णत्वस्यासिद्धेः, 'बृहन्तो हि' इति [2]श्रुतेस्त्वत्कल्पितत्वात् । अभ्युपेत्य ब्रूमः—व्यावहारिकगुणपूर्तिरेव तदर्थः, 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतेः । गुणानां पारमार्थिकत्वेऽपि ब्रूमः — त्वन्मते विरुद्धधर्मैर्भेदो[3] न सिध्यति, त्वया विरुद्धधर्मसंकरस्य बहुधा स्वीकारात् । तथा हि—ईश्वरः स्वयमेकः सन्नपि आनन्दमयाधिकरणोदाहृतान्नमयप्राणमयादिरूपेण, गुहाधिकरणोदाहृतशुभकर्मफलभोक्त्रात्मान्तरात्मरूपेण, 'न संख्योपसंग्रहात्' इत्यधिकरणोदाहृतपञ्चपञ्चजनरूपेण, 'न स्थानतोऽपि' इत्यधिकरणोदाहृतविश्वतैजसप्राज्ञरूपेण चानेकः ।

---

1. पूर्णगुणत्ववाचकम्   2. श्रुतेर्विकल्पिततत्वात्   3. ०धर्मैर्विरोधो

तथाऽशरीरी सन्नपि 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यधिकरणोक्तरीत्या परव्यूहावतारादिनाना-शरीररूपः। अत एव पुराणादिषु रामकृष्णाद्यवतारभेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्यानुवादकमिति तृतीयस्य चतुर्थे 'सर्वथाऽपि त एवोभयलिङ्गात्' इत्यधिकरणे अनुव्याख्यानन्यायसुधयोरुक्तम्। एवमानन्दमयावयवी सन्नपि तदीयशिरःपक्षमध्यपुच्छावयवरूप इत्यादि त्वया स्वीकृतम्। तथा 'एक आत्मनः शरीरे भावात्' इत्यधिकरणे खाण्डवदाहतत्प्रशमादि कृतवतोः सेव्यसेवकभावादिविरुद्धगुणशालिनोरत्यन्ताभेदः साधितः। तत्कथं जीवब्रह्मणोर्भेदः सिध्येत्? ननु विरुद्धधर्मेण भेदः सिध्यतीत्युत्सर्गः; अत्यन्ताभेदबोधकप्रबलप्रमाणबलात्तु भेदे बाधिते भेदप्रतिनिधिना विशेषेणेश्वरस्याचिन्त्यशक्त्या वा तत्र तत्र निर्वाहः क्रियत इति चेत्, समं प्रकृतेऽपि, जीवब्रह्मणोरप्यभेदसाधकानां सहस्रशः सत्वात्। श्रूयते ह्यमृतबिन्दूपनिषदि— 'तद्ब्रह्माहमिति स्मृतम्। तदस्म्यहं वासुदेवः' इति। कैवल्योपनिषदि—'तत् त्वमेव त्वमेव तत् चिन्मात्रोऽहं सदाशिवः। तद्ब्रह्माद्वयमस्म्यहम्' इत्यादि। उत्तरतापनीये—'स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति तस्मादेवमेवेममात्मानं परं ब्रह्मानुसंदध्यात्' इति, 'नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति' इत्यादि च। परमहंसोपनिषदि—'परमात्मात्मनोरेकत्वज्ञानाद्भेद एव विभग्नः' इति। एवं श्रुत्यन्तरेष्वपि द्रष्टव्यम्। विष्णुपुराणे द्वितीयेंऽशे षोडशेऽध्याये— 'एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥' इत्यादि। ब्रह्मगीतासूतगीताशिवगीतादौ च प्रसिद्धमेवाद्वैतं लाघवं चोपष्टम्भकमिति दिक्। किं च 'भेदप्रतिनिधिर्विशेषः' इति रिक्तं वचः; सोमपूतिकयोर्हि भेदात्सोमालाभे पूतिकः प्रतिनिधीयत इत्युचितम्। इह तु भेदविशेषयोर्द्वयोरपि स्वरूपात्मकत्वाभ्युपगमात्कथं भेदालाभे विशेषलाभः? एवं गुणानामपि स्वरूपात्मकतायाः 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इत्यधिकरणे निर्णीतत्वात् सगुणं ब्रह्मेति शब्दो निर्गुणत्वपर्यवसाय्येव। तथा च विरुद्धगुणाध्यासस्यासिद्धिर्व्यभिचारश्चेति [1]कल्प्यो भेदः। न च 'नाहमीश्वरः' इत्यादिप्रत्यक्षेण तत्सिद्धिः, तस्य व्यावहारिकभेदविषयत्वात्, 'नाहमणुर्नाहं ज्ञानम्' इत्यादिप्रत्यक्षस्य त्वयाऽपि भ्रमत्वस्वीकाराच्च। न च 'उत्तमः पुरुषस्त्वन्यः' इत्यादिभिर्भेदसिद्धिः, 'अन्योऽन्तर आत्मा' इत्यादिवदुपपत्तेः; तत्र हि, 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः॥' इति वचनं त्वद्भाष्य एवोदाहृतम्। यत्तु नवीनमाध्वेन शब्दान्तरादिकं जीवब्रह्मभेदसाधकतयोपन्यस्तम्, तत्तुच्छम्, 'आत्मान्तरात्मानौ द्वौ, विश्वादयस्त्रयः, व्यूहाश्चत्वारः, आनन्दादयः पञ्च, पञ्चजनाश्च पञ्च, अवतारा गुणाश्चानन्ताः, सर्वे च विष्णुना सह सविशेषाभिन्नाः' इति तत्तदधिकरणे उक्तम्। त्वदीयोक्तस्थलेषु

---

1. कत्यो

व्यभिचारस्योद्भटत्वात् । पूर्वतन्त्रेऽपि कर्मभेदकतामात्रस्य भेदस्यौपाधिकतायाश्च स्वीकारात् । न चैन्द्रदधिपयोयागयोः प्राजापत्ययागानां वाऽनौपाधिको भेदः संभवति स्वीकृतो वा, संप्रतिपन्नदेवताकतया तन्त्रेण त्यागस्वीकारात्, देवतोद्देशेन द्रव्यत्यागस्यैव यागत्वात्, तदैक्यस्य युक्तिसिद्धत्वात् ग्रन्थारूढत्वाच्च । तन्त्ररत्ने '[1]क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात' (जै. ६-३-२१) इत्यधिकरणे वरदराजीये च शब्दान्तरसंज्ञाधिकरणयोः स्पष्टमेतत् ॥ १ ॥

## जन्माद्यस्य यतः ॥ २ ॥

उदाहृतश्रुतिस्थब्रह्मपदस्य जीवपरत्वमाशङ्क्य निराक्रियते । तथा हि—ब्रह्मशब्दो जीवे रूढः, 'बृह जातिजीवकमलासनशब्दराशिषु' इति धातोरुत्पन्नत्वात् । ब्रह्मणि तु गुणपूर्तिवशात् प्रयुज्यमानो यौगिकः । एवं च रूढेर्बलीयस्त्वात् 'तद्विजिज्ञासस्व तद्ब्रह्मेति' इत्यत्र ब्रह्मपदं जीवपरमेव । तत्कथं जीवातिरिक्तस्य विचार्यतेति पूर्वपक्षः । सत्यं रूढिर्बलीयसी । किं तु बाधादिह त्यज्यते । 'यतो वा इमानि भूतानि' इति हि जगज्जन्मादिकारणत्वं जिज्ञास्यब्रह्मणो लक्षणं श्रुतम् । तच्च विष्ण्वेकनिष्ठम् । न तु जीवे संभवति । उक्तं च स्कान्दे—'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥' इति । सूत्रेऽपि जन्माद्यष्टकं गृह्यते । अतः परिपूर्णगुणो विष्णुरेव ब्रह्मशब्देन योगतो गृह्यत इति सिद्धान्तः इति माध्वाधिकरणशरीरम् ॥

तत्र पूर्वपक्षस्तावदशुद्धः, शरीरबृंहकत्वादिरूपयोगेनैवोपपत्तौ जीवे रूढिकल्पनायोगात् । प्रथमाधिकरणे, 'आनन्दमयोऽभ्यासात्' 'सर्वत्र प्रसिद्धोपदेशात्,' 'गुहां प्रविष्टावात्मानौ हि' इत्याद्यधिकरणेषु च ब्रह्मशब्दस्याज्ञरूढिर्जीवे, विद्वद्रूढिस्तु विष्णावेवेति त्वदुक्तेश्च, उदाहृतधातोरप्रामाणिकत्वाच्च । चतुर–कमठ–माठर–कौरव्य–कौण्डिन्य–मार्कण्ड–माण्डव्य–मौद्गल्य–पौष्यायण–पौत्रायण–सौत्रायण–सौकरायण–पाराशर्यायण–माध्यंदिनायन–काषारव–कौषारव–कौपायण–काषायण–बृहदुद्दालक–औद्दालकायन–कौशिक–सौपर्ण–वत्स–गौपवन–भार्गवेय–आग्निवेश्य–चतुर्वेदसंहिता–चतुर्वेदशिखेन्द्रद्युम्नपरमेत्यादिश्रुतय इति, तदनुसारीणि अध्यात्मनारायणाध्यात्मसंहिता–बृहत्संहिता–महासंहिता–नारायणतन्त्र–ब्रह्मतन्त्र–पुरुषोत्तमतन्त्र–मायावैभव–ब्रह्मतर्क–भविष्यत्पर्ववचनानीति चात्यन्ताप्रसिद्धवचनाभासान् कल्पयता प्रतारकापशदेन माध्वेन वराकेण हि धातुरयं कल्पितः, न तु पण्डितान् प्रत्युपन्यासार्हः । तथा सिद्धान्तोऽप्यसंगतः, ब्रह्मशब्दस्य जीवे रूढत्वे 'यतो वा' इत्यादिनाऽनूदितस्य जगत्कर्तुर्विष्णोर्जीवाभेद एव हि वाक्यार्थः स्यात् । तथा च 'तत्त्वमसि' इत्यादिवाक्यतुल्यार्थमेव 'यतो वा' इत्याद्यपि स्यात । बाधस्तु प्रथमसूत्र एवोद्धृतः ॥

---

1. क्रियाणामनन्तत्वात्

## शास्त्रयोनित्वात् ॥ ३ ॥

जगज्जन्मादिकारणत्वं न विष्णुलक्षणम् , जगत् अनेककर्तृकं विचित्रकार्यत्वात् प्रासादादिवत् इति शिवादीनामपि जगत्कर्तृत्वसिद्धौ सत्यां शिवादिष्वतिव्याप्तिरिति प्राप्ते, सिद्धान्तः। जगत्कारणत्वस्य धर्मादिवच्छास्त्रैकगम्यत्वात् शास्त्रस्य च विष्णवेकनिष्ठत्वान्नोक्तदोषः। अनुमानं त्वप्रयोजकं श्रुतिबाधितं चेति माध्वाधिकरणशरीरम् ॥

अत्र सिद्धान्तो दुरुपपादः, शिवविरिञ्चपराणामपि श्रुतीनां प्रसिद्धत्वात्। अत एवानुमानमपि नाप्रयोजकं नापि बाधितम्। एतच्चोत्तराधिकरणभङ्गे स्फुटीभविष्यति ॥

## तत्तु समन्वयात् ॥ ४ ॥

अस्तु शास्त्रैकगम्यता, तथाऽपि शास्त्रत एव शिवविरिञ्चयोरपि जगत्कर्तृत्वप्रतीतेरतिव्याप्तिरेवेति पूर्वपक्षः। सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपादन्वयात् तद्धेतुकात् सम्यग्वचनवृत्त्या सर्वशास्त्रस्य तत्परत्वरूपादन्वयाच्च विष्ण्वाख्यं ब्रह्मैव कारणतया शास्त्रगम्यमिति सिद्धान्त इति माध्वाधिकरणशरीरम् ॥

अत्र सिद्धान्तो दुरुपपादः। तथा हि—श्वेताश्वतराणां मन्त्रोपनिषदि शिव एव जगत्कर्ता प्रतीयते—'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥' इति मन्त्रेण हि सर्वेषां कारणवाक्यानां शिवपर्यवसानमुक्तम्। तत्र तम आसीदिति श्रुत्यन्तरोक्ततमोऽङ्कितकालानुवादो यदा तम इति। तत्कालवर्तित्वं च शिवस्येत्युक्त्या शिवे सर्वेषां कारणवाक्यानां पर्यवसानमुक्तम्। तदक्षरमिति मुण्डकादीनां, तत्सवितुरिति गायत्र्याः, प्रज्ञा च तस्मादिति तदैक्षत बहु स्यामित्यादीनाम्। किं च, क्षरं प्रधानममृताक्षरं हरः, भावाभावकरं शिवम् , भूयः स सृष्ट्वा पतयस्तथेशः, एको ह रुद्रो न द्वितीयाय तस्थुः, ईशानो ज्योतिरव्ययः, मायिनं तु महेश्वरम् इति हर–शिव–ईश–रुद्र–ईशान–महेश्वरादिशब्दस्वरसात् श्वेताश्वतरसंदर्भः शिवपर एव। उपबृंहितं च तथैव कौर्मशैवस्कान्देषु। तथा अथर्वशिखायामपि—'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य, समाप्ताथर्वशिखा' इत्युपसंहृतम्। 'ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते' इति प्राचीनवाक्येन 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुः' इत्यनेन च मूर्तित्रयनियामकस्तुरीयः शंभुरित्युक्तम्। माण्डूक्ये च—'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते' इति। आनुशासनिके 'स एव भगवानीशः' इत्युपक्रम्य, 'सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवम्। वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः। युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथासृजत् ॥' इति। पाराशरपुराणे—'तस्यासाधारणी मूर्तिः साम्बा चन्द्रा-

धशेखरा' इत्यारभ्य 'ब्रह्मविष्णुमहेशानास्तं ध्यायन्ति निरन्तरम् ।' इति ॥ पाद्मे शिवराघवसंवादे—'य एकः शाश्वतो देवो ब्रह्मवन्द्यो महाशिवः । दक्षिणेनासृजत्पुत्रं ब्रह्माणं वामतो हरिम् । पृष्ठदेशे महेशानं त्रीन्पुत्रानसृजत्प्रभुः ॥' इति । तथा 'प्रजापतिर्वा इदमेक आसीत् । नाहरासीन्न रात्रिरासीत् । सोऽस्मिन्नन्धे तमसि प्रासर्पत्' इत्यादिना विरिञ्चस्यापि जगत्कर्तृत्वं प्रतीयते । तत्कथं विष्णोरेव तथात्वमिति त्वदभिमतं सिध्येत् । अस्मत्सिद्धान्ते तु एकस्यैवाद्वितीयस्य नानालीलाविग्रहाः । सर्वेषां पूज्यत्वाविशेषेऽपि 'न हि निन्दा' न्यायेन कस्यचिन्निकर्षोक्तिः । उक्तं हि भागवते चतुर्थस्कन्धे सप्तमाध्याये—'आत्ममायां समाविश्य सोऽहं गुणमयीं द्विजाः । सृजन्रक्षन्हरन्विश्वं दधे संज्ञां क्रियोचिताम् ॥ तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि । देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ॥' स्कान्दे सूतगीतायां षष्ठेऽध्याये—'ब्रह्मविष्णुमहेशाद्याः शिवध्यानपरा अपि । परमात्माविभागस्था न जीवव्यूहसंस्थिताः ॥ ब्रह्मविष्णुमहेशानां तथा तेषां द्विजर्षभाः । आविर्भावविशेषाणां पुण्यपापादयो न हि ॥' इति । तस्माद्द्वैतसिद्धान्तावलम्बनमपहाय श्रुतीनामेकवाक्यता दुरुपपादेति स्थितम् ॥

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

ब्रह्मणः सर्वशास्त्रस्थशब्दप्रवृत्तिनिमित्तसकलगुणपूर्तिसिद्धये वाच्यवृत्त्या कृत्स्नशास्त्रविषयता पूर्वसूत्रे समन्वयादित्यस्यार्थान्तरतया दर्शिता । तत्र संशब्दार्थभूतं वाच्यत्वमिहाक्षिप्य समर्थ्यते । 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभिर्ब्रह्मणो वाच्यत्वनिषेधात् न तत्र समन्वय इति प्राप्ते, सिद्धान्तः—ब्रह्म अशब्दं न, किं तु वाच्यमेव । कुतः ? ईक्षतेः । 'परात्परं पुरिशयं पुरुषमीक्षते' इति प्रश्नोपनिषदि ब्रह्मण ईक्ष्यत्वं श्रुतम् । ईक्षणं चौपनिषदस्य वचनमूलकमेव । तच्च वाच्यत्वं विना न संभवति । न च लक्षणया निर्वाहः, वाच्यसंबन्धप्रतीतिमूलभूतवृत्त्यन्तरायोगात् । तस्मात्परिशेषाच्छक्तिरेव ॥

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ननु ईक्षणीयत्वेनोक्तः सत्त्वादिगुणको जीवोऽस्तु । न, 'आत्मन्येवात्मानं पश्येत्' इति तस्मिन्नात्मशब्दश्रवणात् ॥ नन्वात्मशब्दोऽपि जीवे मुख्योऽस्तु । नेत्याह—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

पाद्मे—'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥ इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते । तस्यात्मनो निर्गुणस्य ज्ञाना-

न्मोक्ष उदाहृतः ॥ सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते । परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः ॥' इति ॥

## हेयत्वावचनाच्च ॥ ८ ॥

आत्मशब्दो न गौणपरः, 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ' इत्यत्र हेयत्वेनानुक्तेः ॥

## स्वाप्ययात् ॥ ९ ॥

'स आत्मन आत्मानमुद्धृत्यात्मन्येव विलापयति अथात्मैव भवति' 'स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः । एकीभूय पुनः शेते निर्दोषो हरिरेकराट् ॥' इति स्वस्यैव स्वस्मिन्नप्ययवचनात् 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥' इति श्रुतेश्च । एवं हि तदर्थः—अदो मूलरूपं पूर्णम् । इदमवताररूपं च पूर्णम् । तत् पूर्णं सृष्टिकाले पूर्णान्मूलरूपादुद्रिच्यते । प्रलये च पूर्णस्य स्वस्य पूर्णमवताररूपमादाय स्वीकृत्यैकीभूय मूलरूपमन्यत्रालीनं स्वयमेव शिष्यत इति । गौणो ह्यपूर्णः अन्यस्मिंश्च लीयते । अयं तु न तथेति भावः ॥ न चेदं शाखान्तरैर्विरुध्यत इत्याह—

## गतिसामान्यात् ॥ १० ॥

'सर्वे वेदा युक्तयः सुप्रमाणा ब्रह्मज्ञानं परमं त्वेकमेव । प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे ॥' इति पैङ्गिश्रुतेः ॥

## श्रुतत्वाच्च ॥ ११ ॥

सिंहावलोकनन्यायेन वाच्यत्वे हेतूपन्यासपरमिदं सूत्रम् । तस्माच्छ्रुतिप्रतिपाद्यत्वात्सर्वपदावाच्ये लक्षणाया अपि दुरुपपादत्वात् वाच्यमेव ब्रह्मेति माध्वाधिकरणशरीरम् ॥

इदं च माध्वोक्तेनैवाधिकरणान्तरेण विरोधाध्यायविरोधाचाशुद्धमेव । तथा हि—अतएव तत्त्ववादिना माध्वेन 'तथाऽन्यप्रतिषेधात्' इति सूत्रे सांप्रदायिकं तथाऽन्येत्यकारान्तं पाठं विहाय तथाऽन्यादिति तान्तं पठित्वा रचितेऽधिकरणे ध्येयं ब्रह्मैव नेति निर्णीतम् । तेनोपासनाविधिषु प्रविष्टानां ब्रह्मादिशब्दानां तद्वाच्यं नेत्यर्थात्सिद्धम्, उपास्यसमर्पकपदवाच्यत्वे उपास्यत्वापत्तेः । अत एव हि केनोपनिषदि 'यन्मनसा न मनुते' इति मन्त्रस्य संनिधावाम्नायमानं

'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति । तस्मादवाच्यमिति त्वयाऽभ्युपगन्तव्यम् । तथा च सृष्ट्यादिवाक्यस्थब्रह्मात्मनारायणादिपदानामपि तद्वाच्यं न भवेदिति कथं तस्य जगत्कर्तृत्वादिसिद्धिः । न चोपास्यसमर्पकपदावाच्यत्वेऽपि सृष्ट्यादिवाक्यस्थपदवाच्यता संभवत्येवेति वाच्यम्, त्वन्मते सृष्ट्यादिवाक्यानामपि उपासनापरत्वात्, 'आध्यानाय प्रयोजनाभावात्' इत्यधिकरणे त्वया तथैव सिद्धान्तितत्वात् । तथा च त्वन्मतं निष्कृष्यमाणमित्थं पर्यवस्यति—'वाङ्मनसातीतमुपासनानन्तरं मुच्यमानानां मुक्तानां च साक्षात्कारस्यैव विषयभूतं परं ब्रह्म 'तदेव त्वं विद्धि' इत्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यम् । तस्य प्रतिबिम्बविशेषस्तु जीववदनादिः कर्ता उपास्यश्च एक एव सृष्ट्यादिश्रुतिभिस्तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपाद्यः' इति । अत एव 'यतो वाचो निवर्तन्ते अप्राप्य' इत्युक्तम्, प्रशब्दस्य मुख्यत्वपरतया अप्राप्येत्यस्य शक्तिनिषेधपरत्वात् । प्रसिद्धं चेदं ब्रह्मगीतादौ न्याय्यं च, सर्वेषां पदानां ब्रह्मणि शक्तौ पर्यायत्वापत्त्या सहप्रयोगायोगात् । लाक्षणिकानां तु तत्तत्संशयनिवृत्त्यै सहप्रयोगः प्रसिद्धो लक्षणवाक्येषु सोऽयमित्यादिवाक्येषु च । उक्तं च— 'लक्ष्यार्थस्याविशेषेऽपि व्यवच्छेद्यविभेदतः । ज्ञानानन्दादिशब्दानां पर्यायव्यर्थता न हि ॥' इति, 'भ्रमप्रतीवभेदस्याश्रयत्वप्रतियोगिते । अवच्छिनत्ति यद्वृत्तदुपलक्षितबोधतः ॥ भेदभ्रमनिवृत्तिर्हि सोऽयमित्यत्र दृश्यते । अतोऽनेकपदादानं श्रुतौ न हि विरुध्यते ॥' इति च । न च शक्यसंबन्धग्रहार्थं प्राथमिकोपस्थितिः कथमिति वाच्यम्, विशिष्टघटकस्य चिदंशस्यापि शक्यैवोपस्थितौ सत्यां जडत्वावच्छिन्नं मिथ्येति बोधिते सति तदवच्छिन्नोपस्थितौ सत्यां भागत्यागस्य सुकरत्वात् इत्यन्यत्र विस्तरः । विशिष्टेऽपि ब्रह्मादिपदानां शक्तिः कथं ग्राह्येति तु न प्रपञ्च्यते, यूपाहवनीयादिशब्दतौल्यादुभयसंमतत्वाच्चेति दिक् ॥

यत्त्विह 'ईक्षतेः' इति सूत्रस्यावतरणे मध्वभाष्ये 'न तच्छब्दगोचरम्' इति प्रयुक्तम्, तत्र गोचरशब्दस्य क्लीबत्वं प्रामादिकम्, नित्यपुंस्त्वात् । तथा च लिङ्गानुशासने 'पुमान्' इत्यधिकारे सूत्रितम्— 'घाजन्तश्च' इति । उदाहृतं च वृत्तिकृद्भिः— 'गोचरो विषयः' इति । प्रयुक्तं च श्रीहर्षेण— 'परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचरः' इति । न केवलमिहैव प्रमादः, किं तु प्रायेण मध्वादिभिरपशब्दा एव प्रयुज्यन्ते । तत्र दिङ्मात्रमुदाहरामः—भारततात्पर्यनिर्णये स्वर्गारोहणपर्वाख्ये द्वात्रिंशेऽध्याये 'हरिं वदन्तीति समर्थयित्वा' इत्युक्तम् । अत्र समर्थ्येति युक्तम् । तथाऽनुव्याख्याने 'मिथ्याया: साधकत्वं च न सिद्धं प्रतिवादिनः' इत्यत्र मिथ्येति वक्तव्ये मिथ्याया इति । तथा तत्रैव द्वितीयाध्याये 'अर्थत्वमर्यतैव स्यात्' इत्यत्र 'अर्यः स्वामिवैश्ययोः' इति व्याकरणविरुद्धमर्यमाणस्य प्रतिपादनार्थमर्यपदम् । तथा 'सभासभास्वत्प्राश्नीकपूर्वैस्तु स्पर्धिनामपि' इति श्लोके प्राश्नीकेति दीर्घकारं प्राश्नीकपदम् ।

तथा सांख्याधिकरणे 'साक्षादनुभवारूढं शक्यतेऽपोदितुं कचित्' इत्यत्रापवदितुमिति वक्तव्ये अपोदितुमिति। तथा तत्रैव 'स्वनाशार्थं च को यतेत्' इत्यत्र यतेतेति वक्तव्ये यतेदिति। तथा 'विशेषकाल एवैतत्सृष्ट्यादीच्छा सदातना' इत्यत्र सदातनीति वक्तव्ये सदातनेति प्रयुक्तम्। यत्तु 'जयतीर्थेन—'गोचरशब्दस्य क्लीबत्वमार्षम्; प्रश्नशब्दात् करोतीत्यर्थे ईकक् वक्तव्यः; अपोदितुमिति छान्दसं संप्रसारणम्; यतेदिति परस्मैपदं बाहुलकात्; सदातनेति नेमौ तुट्ट्युलौ, किं तु भवार्थे तनप्रत्ययः' इत्यादिक्रमेण तत्र तत्र तत्त्वप्रकाशिकान्यायसुधयोः वर्णितम्, तत्तु द्वयोरपि भ्रान्तत्वप्रतारकत्वादिदार्ढ्यमेवावहति। अन्यथा हि मध्वग्रन्थे पाठान्तरकल्पनादिकुशकाशावलम्बनं प्रसरेत्। व्याख्यातृप्रसादात्तु बन्ध्यापि गतमिति पुत्रार्थं पुरश्चरणं कृत्वा भर्तारमपि यापितवतीति न्यायापातः। किं च जयतीर्थोऽपि प्रायेणापशब्दान् प्रायुङ्क्त। तथा च तत्त्वप्रकाशिकायां तृतीयश्लोके 'स्वान्तध्वान्तनिकृन्तनं' इत्युक्तम्; निकर्तनं इति तु युक्तम्। सप्तमश्लोके 'रथ्याद्भिर्लभ्यते यथा' इति प्रयुक्तम्। रथ्याभिरिति प्राप्नोति। तथा प्रथमसूत्रे शापस्य स्वहतगोनिर्भर्तृमात्रविषयत्वादिति, द्वित्रिशाखानिर्णायकत्वादिति, प्रसिद्धार्थस्य विरोधैकापोद्यत्वादिति च प्रयुक्तम्। स्वहतगवीति द्वित्रशाखेति विरोधैकापवाद्यत्वादिति च प्राप्नोति। 'छन्दोऽभिधानाच्च' इत्यधिकरणे गायत्रीनिर्णयोऽवश्यापेक्षित इति 'लिङ्गभूयस्त्वात्तद्धि' इत्यधिकरणे प्रधानस्य प्राबल्यात्तदवश्यापोदितमिति च कृत्याकृत्यविवेकवैधुर्येण प्रयुक्तम्। न हि 'लुम्पेदवश्यमः कृत्ये' इति विहितो लोपः निष्ठान्ते उचितः। तथा 'छन्दोभिधानान्न' इत्यन्यत्रापि बहुषु स्थलेषु समर्थयत्सूत्रमिति प्रयुक्तम्। समर्थयमानमिति तु प्राप्तम्। सांख्याधिकरणे सुधायां मे चैतन्यमिति व्यवहारमात्रमिति प्रयुक्तम्। 'अभ्युपगमेऽप्यर्थाभावात्' इति सूत्रे तत्त्वप्रकाशिकायां मे माता वन्ध्येतिवदिति प्रयुक्तम्। ममेति तु प्राप्नोति, पदात्परत्वाभावेन मयादेशाप्राप्तेः। पूर्वमीमांसा तु मध्वादिभिर्न ज्ञायत इति 'शब्दादेव प्रमितः' इत्यधिकरणे स्फुटीकरिष्यते इति दिक्। तदेवं मध्वाभिमता पञ्चाधिकरणी अनूद्य दूषितेति उत्तरस्य ग्रन्थस्य प्रथमाध्यायशेषस्य प्रवृत्तिं पर इत्थमाह। विष्णोः शास्त्रगम्यत्वे समन्वयो हेतुतयोक्तः। स चोपक्रमादिनात्पर्यलिङ्गरूपः तद्यावत्तत्तद्वाक्यविशेषानुदाहृत्य पूर्वोत्तरपक्षप्रथनेन विष्णोरेवोपक्रमादिरिति न्यायैर्न स्थाप्यते तावत्समन्वयासिद्ध्या विष्णोः शास्त्रगम्यताऽपि न सिध्यति। अन्यथा शैवा अपि शिवपरत्वं समन्वयादित्युपन्यासमात्रेण कथं न ब्रूयुः। अतः समन्वयसिद्ध्यर्थमध्यायशेष आरभ्यत इति। अत्रेदं वक्तव्यम्—उपरितनेषु सर्वेष्वधिकरणेषु विष्णौ समन्वयप्रपञ्चनरूपः सिद्धान्तस्तावदसंगतः, सृष्ट्यादिवाक्यप्रतिपाद्यत्वं विष्णोर्न संभवतीति पञ्चमाधिकरणखण्डन एवोक्तत्वात्। गुणाः सर्वे ध्यानायेति ध्येयं च ब्रह्म नेति ज्ञेयस्य परब्रह्मणोऽनन्तकल्याणगुणपरिपूर्णतेति गुणाः स्वरूपेणात्यन्ताभिन्ना इति च तत्तदधिकरणस्थितत्वात् सिद्धान्तानां परस्परव्याघातस्योद्भटतयोपपादनानपेक्षत्वाच्च। तथा तत्तद्वाक्यानां तत्तदधिकरणपूर्व-

पक्षोपपादितदेवतान्तरपरत्वस्य सिद्धान्तिना क्रियमाणं निराकरणमप्यनुपपन्नम् । विष्णुपराणामपि देवतान्तरपरत्वस्य त्वन्मतेऽपि दुर्वारत्वात् । त्वया हि 'ज्योतिरुपक्रमात्तु' इत्यधिकरणे कृत्स्नः कर्मकाण्डो ब्रह्मपरोऽपीति स्वीकृतम् । 'केन स्यात्' इति वाक्यं चार्थत्रयपरमिति 'स्तुतयेऽनुमतिर्वा' इत्यत्र सिद्धान्तितम् । वह्न्यादिदेवताप्रतिपादकाः सूक्तमन्त्रास्तत्तदुत्तमसकलदेवताविषयत्वेनामितार्था इति अङ्गावबद्धाधिकरणे स्थापितम् । किं बहुना ; 'यस्य त्रीण्युदितानि' इति जल्पता बलित्थेत्यादिमन्त्रा देवतान्तरपरा अपि वायुपरा इति, वराकमध्वप्रतिपादका इति च स्वीकृतम् । एवं च तत्र तत्रैकार्थ्यं त्यजतस्तव विष्णुलिङ्गैर्विष्णुपरत्वमात्रमेव स्यात् , न तु शिवादिपरत्वाभावोऽपि । एवं च विष्णुलिङ्गानां देवतान्तरलिङ्गानां च प्राबल्यदौर्बल्यविचारोऽपि मुधैव, उभयोर्विरोधविरहात् । किं च, प्रायः सर्वेष्वप्रिमाधिकरणेषु साधारणेन ब्रह्मलिङ्गेन विष्णुपरत्वं निर्णयसि । पूर्वपक्ष्यभिमतदेवतान्तरलिङ्गानां प्रवृत्तिनिमित्ततादधीन्यादिभिर्विष्णावेव सावकाशतां च ब्रवीषीत्यग्रे स्फुटीभविष्यति । तच्चायुक्तम्, ब्रह्मलिङ्गानां शिवेऽपि संभवात्, [1]देवतान्तरलिङ्गानामपि शिव एव सावकाशतायाः सुवचत्वाच्च । न [2]ह्यद्यापि विष्णौ समन्वयः सिद्धः, तत्सिद्ध्यर्थमेव त्वया प्रथमाध्यायशेषस्यारब्धत्वात् । तथा चोपक्रान्तसाधनीयार्थविस्मरणेन तस्यैव सर्वत्र हेतूकरणमत्यन्तमयुक्तम् ॥

स्यादेतत् । ब्रह्मशब्दो विष्णुपर एव । उक्तं ह्यनुव्याख्याने—'स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् । स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥ आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा । अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥' इति । टीकायां च—'स विष्णुराह हि, स ब्रह्मेत्याचक्षते इति निरन्तरसूत्रद्वयेन' इत्यादि वर्णितमिति चेत् , न, त्वत्कल्पितदेवशास्त्रस्य तदन्तर्गतसूत्रद्वयस्य च शिवविष्णवोरभेदपरतयाऽपि सुयोजत्वात्, श्वेताश्वतराद्यनुरोधेन शिवो ब्रह्मेत्यस्य चतुर्थसूत्र एवोपपादितत्वात् । तदिह सिद्धान्तस्य बाधः, पूर्वपक्षस्य दुरुद्धरत्वम्, विष्णुपरत्वे साध्ये ब्रह्मलिङ्गानां व्याप्यत्वासिद्धिश्चेति दूषणत्रयमुत्तराधिकरणेषु प्रायेण योज्यम् । विशेषस्तु तत्र तत्र वक्ष्यते ॥

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

तैत्तिरीयाः समामनन्ति—'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' इति । तत्रानन्दमयो हिरण्यगर्भः, तस्यानन्दमयशब्दानुगतार्थशतानन्दनामकत्वात् । रुद्रो वा, 'यश्चासावादित्ये' इति सूर्ये प्रोतत्वावगमात्, अष्टमूर्तेश्च तत्संभवात् ।

1. अवतारा०     2. ह्येषामपि

1. K. 3.

प्रकृतिर्वा, विकारार्थकमयट्श्रुतेः । सर्वजीवा वा, 'बृंह जातिजीवकमलासनशम्बराशिषु' इति धात्वर्थबलात् । सर्वथाऽपि न विष्णुः, निर्विकारत्वात्, तस्यानन्दमयं प्रति अवयवत्वोक्तेश्च, अभेदेऽवयवावयविभावासंभवात् इति पूर्वः पक्षः। तस्यायं संग्रहः—'विधिरीशः प्रकृतिर्वा जीवो वा नैव विष्णुरानन्दमयः । तत्र मयड्डुक्तविकृतेर्विरहात्तस्यादसीयपुच्छत्वाच्च ॥' इति । सिद्धान्तस्तु आनन्दमयो विष्णुरेव । कुतः? 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्' इत्यादिना आनन्दमये ब्रह्मशब्दाभ्यासात्[1]; हिरण्यगर्भप्रभृतीनामपूर्णतया तत्र ब्रह्मशब्दस्य मुख्यवृत्त्ययोगात् । अन्यत्र ब्रह्मरूढिः, विष्णौ तु विद्वद्रूढिरिति सैव प्रबला । सूत्रे आनन्दमय इत्युपलक्षणम्; आनन्दमयादयः पञ्चापि विष्णुरेवेति विवक्षितम्, सौत्रेषु विषयनिर्देशप्रदेशेषु तुल्यन्यायानां विषयान्तराणामवश्यमुपलक्षणीयत्वात्, अन्यथा सूत्रकोट्याऽपि सर्वशाखानिर्णयालाभात् । अस्ति चेह न्यायतौल्यम्, 'येऽन्नं ब्रह्मोपासते । ये प्राणं ब्रह्मोपासते । आनन्दं ब्रह्मणो विद्वान् । विज्ञानं ब्रह्म चेद्वेद ।' इति ब्रह्मशब्दाम्नानेन 'एतमन्नमयमात्मानमुपसंक्रामति' इत्यादिप्रतिपर्यायमात्मशब्दमुक्तप्राप्यत्वयोः श्रवणेन चान्नमयादीनां पञ्चानामपि विष्णुरूपत्वात् ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

प्राचुर्ये मयट् । आनन्दप्रचुरः प्रचुरानन्द इत्यर्थः । एवमन्नमयादावपि । स्यादेतत्; अप्राकृतविग्रहे विष्णावन्नप्राचुर्यार्थो न युज्यते इति चेत्, न; अन्नशब्दो ह्ययम् 'अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति' इति मन्त्रे भूताद्यत्वतदत्तृत्वपरतया निरुक्तः। न च प्रसिद्धान्ने भूतात्तृत्वं संभवति । तथा च प्रचुरभूतोपजीव्यत्वं तदत्तृत्वं चार्थो लभ्यते । प्राणमयत्व प्रचुरजीवयितृत्वं, मनोमयत्वं प्रचुरबोधकत्वम् । न च 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इत्यत्रान्नमयादिशब्दानां कोशपरत्वादिहापि तेषां तत्परत्वं शक्यम्, तत्र प्रकरणे ब्रह्मशब्दाद्यभावेन शुद्धिप्रार्थनालिङ्गेन च तेषां कोशपरत्वेऽपि इह ब्रह्मपरत्वात् । न चान्नमयादीनां ब्रह्मत्वाभ्युपगमे 'एकमेवाद्वितीयम्' इत्यादिश्रुतिविरोधः, एकस्यैव ब्रह्मणो बहुरूपत्वेन पञ्चतोक्तेः[2] ॥

यदुक्तमानन्दमयो विष्णुरिति, तत्र हेत्वन्तरपरं सूत्रम्—

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

'यदेष आकाश आनन्दो न स्यात्' इत्यानन्दरूपो विष्णुर्लोकप्रवर्तकत्वेनोक्तो यत इत्यर्थः ॥

---

1. ब्रह्मशब्दाभ्यासात् 2. पञ्चतोपपत्तेः

किं च,

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

'ब्रह्मविदाप्नोति परम्' इति सूचनया परब्रह्मतज्ज्ञानतत्प्राप्तिकथने शङ्कात्रयमुदेति—किं तद्ब्रह्म, कथं च तद्वेदनम्, कीदृशी च तत्प्राप्तिः इति। तत्राद्यशङ्कापनोदाय लक्षणमुक्तम्—'सत्यं ज्ञानम्' इति। 'यो वेद' इति वेदनम्, 'सोऽश्नुते' इति प्राप्तिः। अतो मन्त्रवर्णैकरूप्याय परमेव ब्रह्मान्नमयादिशब्देन गीयत इति। न चावयवावयवित्वविरोधः, 'स शिरः, स दक्षिणः पक्षः, स उत्तरः पक्षः, स आत्मा, स पुच्छम्' इति चतुर्वेदशिखायां तस्यैवावयवत्वोक्तेः। 'शिरो नारायणः पक्षो दक्षिणः सव्य एव च। प्रद्युम्नश्चानिरुद्धश्च संदोहो वासुदेवकः॥ नारायणोऽथ संदोहो वासुदेवः शिरोऽपि वा। पुच्छं संकर्षणः प्रोक्त एक एव तु पञ्चधा॥ अङ्गाङ्गित्वेन भगवान्क्रीडते पुरुषोत्तमः। ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन्जनार्दने॥ अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा॥' इति बृहत्संहितायाम्। न चैवम् 'अन्योऽन्तर आत्मा' इत्यादिषु श्रुतस्यान्यशब्दस्यानुपपत्तिः, 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः॥' इति ब्रह्माण्डोक्त्या तत्समर्थनात्॥

हिरण्यगर्भादीनामानन्दमयत्वे बाधकोपन्यासार्थं सूत्रम्—

## नेतरोऽनुपपत्तेः ॥ १६ ॥

न ह्यन्यज्ञानान्मोक्ष उपपद्यते, 'नान्यः पन्थाः' इति श्रुतेः। तत्रैव सूत्रान्तरम्—

## भेदव्यपदेशाच्च ॥ १७ ॥

'ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः' इत्यादिषु हिरण्यगर्भादिभ्यो भेदव्यपदेशादित्यर्थः॥

ननु जीवः परस्मान्न भिद्यते, आत्मत्वात्, परमात्मवत्। नेत्याह सूत्रकारः—

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

यथाकाममनुमातुं शक्यत्वान्न श्रुतिविरुद्धमनुमानं न ग्राह्यमित्यर्थः। न च श्रुतीनां व्यावहारिकभेदपरता, अस्मिन्नेव प्रकरणे 'सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा' इति ब्रह्मसहभावोक्त्या मोक्षकालेऽपि भेदसिद्धेः इत्यर्थे सूत्रान्तरम्—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

अस्य जीवस्य तद्योगं ब्रह्मसाहित्यं श्रुतिः शास्ति । तस्मादानन्दमयशब्दोपलक्षितान्न-मयादिपञ्चात्मको विष्णुरेवेति माध्वाधिकरणशरीरम् ॥

इह दोषत्रयं दत्तमेव । किं च, ब्रह्मशब्दस्य विष्णावेव विद्वद्रूढिरिति कुतः? 'तदेव ब्रह्म परमं कवीनाम्' इति श्रुतेरिति चेत्, न, तस्या अपि विष्ण्वेकपरत्वासिद्धेः। 'यमन्तः समुद्रे कवयो वयन्ति' इति प्रसिद्धतल्लिङ्गात्तत्सिद्धिरिति चेत्, न, 'प्रजापतिश्चरति गर्भे अन्तः' 'हिरण्यगर्भ इत्यष्टौ' इति प्रजापतिहिरण्यगर्भश्रुतिभ्यां विरिञ्चैकपरत्वस्य सुवचत्वात्। तथा 'हिरण्यगर्भ इत्यष्टौ' इत्यनेनानुगृहीतात् 'य ईशे अस्य द्विपदश्चतुष्पदः' इति पशुपतित्वलिङ्गात् 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि' इत्युपसंहाराच्छिवपरा साऽस्तु। तस्माच्छ्रुतीना-मनेकार्थत्वं ब्रुवता त्वयाऽत्रापि तथैव वाच्यम्। तर्हि तदेव ब्रह्मेत्यवधारणं कथं योज्यमिति चेत्, त्वन्मते भूमशब्दरीत्या पुरुषभेदेनार्थव्यवस्थासंभवात्। नन्वेवं 'ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः' इति ब्रह्मप्रजापत्योरानन्दे उत्कर्षापकर्षौ कथं स्यातामिति चेत्, ब्रह्मा-नन्दमययोरवयवावयविभाववदिति गृहाण। 'अन्योऽन्तर आत्मा' इति साक्षाद्भेदश्रवणमवि-गणयतस्तव भेदकश्रवणस्याकिंचित्करत्वाच्च। अत एव जीवब्रह्मणोरपि भेदस्त्वया दुःसाध इति प्रथमाधिकरणखण्डन एवावोचाम ॥

किं च त्वन्मते स्वस्मात्स्वस्योत्कर्षापकर्षाविष्टावेव, समयपादे वैशेषिकनिराकरणप्रसङ्गे 'नन्वेवं सति स्वस्मादपि स्वयमुत्कृष्टोऽपकृष्टश्चेत्यागतम्। को नेत्याह' इति सुधायामुक्तत्वात्। यत्तु 'सोऽश्नुते' इत्यत्र ब्रह्मणा सह साहित्यं मोक्षेऽप्युक्तमिति, तन्न, तस्य जीवन्मुक्तिपरत्वात्। यथा हि—सह युगपद्भोगान्भुङ्क्ते। कथम्? ब्रह्मणा ब्रह्मरूपेण अभिव्यक्तब्रह्मानन्दे सर्वानन्दाना-मन्तर्भावादिति भावः। उक्तं हि—'यावानर्थ उदपाने' इत्यादि। तथा च स्कान्दे ब्रह्मगीतायां तैत्तिरीयार्थकथनावसरे उपबृंहितम्—'सोऽश्नुते सकलान्कामानक्रमेण सुरर्षभाः। विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः॥' इति। तथाऽऽनन्दमयादीनां कोशत्वं स्थूलारुन्धतीन्यायेन तदुप-न्यासश्चेत्यपि तत्रैवोपबृंहणेन स्फुटीकृतमिति दिक्। अत एव सूत्राणि पुराणानुरोधात् न्याय-दार्ढ्याच्चान्यथैव व्याख्यातानि श्रीशंकरभगवत्पादैः। माध्वमतखण्डनमात्रोद्देशेन प्रवृत्तेऽस्मिन्ग्रन्थे विस्तरभयाद्विवेचनं न क्रियते ॥

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

'अन्तः प्रविष्टं कर्तारमेतम्' 'अन्तश्चन्द्रमसि मनसा चरन्तम्' 'सहैव सन्तं न विजानन्ति देवाः' 'इन्द्रस्यात्मानं दशधा चरन्तम्' इति श्रूयते। अत्रान्तःप्रविष्टो विष्णोरन्य एव, विष्णुर्वेति संशये 'इन्द्रो राजा' 'सप्त युञ्जन्ति' इत्यादिश्रवणादन्य इति प्राप्ते विष्णुरेवेति सिद्धान्तः। कुतः? तद्धर्मोपदेशात्। 'अन्तः समुद्रे मनसा चरन्तम्' 'यस्याण्डकोशं शुष्ममाहुः प्राणमुल्बम्' इति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपविष्णुलिङ्गादित्यर्थः॥

'इन्द्रस्यात्मानम्' इति षष्ठीबलेनापीन्द्रादन्य एवात्र ग्राह्यः। न च राहोः शिर इतिवत्कथंचित् षष्ठी, मुख्ये बाधकाभावादित्यभिप्रायकं सूत्रम्—

## भेदव्यपदेशाच्चान्यः॥ २१॥

इति माध्वाधिकरणशरीरम्। खण्डनं तु—'अन्तश्चन्द्रमसि मनसा चरन्तम्' 'अन्तरादित्ये मनसा चरन्तम्' इत्यष्टमूर्तेः शिवस्यापि लिङ्गमस्ति। 'प्रजापतिश्चरति गर्भे अन्तः' इति प्रजापतिशब्दरूपा श्रुतिश्च हिरण्यगर्भपराऽस्तीत्यादि पूर्ववत्॥

## आकाशस्तल्लिङ्गात्॥ २२॥

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इति श्रुतौ भूताकाश इति प्राप्ते 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यादिब्रह्मलिङ्गाद्विष्णुरेवाकाशः, प्रवृत्तिनिमित्तवादधीन्यात् तत्राकाशश्रुतेः सावकाशतेति माध्वाधिकरणम्। दोषत्रयं तूक्तम्॥

## अत एव प्राणः॥ २३॥

'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः भुजः करिष्यमाणः यद्देवान् प्राणयो नव' इति श्रुतौ प्राणः प्रसिद्धवायुरिति प्राप्तम्। 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ, अहोरात्रे पार्श्वे' इत्यादिलिङ्गाद्विष्णुरिति सिद्धान्तः। खण्डनं तूक्तमेव॥

## ज्योतिश्चरणाभिधानात्॥ २४॥

'वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्' इति मन्त्रे अग्निमुक्त्वा-तत्प्रसिद्धेश्चाग्निरेव ज्योतिःशब्दार्थ इति प्राप्ते कर्णादिविरुद्धचरणेन कर्णाद्यपरिच्छेद्यवैभवरूपेण विष्णुरेव ज्योतिः। ज्योतिःशब्दस्य पूर्वोत्तरमन्त्रगताग्न्यादिशब्दानां च प्राग्वद्विष्णौ सावकाशतेति माध्वाधिकरणशरीरम्। खण्डनं प्राग्वत्॥

## छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात् तथा हि दर्शनम् ॥

छान्दोग्ये श्रूयते—'गायत्री वा इदं सर्वं भूतं यदिदं किं च वाग्वै गायत्री वाग्वा इदं सर्वम्' इत्यादि। तत्र गायत्री छन्दोविशेष एवेति प्राप्ते विष्णुरेवेति सिद्धान्तः। गायत्र्यादिशब्दार्थभूतोऽसाविति चेतोर्पणार्थं हि तथा निगद्यते। तथा हि दर्शनं-'गायति च त्रायति च' इति ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

'एतावानस्य महिमा। अतो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि' इति पुरुषसूक्तमन्त्रो हि 'तदेतदृचाऽभ्युक्तम्' इत्यादिना अत्र संवादायोदाहृतः। एवं च भूतादिपादव्यपदेशो विष्णावेव संगच्छते। अतोऽपि स एव गायत्रीति सूत्रार्थः ॥

स्यादेतत्। अस्मिन्नेव प्रकरणे 'यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रूयते। तत्र ज्योतिषो दिवः परत्वोक्त्या गायत्र्यास्तु 'त्रिपादस्यामृतं दिवि' इति सुस्थितत्वोक्त्या परस्परविरोधात् ज्योतिर्गायत्रीशब्दयोरन्यतरस्य विष्णुपरत्वं त्याज्यमित्याशङ्क्य समाधत्ते सूत्रकारः—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

विवक्षाभेदेन सप्तमीपञ्चम्योरेकत्र सुयोजत्वादित्यर्थः। अत्रापि प्राग्वद्दोषत्रयं स्पष्टम् ॥

## प्राणस्तथाऽनुगमात् ॥ २८ ॥

ऐतरेयकब्राह्मणे श्रूयते—'ता वा एताः शीर्षं श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः—' इत्यादि। तत्र प्राणो वायुरेवेति प्राप्ते विष्णुरेवेति सिद्धान्तः। कुतः? तथाऽनुगमात्; विष्णुलिङ्गानामस्मिन् प्राणेऽनुस्यूतेरित्यर्थः। तथा हि—'तं देवाः प्राणयन्त तं भूतिरिति देवा उपासांचक्रिरे' इति देवोपास्यत्वं ब्रह्मलिङ्गम्। तथा—'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋचः इत्येव विद्यात्' इति सर्ववेदोक्तत्वमपि ब्रह्मलिङ्गम्। 'एतद्ब्रह्म ब्रह्मणो लोके ब्रह्मेमं पुरुषमुदरं ब्रह्म' इत्यादिब्रह्मशब्दाभ्यासाच्च।

स्यादेतत्। 'तमिन्द्र उवाच—ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति। स होवाच—त्वामेव जानीयामिति। तमिन्द्र उवाच—प्राणो वा अहमस्म्यृषे' इति विश्वामित्रं प्रति इन्द्रेण प्राण आत्मतयोपदिष्टः। स कथं परमात्मा स्यादित्याशङ्कायां सूत्रम्—

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥**

विष्णुलिङ्गानां बहुत्वात्प्राबल्यमित्यर्थः ॥

नन्वेवमपि इन्द्रेण मयि प्राण इति वक्तव्ये अहमिति कथमुक्तमित्याकाङ्क्षायां सूत्रम्—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥**

यथाऽन्तर्यामिदृष्ट्या वामदेवः 'अहं मनुरभवम्' इत्यादि प्रायुङ्क्त, न त्वभेदाभिप्रायेण तथेहापीति भावः । 'शास्त्रमन्तर्यामिसंविच्छास्त्रं परं पदम्' इति भागवते । 'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः । न क्वापि किंचिन्नाभास्ति तमृते पुरुषोत्तमम् ॥' इति च पाद्मे ॥

स्यादेतत् । उक्तः प्राणो न विष्णुः 'प्राणो वाव तदभ्याच्छैत् प्राणो ह्येषः' इत्युपक्रम्य 'तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' इति शतायुष्ट्वरूपजीवलिङ्गाम्नानात् 'प्राण उदक्रामत प्राणः प्राविशत्' इति उत्क्रमणप्रवेशादिमुख्यप्राणलिङ्गाच्चेति चेत्, न, लिङ्गानां तदन्तर्यामिविषयत्वात् । किमर्थमन्तर्यामिकथनमिति चेत्, अन्तर्बहिः सर्वत्र चेति त्रेधाऽप्यधिकारिभेदेनोपासनार्थमित्याह—

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥**

'केषांचित्सर्वगत्वेन केषांचिद्धृदये हरिः । केषांचिद्बहिरेवासावुपास्यः पुरुषोत्तमः ॥'

इति ब्राह्मे । अत्रापि दोषत्रयं प्राग्वत् । किं च 'शास्त्रदृष्ट्या तूपदेशः' इति सूत्रं जीवब्रह्मणोरभेदमेवाह । बाधकाभावस्तूक्तः । लाघवसहकृताः श्रुतिस्मृतयश्च साधिकाः ॥

इति तत्त्वकौस्तुभे द्वितीयपरिच्छेदे प्रथमाध्यायस्य प्रथमः पादः ॥

॥ प्रथमाध्यायस्य द्वितीयः पादः ॥

ऐतरेयके श्रूयते—'एतं सर्वेषु भूतेषु' इति। तत्र सर्वगतत्वेनाम्नायमानः आदित्यो वा, सर्वजीवा वा, विष्णुर्वेति संशये आदित्य इति प्राप्तम्, 'तस्यैतस्यासावादित्यो रसः' 'यश्चासावादित्ये' इत्यादिषु प्राचीनवाक्येषु बहुधा आदित्यश्रुतेः। अथवा सर्वे जीवाः सर्वगताः 'चक्षुर्मयः श्रोत्रमयः' इत्याद्युत्तरवाक्यात्। सिद्धान्तस्तु विष्णुरेवेति। अत्र हेतुमाह—

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

सर्वत्रेत्युक्तो विष्णुरेव, विष्णावेव प्रसिद्धब्रह्मशब्दस्य सर्वगतत्वस्य चोपदेशात्। श्रूयते हि—'एतमेव ब्रह्मेत्याचक्षते' इति। स्मर्यते च—'वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत्। स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः॥' इति। 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥' इत्यादिश्रुतिषु हि विष्णोरेव सर्वगतत्वं प्रसिद्धम्॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

'को नु ब्रह्मशब्दोदितो भवेत्, स योऽतो श्रुतः' इत्यादिना वक्तव्यानां गुणानां विष्णावेव भावादित्यर्थः॥

## अनुपपत्तेस्तु न शारीरः॥ ३ ॥

जीवस्याणुत्वेन सर्वगतत्वानुपपत्तेरित्यर्थः॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

'आत्मानं परस्मै शंसति' इति वाक्यशेषे कर्तृतयोक्ताज्जीवात्कर्मतयोक्तस्य भेदादित्यर्थः॥

## शब्दविशेषात् ॥ ५ ॥

ब्रह्मशब्दोपदेश इह शारीरस्याग्रहणे हेतुतयोच्यते। पूर्वं तु विष्णोर्ग्रहणे॥

## स्मृतेश्च ॥ ६ ॥

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इत्यादिस्मरणादित्यर्थः॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

सर्वभूतेष्वित्यल्पाश्रयत्वोक्तेश्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च न विष्णुरिति चेत्, न, तस्यैवैवमुपास्यत्वात्, व्योमवत्सर्वगतत्वेऽप्यर्भकौकस्त्वसंभवाच्च॥

## संभोगप्राप्तिरिति चेन्न, वैशेष्यात् ॥ ८ ॥

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न, सामर्थ्यवैशेष्यात् । उक्तं हि गारुडे—'सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः । स्वातन्त्र्यपारतन्त्र्याभ्यां संभोगो नेशजीवयोः ॥' इति । खण्डनं प्राग्वत् ॥

बृहदारण्यके श्रूयते—'स यद्यदेवासृजत तत्तदत्तुमाद्रियत । सर्वं वा अत्तीति तददितेरदितित्वम्' इति । तत्रात्ता क इति संशये अदितिश्रुतिबलाददित्याख्यो देवताविशेष इति प्राप्ते, सिद्धान्तमाह—

## अत्ता चराचरग्रहणात् ॥ ९ ॥

अत्ता विष्णुरेव, सर्वसंहर्तृत्वादित्यर्थः ॥

## प्रकरणाच्च ॥ १० ॥

'इदं सर्वमसृजत' इत्यादिलिङ्गाद्विष्णोरेव प्रकरणमित्यर्थः । खण्डनं प्राग्वत् ॥

कठवल्लीषु श्रूयते—'[1]अमृतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' इत्यादि । अत्र पिबन्ताविति प्रतीयमानं कर्मफलभोक्तृत्वं यद्यपि जीवयोर्न, एकस्मिन्नेव शरीरे भोक्तृजीवद्वयायोगात्, तथाऽपि जीवेशयोस्तदिति प्राप्ते, सिद्धान्तमाह—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

पिबन्तौ विष्णुरूपे एव, गुहाप्रवेशरूपलिङ्गात् । 'घर्मौ समन्तात्त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' इत्यादिना तद्दर्शनात् । घर्मौ दीप्तौ समन्ताद्व्याप्तौ भगवन्तौ तेजोऽब्अन्नात्मकं शरीरं विशेषेण गुहास्थाने प्राप्तौ तयोः सेवां कर्तुं मातरिश्वाऽपि त्रिवृतं जगामेति श्रुत्यर्थः । 'आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्मजम् ॥' इति बृहत्संहितायाम् । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ॥' इति पाद्मे । पूर्णानन्दरूपोऽप्यसौ अचिन्त्यैश्वर्यबलेन शुभकर्मफलं भुङ्क्ते, 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति श्रुतेः । अत एव 'अनश्नन्नन्यः' इति श्रुतिरशुभभोगाभावविषयेति भावः । हिशब्देन 'यो वेद निहितं गुहायाम्' इत्यादिप्रसिद्धिं दर्शयति ॥

## विशेषणाच्च ॥ १२ ॥

'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' इति ब्रह्मशब्देन विष्णोरेव लाभादित्यर्थः । खण्डनं तूक्तम् ॥

---

1. ऋतं

छान्दोग्ये श्रूयते—'य एषोऽक्षिणि पुरुषो दृश्यते' इति । तत्राक्षिस्थः पुरुषोऽग्निर्विष्णुर्वेति संशये अग्निरिति प्राप्तम्, 'य एष आदित्ये पुरुषः सोऽहमस्मि' इत्यभिवचनात् । न चादित्यस्थत्वोक्त्याऽक्षिस्थत्वं कथमायातमिति वाच्यम्, 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' इति श्रुत्या आदित्यस्याक्षिस्थत्वेन तत्सिद्धेः । अत्र सिद्धान्तमाह—

## अन्तर उपपत्तेः ॥ १३ ॥

चक्षुरन्तःस्थो विष्णुरेव, 'एतदमृतमभयम्' इत्यादिनोक्तानाममृतत्वादीनां विष्णावेवोपपत्तेः । 'सोऽहमस्मि' इति तु अन्तर्याम्यपेक्षया । 'अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि । सर्वशब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु ॥' इति महाकौर्मे ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

'तद्यद्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव तद्गच्छति' इति स्थानशक्तिः 'वामनीः, भामनीः' इत्याद्यात्मशक्तिश्च व्यपदिश्यमाना तल्लिङ्गमित्यर्थः । 'स ईशः सोऽसपत्नः स हरिः स परः परोवरीयान् य इदं चक्षुषी सर्पिर्वोदकं वा सिञ्चति वर्त्मन्येवागच्छति स भामनः स वामनः स आनन्दः सोऽच्युतः' इति चतुर्वेदशिखायाम् । 'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः । स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत् ॥' इति वामने ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

'कं ब्रह्म' इति सुखविशिष्टत्वोक्तेरित्यर्थः । 'लक्षणं परमानन्दो विष्णोरेव न संशयः । अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिनः ॥' इति ब्रह्मवैवर्ते ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

'स एनान् ब्रह्म गमयति' इत्यभिधीयमाना गतिरप्यत्र लिङ्गम्, 'मद्भक्ता यान्ति मामपि' इत्युक्तेः । पूर्वपक्षे त्वग्निप्राप्तिरेवोच्यते, 'देवान् देवयजो यान्ति' इत्युक्तेः ॥

एवं चतुःसूत्र्या सिद्धान्ते साधकमभिधाय पक्षान्तरे बाधकमाह—

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

तत्तत्प्रेरकत्वेनाभिप्रेतश्चक्षुःस्थो नाग्निः, अस्य नियामकत्वेऽनवस्थापत्तेः, जीवे तादृशशक्त्यसंभवाच्चेत्यर्थः । खण्डनं प्राग्वत् ॥

वाजसनेयके—'एष त आत्माऽन्तर्याम्यमृतः' इति श्रूयमाणोऽन्तर्यामी किं प्रकृतिर्जीवो विष्णुर्वेति संशये 'यस्य पृथिवी शरीरम्' इत्यादिश्रवणात्प्रकृतिर्जीवो वेति प्राप्ते, सिद्धान्तमाह—

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

अन्तर्यामी विष्णुरेव, अविदितान्तरत्वादिरूपतद्धर्मश्रवणात् ॥

प्रकृतेरन्तर्यामित्वं निराचष्टे—

**न च स्मार्तम् अतद्धर्माभिलापात् ॥ १९ ॥**

स्मृत्युक्तं प्रधानं नान्तर्यामी, त्रिगुणत्वादिप्रधानधर्माणामिहानुक्तेः ॥

जीवस्य तन्निराचष्टे—

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥**

नेत्यनुवर्तते । शारीरो जीवोऽपि नान्तर्यामी ; 'आत्मनोऽन्तरः' इति माध्यंदिनाः 'विज्ञानादन्तरः' इति काण्वाश्च जीवमन्तर्यामिणः सकाशाद्भेदेन यतो वदन्ति । 'शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत्' इति वचनात् न शरीरत्वविरोधः । खण्डनं प्राग्वत् ॥

आथर्वणे श्रूयते—'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम्' इत्यादि । तददृश्यत्वादिगुणकं वस्तु विष्णुः, अन्य इति संशये, अन्यदेवेति प्राप्तम् । तथा हि—अदृश्यत्वादिगुणके अक्षरत्वं श्रुतम् । अक्षरश्च न विष्णुः, 'अक्षरात्परतः परः' इति ततोऽप्युत्कृष्टस्याभिधानात् । न हि विष्णोरपि परोऽस्ति । तस्मादिह जडप्रकृतिरेवाक्षरम् । 'तथाऽक्षरात्संभवतीह विश्वम्' इति पृथिव्यादिदृष्टान्तेनोक्तमुपादानं हि तदेव ; तदेव चादृश्यत्वादिगुणकम् । चेतनप्रकृतिर्वा, तत्राप्यक्षरशब्दस्य स्मृतिसिद्धत्वात् । विकारित्वेन जगत्कारणत्ववचनं च तस्या विकाराभिमानित्वादुच्यते । हिरण्यगर्भो वा, 'स ब्रह्मविद्याम्' इति ब्रह्मशब्दात् । रुद्रो वा, 'कर्तारमीशं पुरुषम्' इति ईशशब्दात् । एवं प्राप्ते, सिद्धान्तमाह सूत्रकारः—

**अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥**

अदृश्यत्वादिगुणको विष्णुरेव, 'अथ परा यया तदक्षरमधिगम्यते' इति परविद्याविषयत्वस्य विष्णुधर्मस्योक्तेः । 'द्वे विद्ये' इत्यत्र च यदा अन्यविषयतया योज्यते तदा तस्या अपरविद्यात्वम्, हरिपरत्वे तु परविद्यात्वमिति बोध्यम् । तदुक्तम्—'ऋगाद्या अपरा विद्याः यदा विष्णोर्न वाचकाः । ता एव परमा विद्याः यदा विष्णोस्तु वाचकाः ॥' इति ॥

अर्थान्निरस्तप्रायाणि पक्षान्तराणि युक्त्यन्तरेण निराकर्तुं सूत्रान्तरम्—

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥**

न प्रकृतिः, 'यः सर्वज्ञः सर्ववित्' इति विशेषणात्। नापि हिरण्यगर्भः, 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इत्यक्षरात्तदुत्पत्तिकथनेन भेदलाभात्। नापि रुद्रः, 'अन्यमीशमस्य' इति श्रुतेः। अन्यं प्रसिद्धरुद्रादिविलक्षणमीशं यदा पश्यतीति हि तस्याः श्रुतेरर्थः। तदुक्तम्—विशेषणभेदव्यपदेशाभ्यामिति।

विष्णोरेवादृश्यत्वादिगुणकत्वे युक्त्यन्तरकथनार्थं सूत्रम्—

**रूपोपन्यासाच्च ॥ २३ ॥**

'यदा पश्यः पश्यते रुक्मवर्णम्' इति हिरण्यवर्णता श्रुता। सा च विष्णोरेव, 'तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि—शुक्लं रक्तं रौक्मं कृष्णम्' इति श्रुतेः। 'अक्षरात्परतः परः' इति तु प्रकृतस्याक्षरस्याक्षराभिधानादन्यस्मात्परत्वं गृहीत्वा योज्यम्। उक्तं हि स्कान्दे—'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया॥ तामक्षरं परं प्राहुः परतः परमक्षरम्। हरिमेवाखिलगुणमक्षरत्रयमीरितम्॥' इति। खण्डनं प्राग्वत्॥

छान्दोग्ये श्रूयते—'यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति। तत्र वैश्वानरोऽग्निरिति प्राप्ते, सिद्धान्तार्थं सूत्रम्—

**वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥**

वैश्वानरो विष्णुरेव, अग्नाविष्ण्वोः साधारणस्यापि वैश्वानरशब्दस्यात्मशब्देन विशेषेऽवस्थापनात्, अभितो विगतं मानं मर्यादा यस्येति विग्रहेण सर्वगतत्वलाभाच्च। किं च,

**स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥**

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति स्मर्यमाणमिहापि तस्यैव ग्रहणे लिङ्गमिति सूत्रार्थः। सूत्रे इति स्मर्यमाणमिति योजनया इतिशब्दः समाख्यां सूचयति। समा एकरूपा आख्या प्रतीतिः समाख्या॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषविधमपि चैनमधीयते ॥ २६ ॥**

ननु नायं विष्णुः, 'अयमग्निर्वैश्वानरः' इति बृहदारण्यके 'वैश्वानरमृत आजातम्' इत्यादृक्षु चाग्निशब्दसामानाधिकरण्यात्। 'वैश्वानरे तद्धुतं भवति हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः' इत्यादिलिङ्गेभ्यः। बृहदारण्यके—'येनेदमन्नं पच्यते' इति। छान्दोग्ये च—'तद्यद्भक्तं

प्रथममागच्छेत्तद्धोमीयम्' इत्यादिना पाचकत्वेनान्तःप्रतिष्ठानप्रतीतेश्चेति चेन्न, अग्नेर्यानि नामलिङ्गानि कर्माणि तद्वत्तया विष्णोरुपास्यत्वोपदेशात्। श्रूयते हि महोपनिषदि—'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूपः' इत्यादि। अत्र प्रथम इतिशब्दो विधिसमाप्तौ। द्वितीयस्य तु इत्युपासीतेत्यन्वयः, 'को न आत्मा किं ब्रह्म' इत्यारम्भात्, अन्येषामसंभवाच्च। अपि च 'चन्द्रमा मनसो जातः' इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र वैश्वानरमधीयते—'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा' इत्यादिना। न चाभेदविरोधः, 'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः। तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम्॥' इति नारदीयवचनात्॥

## अत एव न देवता भूतं च॥ २७॥

यद्यपि वैश्वानरशब्दो देवतायां तेजोरूपे भूते च प्रसिद्धः, तथाऽपि नात्र ते ग्राह्ये, आत्मशब्दादिहेतोरेवेत्यर्थः॥

## साक्षादप्यविरोधं जैमिनिः॥ २८॥

वैश्वानरादयः शब्दाः साक्षाद्विष्णोरेव वाचकाः। अविद्वांसस्तु तैरन्यम्व्यवहरन्तीति अविरोधं जैमिनिर्मन्यते, 'यो देवानां नामधा एक एव' इति श्रुतेः॥

नन्वेवं वैदिकानामग्निसूक्तादिप्रसिद्धिः कथमित्यत आह—

## अभिव्यक्तेरित्याश्मरथ्यः॥ २९॥

तत्र सूक्ते विष्णोरेव प्रतिपाद्यत्वेऽपि अग्न्यादिसूक्तैर्ब्रह्मोपासनायां कृतायामग्न्यादिष्वेव स्वेच्छया ब्रह्मणोऽभिव्यक्तिनियमात्तदभिप्रायेण तथा प्रसिद्धिरित्याश्मरथ्यो मन्यते॥

## अनुस्मृतेर्बादरिः॥ ३०॥

तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव विष्णोः प्रतिपत्तव्यताभिप्रायेण तथा प्रसिद्धिरिति बादरिर्मन्यते॥

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति॥ ३१॥

'साक्षादप्यविरोधम्' इति सूत्रोक्तरीत्या लौकिकव्यवहारेऽज्ञरूढ्याऽप्यविरोधं वदन् जैमिनिः सूक्तादिव्यवहारस्याग्न्यादिसंप्राप्त्या निर्वाहं वक्तीत्यर्थः। तथा हि दर्शयति श्रुतिः—'तं यथोपासते तदेव भवन्ति' इति। भू प्राप्तौ; भवन्ति प्राप्नुवन्तीत्यर्थः॥

स्यादेतत्। अग्न्यादिसूक्तादिभिर्ब्रह्मोपासकस्याग्निप्राप्तिरिति न युक्तम्, 'मद्भक्ता यान्ति

मामपि' इति वचनात्, अन्योपासकस्यान्यप्राप्तेरयोगात्। 'श्रुतोपनिषत्कगत्यभिधानाच्च' इत्यादौ तथाऽनभ्युपगमाच्चेत्याशङ्कां समाधत्ते सूत्रकारः—

**आमनन्ति चैनमस्मिन् ॥ ३२ ॥**

एनं विष्णुमग्न्यादावामनन्ति—'यो अग्नौ तिष्ठन्' 'य एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः' इत्यादिना। तथा च विष्णूपासकस्याग्न्यादिप्राप्तिर्नायुक्ता, अग्न्यादिप्राप्तिरित्यनेन तदन्तर्गतभगवत्प्राप्तेरेव विवक्षितत्वादित्यर्थः। खण्डनं प्राग्वत्॥

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे प्रथमाध्यायस्य
द्वितीयः पादः॥

---

## ॥ प्रथमाध्यायस्य तृतीयः पादः ॥

---

आथर्वणे श्रूयते—'यस्मिन् द्यौः पृथिवी चान्तरिक्षम्' इत्यादि। तत्र द्युभ्वाद्यायतनं किमिति वीक्षायां रुद्र इति प्राप्तम्, 'रुद्रो वाव लोकधारः' इति श्रुतेः। प्रकृतिर्वा, द्युभ्वादीनां प्रकृतिकार्यत्वात्। जीवो वा, 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इति द्युभ्वाद्यायतने जीवलिङ्गश्रवणाज्जीवस्य प्राणित्वप्रसिद्धेश्च। वायुर्वा, 'वायुना वै गौतम सूत्रेण' इत्यादिश्रुत्या वायोर्लोकाधारत्वप्रतीतेः॥ सिद्धान्तार्थं सूत्रम्—

**द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥**

द्युभ्वादेराधारो विष्णुरेव, 'तमेवैकं जानथ आत्मानम्' इत्यात्मशब्दात्। 'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम्। न संभवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता॥' इति ब्रह्मवैवर्ते। किं च,

**मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥**

'अमृतस्यैष सेतुः' इति मुक्तप्राप्यत्वोक्तेरिति सूत्रार्थः॥

**नानुमानमतच्छब्दात् ॥ ३ ॥**

अनुमानात्मकागमपरिकल्पिते रुद्रप्रकृती नेह ग्राह्ये, तत्समर्पकशब्दाभावात्। 'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्' इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्। ब्रह्माण्डे च—'रुजं द्रावयते यस्माद्रुद्रस-

स्माज्जनार्दनः । ईशानादेव चेशानो महादेवो महत्त्वतः ॥ पिबन्ति ये नरा नाकं मुक्ताः संसार-सागरात् । तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥ शिवः सुखात्मकत्वेन शर्वः [1]संरोधनाद्धरिः । कृत्त्यात्मकमिमं देहं यतो वस्ते प्रवर्तयन् ॥ कृत्तिवासास्ततो देवो विरिञ्चिश्च विरेचनात् । बृंहणाद्ब्रह्मनामासावैश्वर्यादिन्द्र उच्यते ॥ एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः । वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ॥' इति । वामने च—'न तु नारायणादीनां नाम्नामन्यत्र संभवः । अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः ॥' इति । स्कान्दे च—ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् [2]राजेवर्ते स्वकं पुरम् ॥' इति । 'चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति । उग्रो भस्मधरो नग्नः कपालीति [3]शिवस्य च । विशेषनामानि ददौ स्वकीयान्यपि केशवः ॥' इति ब्राह्मे । एवं रुद्रादिशब्दानां विष्णौ योगमुक्त्वा 'वेदेषु सपुराणेषु गीयते' इत्युक्त्या विद्वद्रूढिकथनाच्छ्रुत्यन्तरेऽपि विष्णोः प्रतिपाद्यत्वनिश्चयो युक्तः, रूढिमात्रान्महायोग-विद्वद्रूढ्योः प्राबल्यादिति भावः ॥

## प्राणभृच्च ॥ ४ ॥

प्रागुक्तहेतूनां नञश्च समाकर्षणार्थश्चकारः । जीववायू नेह प्राह्यौ, आत्मशब्दात् मुक्तोपसृप्यत्वोक्तेः अतच्छब्दाच्चेति सूत्रार्थः ॥

नन्वात्मशब्दादिकं जीवेऽपि संभवत्येव, तस्य वस्तुतो ब्रह्माभेदादित्याशङ्क्य नेत्याह—

## भेदव्यपदेशात् ॥ ५ ॥

'जुष्टं यदा पश्यत्यन्यमीशम्' इति भेदोक्तेरित्यर्थः ॥

## प्रकरणात् ॥ ६ ॥

'द्वे विद्ये वेदितव्ये' इति परविद्याविषयवस्तुनोऽत्र प्रकरणादीशशब्दो विष्णुपर एवेति तस्यैव भेद उक्त इति भावः ॥

## स्थित्यदनाभ्यां च ॥ ७ ॥

जीवेशयोर्भेदे हेत्वन्तरपरमिदं सूत्रम्, 'द्वौ सुपर्णौ' इति श्रुतेरिति भावः । संयुक्तौ सखायौ द्वौ सुपर्णरूपौ जीवेशौ देहाख्यं पिप्पलवृक्षमालिलिङ्गतुः । तयोर्मध्ये अन्यो जीवः अश्वत्थफलरूपं देहजनितकर्मफलमस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरः तदनश्नन् अभितः प्रकाशत इति हि गुहाधिकरणाविरोधेन श्रुत्यर्थः । न च मिथ्याभेदानुवादित्वं श्रुतेः, अप्रामाण्या-पातात् । तस्माद्विष्णुरेव द्युभ्वाद्यायतनं न त्वन्यदिति भाष्याधिकरणशरीरम् । खण्डनं प्राग्वत् ॥

---

1. संबोधनाद्धरिः 2. राजेवैतत् 3. शिवः परः

यत्तु 'सोऽन्तकः स रुद्रः' इत्यादिवचनमुदाहृतम्, तदद्वैताभिप्रायकमेव । तथा च कैवल्योपनिषदि—'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठम्' इत्याद्युक्त्वा 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः' इति चोक्त्वा 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये' इत्युक्तम् । एवमथर्वशिरःप्रभृतिष्वपि स्पष्टम् । यदपि विष्णौ विद्वद्रूढिः निरवधिकैश्वर्यरूपमहायोगश्चेत्युक्तम्, तच्छिवेऽपि तुल्यम् । तथा च मन्त्रवर्णः—'तव श्रिये मरुतो [1]मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् । पदं यद्विष्णोरुपमं [2]निधायि [3]' इति । उपबृंहितं च पाराशरोपपुराणे—'रौद्रं लिङ्गं महाविष्णुर्भक्त्या शुद्धं शिवालयम् । चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम् ॥' इति । तथा विष्णुरित्थेति मन्त्रे अस्याग्नेः परमं शिवस्वरूपं ज्ञातवतो विष्णोः बृहत्त्वं तृतीयलोकपालकत्वाद्युक्तम् । अत एव 'अस्य देवस्य' इति मन्त्रे विष्णोः पूजने सति यन्महत्त्वं लभ्यते तद्रुद्र एव जानाति यतो रुद्रीयं तदित्युक्तम् । तथा पाद्मे—'श्रुतानि सर्वशास्त्राणि पुराणान्यखिलानि च । धर्मशास्त्राणि सर्वज्ञ त्वत्तः सूत महामते । अस्माकं संशयः कश्चित्' इत्युपक्रम्य, 'को देवः परमो ज्यायान्कथं चाराध्यते हि सः' इति पृष्टे सनत्कुमारविष्णुसंवादमुखेनोत्तरितम् । तत्रेदं विष्णुवचनम्—'एक एव शिवो ज्यायान् द्विधा च बहुधा श्रुतः । वेदेषु च पुराणेषु साङ्गोपाङ्गेषु गीयते । सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि पञ्चैव ज्ञेयस्त्वेको महेश्वरः ॥ सर्वाकारो निराकारो महात्मा पार्वतीपतिः । तस्मात्परतरं नास्ति ज्ञानज्ञेयात्सदाशिवात् ॥' इति । तथा महाभारते आरण्यके—'ततो गच्छेत्सुवर्णाक्षं त्रिषु लोकेषु विश्रुतम् । यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा[4] ॥' इति । द्रोणपर्वणि—'देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः । सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं सदा । तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥' इति । आनुशासनिके इन्द्रं प्रत्युपमन्युवचनम्—'यस्य ब्रह्मा च विष्णुश्च त्वं च शक्र सहामरैः । [5]अर्चयध्वे [6]सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि सः ॥' इति । भागवते चतुर्थस्कन्धे षष्ठाध्याये देवान्प्रति ब्रह्मणो वचनम्—'नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् । विदुः प्रमाणं बलवीर्ययोर्वा [7]तस्यात्मतन्त्रस्य क उपायं विधित्सेत् ॥' इति । अष्टमस्कन्धे सप्तमेऽध्याये—'न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् । ज्योतिः परं यत्र रजस्तमश्च स त्वं न यद्ब्रह्म निरस्तभेदम् ॥' काशीखण्डे चतुर्भुजाभिषेकाध्याये स्पष्ट एव शिवोत्कर्षः । यत्तु, नवीनः सत्त्वप्रयुक्तं विष्णोराधिक्यमिति तन्न, शिवेऽपि सुवचत्वात् । उक्तं हि सूतगीतासु—'यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणः । संहाराय

---

1. मज्जयन्त ; दुर्जयन्त 2. निधायाति 3. तेन पासि गुह्यं नाम गोनाम् 4. सुराः
5. अर्चयध्वम् 6. महालिङ्गम् 7. तस्यात्मतत्त्वस्य कलां विधत्से

त्रिमूर्तीनां स रुद्रः स्यान्न चापरः ॥' इत्यादि। कौर्मे विंशाध्याये—'तमूचुर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः। मोचयेत्सत्त्वसंयुक्तः पूजयेशमतो हरम् ॥' इति। कस्तर्हि पुराणानां परस्परकलहस्य समाधिः? इति चेत्, अद्वैतमेवेति चतुर्थाधिकरणभङ्ग एवोक्तम्। उक्तं च वायुपुराणे—'तपसा तोषयित्वा तु पितरं परमेश्वरम्। ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत्। [1]कल्पान्तरे पुरा ब्रह्मा रुद्रविष्णू जजान ह। विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्प्रभुः[2]। नारायणं पुनर्ब्रह्मा[3] ब्रह्माणं च पुनर्भवः। एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः। परस्परस्माज्जायन्ते परस्परजयैषिणः। तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः। प्रभावः कथ्यते तेषां परस्परसमुद्भवात्। अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः। यातुधाना भवन्त्येव पिशाचाश्च न संशयः॥' इति। भारते खिलेषु भविष्यत्पर्वणि पञ्चचत्वारिंशेऽध्याये "ईश्वरः—'रामोऽहं तु भविष्यामि विष्णवंशेन समन्वितः। दशाननपुरोगाणि हनिष्ये तानि संयुगे। ऋक्षवानररूपेण यूयमत्र जनिष्यथ॥' मातङ्गः—'इत्युक्ता भूतनाथेन देवदेवेन राघव। तुष्टाः सुरगणाः सर्वे दिवं जग्मुर्यथासुखम्। स त्वं राम महाबाहो शंकरो लोकशंकरः। वधार्थं राक्षसेन्द्राणां जातो रघुकुलोत्तमे[4]॥'" इति। पाद्मे सृष्टिखण्डे—'सर्गस्य प्रतिसर्गस्य स्थितेः कर्ता जनार्दनः। सर्गे वै रजसा युक्तः सत्त्वस्थः परिपालने॥ प्रतिसर्गे तमोद्रिक्तः स एव त्रिविधः क्रमात्। विशुद्धोऽयं ततः कृष्णः पुराणः शिव उच्यते॥' इति। अत एव 'यो ब्रह्मविष्णुरुद्राणां भेदोत्कर्षौ स्वभावतः। साधयेदुदरव्याधियुक्तो भवति मानवः॥' इत्यादिमहार्णवायुदाहृतं कर्मविपाकस्मृतिजातं संगच्छते॥

यत्तु 'अन्यमीशम्' इति भेदे प्रमाणमुपन्यस्तं तन्न, त्वद्रीत्या 'अन्योऽन्तरः' इतिवदुपपत्तेः। अस्माकं तु व्यावहारिकप्रामाण्यं भेदे, तत्त्वावेदनरूपं तु ब्रह्मण्येवेत्यभ्युपगमात्। उक्तं च स्कान्दे—'व्यावहारिकसत्यार्थं साक्षात्सत्यार्थचिद्घनम्। उभयं वक्ति वेदस्तु' इति। तस्माद्द्वैतमेव श्रुतिस्मृतितात्पर्यगोचर इति स्थितम्॥

छान्दोग्ये श्रूयते—'यो वै भूमा तत्सुखम्' इति। तत्र भूमा किं वायुः, उत विष्णुरिति विशये, वायुरेवेति प्राप्तम्। अत्र हि नामवागादितारतम्यमाशावसानमुक्त्वा 'प्राणो वा आशाया भूयान्' इति प्राणस्याशोत्तमत्वं चाभिधाय तत उत्तममनुक्त्वा भूमा आम्नातः। न च प्राणोऽपि विष्णुरेव 'अत एव प्राणः' इति न्यायेनेति वाच्यम्, 'उत्क्रान्तिप्राणान्' इति वाक्यशेषावगतस्योत्क्रमणस्य सर्वगते हरावसंभवात्। एवं प्राप्ते, सिद्धान्तमाह—

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

भूमा विष्णुरेव, संप्रसादात्, पूर्णसुखरूपत्वात्, सर्वेषामुपर्युपदेशाच्च॥

---

1. कल्पान्तेषु 2. पुनः 3. सदा पूर्णम् 4. रघुषु सत्तम

## धर्मोपपत्तेश्च ॥ ९ ॥

इति सूत्रान्तरम् । 'स एवाधस्तात्' इत्यादिनोक्तस्य सर्वगतत्वादेर्विष्णावेव संभवादित्यर्थः । उत्क्रमणं तु सर्वगतस्यापि विष्णोः रूपान्तरविवक्षया 'तमुत्क्रामन्तम्' इत्यादिश्रुतिसिद्धमिति भावः । खण्डनं प्राग्वत् ॥

वाजसनेयके श्रूयते—'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ' इत्यादि । तत्राक्षरं मध्यमं श्रीतत्त्वमेवेति प्राप्तम्, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति वाक्यशेषात् । चन्द्राद्याधारत्वं हि श्रियो लिङ्गम्, 'अहं सोममाहनसं बिभर्मि' इति श्रुतेः । आहनसं यज्ञेष्वभिषूयमाणम् । [1]कृताभिमानित्वेनेयमुक्तिः, 'सोमं राजानं जुह्वति यं देवा भक्षयन्ति' इत्यादिवत् । एवं प्राप्ते, सिद्धान्तमाह—

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

अक्षरं विष्णुरेव, 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति अम्बरान्तस्य सर्वस्य धृतेः । श्रूयते च विष्णुसूक्ते—'य उ त्रिधातु पृथिवीमुत द्यामेको दधार भुवनानि विश्वा' (ऋ. २. २. २४) इति । किं च,

## सा च प्रशासनात् ॥ ११ ॥

सा च सर्वधृतिः प्रशासनादुक्ता— 'एतस्य वाऽक्षरस्य प्रशासने' इति । प्रशासनं च विष्णोरेव श्रूयते—'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' इति । अस्यार्थः— महदहंकारपञ्चमहाभूताख्याः सप्त देवताः अर्धगर्भाः ब्रह्माण्डाख्यसमृद्धगर्भास्तदावरणभूता भुवनस्य रेतः रतिप्रदाः सारभूता वा विष्णोः प्रदिशा आज्ञया विधर्मणि विविधधर्मधारणे तिष्ठन्तीति ॥

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

'अस्थूलमनणु' इत्यादिना स्थूलाणवादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च । लौकिकस्थौल्यादेर्विरहोऽलौकिकस्य सत्त्वं च विष्णावेव श्रूयते—'अस्थूलोऽनणुरमध्यमो मध्यमो व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुणः' इत्यादि । खण्डनं प्राग्वत् ॥

छान्दोग्ये श्रूयते—'सदेव सौम्येदमग्र आसीत्' इति । तत्र सत् किं प्रधानं ब्रह्म वेति संशये, प्रधानमिति प्राप्तम्, 'बहु स्यां प्रजायेयेति' इति बहुभावाख्यविकारश्रवणात् । न हि विष्णुः, 'अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः' इत्यविकारत्वोक्तेः । सिद्धान्तमाह—

---

1 कृता॰

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

सः विष्णुरेव, 'तदैक्षत' इति ईक्षणव्यापारश्रवणात् । 'बहु स्याम' इति तु विकारं विनैव स्वरूपबहुत्वेनोपपन्नम्, 'अजायमानो बहुधा विजायते' इति श्रुतेः । अजायमानोऽविकुर्वाणः । खण्डनं प्राग्वत् ॥

छान्दोग्ये श्रूयते—'एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति । तत्र हृदयपद्मस्थो विष्णुरन्यो वेति संशये, अन्य इति प्राप्तम्, आकाशशब्दात्, 'तस्यान्ते सुषिरं सूक्ष्मम्' इति श्रुत्यन्तराच्च । सिद्धान्तमाह—

## दहर उत्तरेभ्यः ॥ १४ ॥

दहरो विष्णुरेव, उत्तरेभ्यो गुणेभ्यः । तथा हि वाक्यशेषे श्रूयते—'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यादि ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति सुप्तस्य तद्गतिश्रुतेः, ब्रह्मशब्दाच्च । लिङ्गं च तथा दृष्टम्—'अरश्च वै ण्यश्च अर्णवौ च ब्रह्मलोकः' इति । तस्य हि विष्णुलोकलिङ्गत्वं स्मर्यते—'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' इति ॥

किं च,

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति हृत्पद्मस्थस्य सर्वाधारत्वश्रवणाच्च विष्णुरेवासावित्यर्थः । अस्य विष्णोर्महिम्नः अस्मिन् हृत्पद्मस्थले उपलब्धेः 'एष भूताधिपतिरेष भूतपालः' इत्यादिना ॥

## प्रसिद्धेश्च ॥ १७ ॥

'तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' इति श्रुत्यन्तरप्रसिद्धेरित्यर्थः ॥

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥

'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते[1] एष आत्मेति होवाच' इति जीवपरामर्शात् स इति चेत्, न, तस्य स्वतोऽपहतपाप्मत्वाद्यसंभवात् ॥

---

1. अभिसंपद्यते

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

'स तत्र पर्येति जक्षत्क्रीडन् रममाणः' इत्याद्युत्तरवचनात् जीव एवेति चेत्, न, तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते। यत्प्रसादात्स मुक्तो भवति स भगवान् पूर्वोक्तः॥

नन्वीश्वरप्रसादासादितापहतपाप्मत्वादिगुणो जीव एव हृत्पद्मस्थात्मा किं न स्यादित्याशङ्क्याह—

## अन्यार्थश्च परामर्शः ॥ २० ॥

भवेदेवं, यदि 'एष ते' इति जीवं परामृश्य तस्य हृत्पद्मस्थात्मत्वं विधीयेत। न त्वेतदस्ति। किं तु ईश्वरार्थोऽयं परामर्शः। 'यं परञ्ज्योतिराख्यं भगवन्तमभिसंपद्य जीवः स्वेन रूपेणाभिनिष्पद्यते, स एष आत्मा' इति परमात्मानमेव 'एषः' इति परामृश्य तस्यात्मत्वं विधीयत इत्यर्थः॥

## अल्पश्रुतेरिति चेत् तदुक्तम् ॥ २१ ॥

दहर इत्यल्पश्रुतेर्न विष्णुरिति चेन्न, 'निचाय्यत्वादेवं व्योमवच्च' इत्युक्तत्वात्। खण्डनं प्राग्वत्॥

कठवल्लीषु श्रूयते—'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्। कथं नु तद्विजानीयां किमु भाति न भाति च॥' इति। अत्र परमं सुखमिति किं विष्णुरन्यद्वेति संशये, अन्यदिति प्राप्तम्, 'तमात्मानं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्य संनिहितत्वेन तस्यैव तदेतदिति परामर्शात्, भगवतः प्रकृतत्वेऽपि व्यवहितत्वात्। एवं प्राप्ते, सिद्धान्तमाह—

## अनुकृतेस्तस्य च ॥ २२ ॥

परमात्मैवात्रानिर्देश्यं सुखमिति निर्दिष्टः, 'तमेव भान्तमनुभाति सर्वम्' इत्यनुकृतेः 'तस्य भासा सर्वमिदं विभाति' इति वचनाच्च। न हि ज्ञानिसुखमनुभाति सर्वं, नापि तद्भासा॥

## अपि च स्मर्यते ॥ २३ ॥

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥' इति। 'न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम॥' इति च। तथा चागत्या व्यवहितपरामर्शस्वीकार इति भावः। खण्डनं प्राग्वत्॥

चतुर्थवल्ल्यामाम्नायते—'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य' इति। तत्रेशानो रुद्रो वायुर्विष्णुर्वेति संशये, रुद्र इति प्राप्तम्, ईशानशब्दस्य तत्र

रूढेः सा हि योगाद्बलीयसी । यद्वा, वायुरेवेशानः, इह श्रुतस्य भूतभव्यस्वामित्वस्य 'विश्वे देवा उपासते' इत्युत्तरत्र श्रुतस्य सर्वदेवोपास्यत्वस्य च वायावेव संभवात् । अत एव रुद्र इति पक्षो गर्भस्रावेणैव गतः, तत्र सर्वस्वामित्वसर्वदेवोपास्यत्वयोर्बाधितत्वात् । वायोस्तु श्रुत्या तत्सिद्धिः । तथा च मन्त्रः—'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥' (ऋ ५. ६. १३) इति । अङ्गेति संबोधने । ये देवा नमसा वायोर्नमस्कारादिना वृधासः ज्ञानादिगुणपूर्णाः । अनवद्यासः अशनायाद्यवद्यविधुराः पुरा आसन् ते कश्चिद्रहस्यस्थाने सूर्येण साकं मनवे ज्ञानिने बाधिताय बाधिभिः संसारबाधवद्भिरिताय शरणं प्राप्ताय वायवे उषसं बुद्धिमवासयन् तद्विषयामकुर्वन्नित्यर्थः । एवं प्राप्ते, सिद्धान्तमाह—

## शब्दादेव प्रमितः ॥ २४ ॥

'ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥' इति हि पञ्चमवल्ल्यां श्रुतम् । तथा च वामनशब्दादेव विष्णुरिति प्रमितः । नन्विह प्राणप्रेरकत्वाद्वायुरेव ग्राह्यः । तद्धि तल्लिङ्गम्, 'यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव संविधत्ते' इति श्रुतेरिति चेत्, न, लिङ्गापेक्षया वामन इति श्रुतेर्बलीयस्त्वात् । 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा। पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णयः[1] ॥' इति स्कान्दे । अत्र तत्त्वप्रकाशिका—नाममात्रेण निर्देशः श्रुतिः । असाधारणधर्मो लिङ्गम् । निराकाङ्क्षपदानि वाक्यम् । एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम् । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् । समानोक्तिः समाख्या । तत्र श्रुतेः साक्षादर्थबोधजनकत्वात् सर्वप्राबल्यम् । लिङ्गस्यानुमापकतया तदानन्तर्यम् । वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात्ततोऽपि दौर्बल्यम् । प्रकरणस्य बह्वर्थपरत्वेनार्थानुमितिहेतुत्वात्तदवमता । स्थानस्यातिबह्वर्थकथनेनाभिप्रेतार्थानुमितिजनकस्य ततोऽपि दौर्बल्यम् । समाख्यायाः स्थानान्तरगतायाः सादृश्यमात्रेणार्थानुमापकत्वात्ततोऽपि दुर्बलत्वम् । न च स्कान्दे यथास्थित एव क्रमः, 'आत्मा प्रकरणात्' इत्यत्र समाख्यायाः प्रकरणेन बाधितत्वात् । तथा जैमिनिः—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । 'वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा' इति भाष्यकारोक्तिरप्येवं संगच्छत इति । न च निरवकाशत्वं लिङ्गस्य, विष्णौ सावकाशत्वात् ॥

ननु सर्वगतस्याङ्गुष्ठमात्रत्वं कथमित्यत आह—

---

1. ०लिङ्गतः

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

हृदि विद्यमानस्यावकाशस्याङ्गुष्ठमात्रतया तत्राभिव्यक्ताया भगवन्मूर्तेरङ्गुष्ठमात्रत्वं युज्यते। पश्वादीनामङ्गुष्ठाभावेऽपि मनुष्याणामेव वेदविद्याधिकारादविरोधः। तस्मादीशानो विष्णुरेवेति सिद्धमिति माध्वाधिकरणशरीरम्। खण्डनं प्राग्वत्॥

किं च, रुद्र इति पक्ष इह त्वया दूषयितुमशक्यः। यत्तूक्तम्—'गर्भस्रावेण गतः स्तः' इति, तत् श्रुतिस्मृतिपुराणाद्यपरिशीलनप्रयुक्तम्। समन्वयाधिकरणद्युभ्वाद्याधिकरणयोः खण्डने स्फुटीकृतमेतत्। यदपि 'कुविदङ्ग' इत्युदाहृतं तत् विपरीतम्, नमसा 'नमस्ते रुद्र' इत्यादिमन्त्रेण रुद्रनमस्कारादिना वा 'तव श्रिये मरुतो मर्जयन्त' इत्यादिसंवादात्। वृथास इत्यादि प्राग्वत्। बाधिताय तापत्रयाभिभूताय मनवे मननादिज्ञानसामग्रीप्रवृत्ताय वायवे बुद्धि-मवासयन् उपादिशन्निति व्याख्यानात्। त्वत्पक्षे तु बाधितायेत्यत्र इवर्णस्य दीर्घतापत्तेः, अवग्र-हापत्तेः 'तृतीया कर्मणि' इति प्रकृतिस्वरापत्तेश्च। यत्तु वामनश्रुतिर्बलीयसीति, तन्न, उपक्रम-स्थाया ईशानश्रुतेरसंजातविरोधितया ततोऽपि बलीयस्त्वात्। तथा च 'वेदो वा प्रायदर्शनात्' इत्यधिकरणे भट्टपादैरुक्तम्—'असंजातविरोधित्वादर्थवादो यथा स्थितः। आस्थेयस्तद्विरुद्धस्य विध्युद्देशस्य लक्षणा॥' इति॥

स्यादेतत्। जैमिनीयमीमांसायां यथा तथाऽस्तु। माध्वमते तु उपक्रमादुपसंहार एव बलीयान्। इदं च ब्रह्मतर्के सिद्धम्, 'उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम्। श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात्॥' इत्यनुव्याख्यानोक्तेः। 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादो-पपत्ती च लिङ्गं तात्पर्यनिर्णये॥' इति समन्वयाधिकरणमध्वभाष्योदाहृतबृहत्संहितावचनविवरणा-वसरे तत्त्वप्रकाशिकायां तथैव सिद्धान्तितत्वाच्चेति चेत्, सत्यम्, प्रसिद्धतर्कमीमांसादिपरिशीलन-शालिभ्यः पण्डितेभ्यो बिभ्यतस्तव वन्ध्यासूनुप्रायब्रह्मतर्कशरणीकरणमुचितमेव; किं तु 'श्रुति-लिङ्ग...' इत्यादिजैमिनिसूत्रं घनगर्जितन्यायेन श्रुत्वा तदीयांश्चार्थांस्तद्दर्शनविरुद्धानेवोत्प्रेक्ष्य यन्मीमांसाच्छायानुकारि प्रलपितं तदेवानुचितम्। इह हि यच्छ्रुत्यादीनां लक्षणादिकं त्वयोक्तं तदतितुच्छमिति स्पष्टमेव मीमांसादर्शिनाम्। किं च, न केवलमिहैवेत्थम्, किं तु त्वद्भाष्यानु-व्याख्यानतत्त्वप्रकाशिकान्यायसुधासु प्रायेण मीमांसकमर्यादोल्लङ्घनेन व्यवहारस्तन्मतमित्यन्यथा-ऽनुवादश्च दृश्यते। तथा हि—'द्वादशाहवदुभयविधं बादरायणोऽतः' इति सूत्रे भाष्यम्—द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवतीति। 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तत्' इति सूत्रे श्रवणगुरुप्रदानयोः प्रधानेतिकर्तव्यतारूपयोः गुरुप्रदानं प्रबलमित्युपपादनार्थं तत्त्वप्रकाशिका—न चेतिकर्तव्यतात्वेन दौर्बल्यं, यज्ञीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनादिति। 'भूम्नः

क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' इति सूत्रे तत्त्वप्रकाशिका—यथा खलु दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यात्, अन्यथा वैफल्याज्ज्यायस्त्वम्; ततश्च सर्वैः कर्तव्यत्वं, तथा भूमत्वस्यापि सर्वत्रानन्दादिषु सहभावेनोपासन एवेष्टसिद्धेरिति। 'स्वामिनः फलश्रुतेरित्यात्रेयः' इत्यधिकरणे अयजमानानामप्यृत्विजां सत्रयागफलमिवास्वामिनामपि कर्तृणां कर्मज्ञानफलमिति भाष्यादौ स्थापितम्। जिज्ञासासूत्रे च प्रथमसंहिततयोंकारनिर्देशं सूत्रावयवभूतमङ्गीकृत्य संहिताप्रयोजनमुत्तरसूत्रेष्वप्यनुगतिसूचनमिति व्युत्पादनार्थं न्यायसुधा—सर्वाणि हि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वादवान्तरा ब्रह्मविद्याः। 'स्वत्वत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते' इति श्रौतार्थवादसामर्थ्यात् सर्वास्वपि ब्रह्मविद्यासु आद्यन्तयोरोंकारस्योहः कर्तव्य इति गम्यते। न चोह्यमानं वाक्यात् पृथगिति शक्यते वक्तुम्, मन्त्रेष्वप्यूह्यमानस्य मन्त्रानवयवत्वप्रसङ्गादिति। आनन्दमयाधिकरणे च न्यायसुधा—'ज्योतिषां स्तोमो हि ज्योतिष्टोमः' इति। 'ज्योतिरुपक्रमात्तु' इत्यधिकरणे तत्त्वप्रकाशिकाऽप्येवम्। अत्र सर्वत्र प्रसिद्धमीमांसानुरोधी व्यवहारो न भवतीति तद्विदां सुविदितमेव। अहीनसत्ररूपेण ह्युभयविधो द्वादशाहो न तु क्रतुसत्ररूपेण, क्रतुत्वस्योभयसाधारणत्वात्। यज्ञीयहिंसायामितिकर्तव्यताप्राबल्यं दृष्टमिति त्वत्यन्तनिरालम्बनम्। दीक्षणीयादिसकलाङ्गसहितः क्रतुः सर्वयागेष्वनुवर्तेत इत्यपूर्वो व्यवहारः। दीक्षणीयादिज्योतिष्टोमेतिकर्तव्यताकलाप एव हि तद्विकृतिभूतेषु[1] अतिदिश्यते, न तु ज्योतिष्टोमक्रतुरपि, न वा सर्वयागेषु। न चेतिकर्तव्यताकलापः क्रतुरिति व्यवह्रियते। न च ज्योतिष्टोमेतिकर्तव्यताकलापस्य तद्विकृतिष्वतिदेशेन किमपि ज्यायस्त्वम्, ऐष्टिकादीतिकर्तव्यताकलापस्यापि तत्तद्विकृतिष्वतिदेशेन साम्यात्। न चानतिदेश्यात्त्वप्रधानाज्ज्यायस्त्वं विवक्षितम्, विरोधात्; न ह्यमात्यानपि सेवमानो भटवर्गस्तानसेवमानाद्राज्ञो ज्यायान् भवति। नाप्यर्थलोपादिनाऽनतिदेश्यादङ्गान्तराज्ज्यायस्त्वम्, दीक्षणीयादेरपि त्रेधा तथाप्रत्याम्नानादिनाऽश्वमेधादिष्वनतिदेशात्। 'सर्वेष्वयजमाना ऋत्विजः' इति तु प्रलापमात्रम्, 'ये यजमानास्त ऋत्विजः' इति तत्र यजमानानामृत्विक्कार्ये विधानात्। न चोंकारस्योत्तरसूत्रेषु अनुगतिरूहः, 'देवस्य त्वा' इत्यादिमन्त्रेषु सूर्यादिशब्दोहेऽग्निशब्दादेरिव कस्यचित् स्थानिनः शब्दस्याभावात्, अनुषङ्गस्योहाद्भेदेन व्यवहाराच्च। यथाऽऽहुः—'आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम्' इति 'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्' इति च। न च ज्योतिषां स्तोम इति ज्योतिष्टोमनामनिर्वचनम्; किं तु 'त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव ज्योतींषि य एतस्य स्तोमाः' इति वाक्यशेषबलात् ज्योतिर्नामकाः स्तोमा यस्येति तन्निर्वचनं मीमांसकाभिमतम्। बहुव्रीहित्वप्रयुक्तपूर्वपदप्रकृतिस्वरदर्शनाच्चेदमेव युक्तम्। 'ज्योतिष्टोमं प्रथममुपयन्ति' इत्यत्र हि आद्युदात्त-

1. विश्वजिदादिषु इत्यधिकः पाठः

त्वमेव तैत्तिरीया अधीयते। न च ज्योतिःशब्दे फिट्स्वरः शङ्क्यः, 'द्युतेरिसन्नादेश्च जः' इति इसन्प्रत्यये नित्वेनाद्युदात्तत्वात् ॥

एवं तावन्मीमांसकमर्यादोल्लङ्घनेन व्यवहार उदाहृतः। तन्मतमित्यन्यथाऽनुवादमप्युदाहरामः—'अङ्गीकृतत्वादपि तैः पदार्थानां पृथक् पृथक्। क्रियापदेनान्वयस्य वाक्यभेदाद्धि दूषणम् ॥' इत्यनुव्याख्यानम्। एतच्च सत्यज्ञानादिवाक्येषु ब्रह्मानुवादेन सत्यत्वाद्यनेकविधाने वाक्यभेदः स्यादिति शङ्काम्, 'पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत्। अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् ॥' इत्यभ्युपगमेन परिहृत्य मीमांसकमतेऽपीदं समानमित्यनेन श्लोकेनोच्यत इति न्यायसुधायां व्याख्यातम्। तैर्मीमांसकैरपि 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति' इत्यादावरुणादिपदानां क्रियापदेन पृथक्पृथगन्वयस्याङ्गीकृतत्वात् तेषामपि हि वाक्यभेदात् दूषणं प्रसज्येत। तत्रैतावदेव वक्तव्यम्—महावाक्यभेद एव दूषणम्, नत्ववान्तरवाक्यभेद इति; तदस्माकमपि समानमिति। न च प्रसिद्धमीमांसकमतेऽवावान्तरवाक्यभेदोऽस्ति, क्रयभावनाया विधेयत्वेन 'अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नतः' इत्युक्तरीत्या आरुण्यादिविशिष्टक्रयभावनारूपक्रियैक्येन पदैकवाक्यताया एव तैः स्वीकारात्। एवमन्यत्रापि मीमांसानवबोधमूलकं बहु मध्वादिभिर्व्यवहृतम्। विस्तरभयान्नोट्टङ्क्यते। न च कठवल्लीमन्त्रे ईशानशब्दो भूतभव्यस्येति पदसमभिव्याहारात् भूतभव्यप्रतियोगिकेशितृत्वपरो न तु शिवे रूढिमानिति वाच्यम्, तथा सति वामनशब्दोऽपि प्राणापानमध्यस्थितोक्त्या पूर्वापरमन्त्रेषु बहुधाऽङ्गुष्ठमात्रतोक्त्या च ह्रस्वत्वपरो न तु विष्णौ रूढिमानिति त्वदभिमतश्रुतेरपि हानिप्रसङ्गात्। ईशानशब्दस्य योगरूढ्या यौगिकांशमादाय समभिव्याहृतान्वयस्यापि संभवाच्चेति दिक् ॥

स्यादेतत्। 'मनुष्याधिकारत्वात्' इति सूत्रशेषेण मनुष्याणामेव विद्याधिकार इत्युक्तम्। तथा च 'विश्वे देवा उपासते' इति श्रुत्युक्तं देवोपास्यत्वं विरुध्यत इति आशङ्क्य देवानामधिकारं समर्थयते सूत्रकारः—

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

मनुष्याणां देवादित्वप्राप्तेरुपरि वेदविद्याधिकारं बादरायणो मन्यते, तेषां विशिष्टबुद्ध्यादिसंभवात्। तिर्यगादीनां तदभावादधिकाराभावः। मनुष्यत्वविशेषणमपि तिर्यगादिव्यावृत्त्यर्थमेवोक्तम्, न तु देवादिव्यावृत्त्यर्थमिति भावः। अत एव तिर्यगादीनामपि येषां विशिष्टबुद्ध्यादिमत्त्वं तेषामस्त्येवाधिकारः; यथा [1]जरितार्यादीनाम् ॥

---

1. पठितार्यादीनाम्।

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम्। तत्र यदि मनुष्याः सन्तो देवभावं लभन्ते, तर्हि तत्पूर्वं देवताभावात् देवतोद्देश्यके कर्मणि विरोध इति चेन्न, अनेकेषां देवतापद-प्राप्तेर्दर्शनात्[1]। श्रूयते हि—'यज्ञेन यज्ञम्' इत्यादि। अयं हि मन्त्रार्थः—देवाः देवत्वयोग्या मनुष्याः यज्ञेन ज्ञानकर्मात्मकेन यज्ञं भगवन्तमयजन्त। ततस्ते ज्ञानपूर्वकर्मणा स्वःपदं प्राप्य मुख्यलोकधारका आसन्। ते पुनर्महात्मानो देवाः स्वस्वाधिकारावसाने पूर्णसुखात्मकं मोक्षं प्राप्नुवन्। यत्र मोक्षे पूर्वकल्पे मुक्ताः साध्या देवाः सन्तीति ॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

ननु शब्दे वेदाख्ये विरोधः। प्रतिपाद्यानां देवानामनित्यतया [2]नित्यानित्यसंयोगविरोध इति चेन्न, प्रभवात्, सर्वकल्पेषु यथापूर्वं देवानां प्रभवात्। तथा च प्रवाहनित्यत्वान्नोक्तदोष इत्यर्थः। अत्र प्रमाणान्याह—अतः प्रत्यक्षानुमानाभ्यामिति। अतः शब्दात् 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतेः। प्रत्यक्षात् योगिप्रत्यक्षात्। तच—'यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथाभावा युगादिषु ॥' इति तद्वचनात्सिद्धम्। अनुमानात्; पूर्वोत्तरकल्पाः एवं-भूतदेववन्तः, कल्पत्वात्, एतत्कल्पवत्, इत्यादेरित्यर्थः ॥

देवानां प्रवाहनित्यत्वे युक्त्यन्तरमाह--

## अत एव च नित्यत्वम् ॥ २९ ॥

वेदनित्यत्वान्यथानुपपत्त्यैवेत्यर्थः ॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

प्राचीनानां मुक्तत्वेन स्वपदेष्ववृत्तावप्यविरोधः, तदन्येषां प्राचीनसमाननामरूपत्वात्, यथापूर्वमिति श्रुतौ दर्शनात्, प्रागुक्तस्मृतेश्चेत्यर्थः। समाननामरूपत्वांशः पूर्वं स्पष्टं नोक्तः, इह सूत्रे स्पष्टीकृत इति भेदः ॥

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

जैमिनिर्मधुविद्यादिषु तावद्देवानामनधिकारमाह। कुतः? असंभवात्। तत्र हि 'वसूना-मेवैको भूत्वा' इत्यादिश्रवणात् वस्वादिपदप्राप्तिः फलम्। तच देवानां सिद्धमेव, न साध्यम् ॥

---

1. देवतापदप्राप्तिदर्शनात्। 2. नित्यसंयोगविरोधः

अस्तु तर्हि मोक्षार्थविद्यास्वधिकारः ; नेत्याह—

## ज्योतिषि भावाच्च ॥ ३२ ॥

ज्योतिषि देवानां ज्ञाने भावात् ; सर्ववस्तूनां विषयतया प्रविष्टत्वादित्यर्थः ॥

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

बादरायणस्तु भगवान् देवानामशेषविद्यास्वधिकारसद्भावं मन्यते। मोक्षतदितरफलानां योग्यानां प्राप्तत्वे अयोग्यानां प्राप्तुमशक्यत्वेऽपि ज्ञानमात्रेणासाध्यस्य कर्मप्रयुक्तस्य मोक्षेऽतिशयस्य सिद्ध्याऽर्थित्वसंभवात्, भगवदितरेषां निरुपचरितसार्वज्ञ्याभावात, विचारादिना च ज्ञानविशेषसंभवादिति भावः। उक्तं च स्कान्दे—'यावत्सेवा परे तत्त्वे तावत्सुखविशेषता। [1]संभवाच्च प्रकाशस्य परमेकमृते हरिम् ॥ तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम्। सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च ॥' इति। न चैवं जैमिनिमतविरोधः, प्राप्तफलार्थं नानुष्ठेयमित्येतावन्मात्रस्य तदभिमतत्वात्। तदङ्गीकारेणैव फलान्तरार्थितयाऽधिकारस्य भगवता समर्थितत्वात्। 'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशाविचिन्तनम्। स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यते ॥' इति ब्राह्मे। अतो देवानां सर्वविद्याधिकारित्वात्तदुपास्यत्वं हरेर्युक्तमिति माध्वाधिकरणशरीरम्। अत्रोपास्यस्य ब्रह्मत्वं नास्तीत्यादि सामान्यखण्डनं बोध्यम्। मोक्षे तारतम्यं च दूषयिष्यते। देवानां ब्रह्मविद्याधिकार इत्यंशस्त्विष्टः। यज्ञाद्यधिकार इति तु 'यतो विधिनिषेधेषु मनुष्याणामधिक्रिया। अतः पशुपिशाचाद्या धर्माधर्मोंपरा मताः ॥' इति पाद्मवचनेन विरुद्धं न्यायविरुद्धं च, वर्णाश्रमादिसापेक्षाधानं विनाऽन्यसिद्धेः। एतेन तिर्यग्विशेषा अपि व्याख्याताः। अत एव 'गावो वा एतत्' इत्यादीनां [2]गुणार्थवादतैत्वेव शास्त्रकृतां निर्भरः। प्रवाहनित्यताऽपि त्वया दुरुपपादा, जातेः प्रतिव्यक्ति भेदस्य व्यक्त्या सहात्यन्ताभेदस्य च स्वीकारात् ॥

स्यादेतत्। शूद्रोऽपि तद्वधिकारी स्यात्, मनुष्यत्वाविशेषात्, विशिष्टबुद्धियोगाच्च। श्रूयते च पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनम्। न चासावशूद्र एवेति वाच्यम्, 'तमुह परः प्रत्युवाच अहहारे त्वा शूद्र तवैव सह गोभिरस्तु' इति पौत्रायणं प्रति रैक्वोक्तेः। अत्र सिद्धान्तमाह सूत्रकारः—

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

भवेदेवं यदि पौत्रायणः शूद्रः स्यात् ; न त्वेवम्। कथं तर्हि शूद्रेति संबोधनमिति चेत, तदाद्रवणात, तया शुचा आद्रवणात, शुचा द्रवतीति यौगिकः शब्द इति भावः। तदुक्तम्—'राजा

---

1. संभवाच्चाप्रकाशस्य 2. गुणार्थवादतैत्येव

पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः । [1]प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान् ॥' इति । अस्य शुक् कुत इति चेत्, तदनादरश्रवणात्, 'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' इति हंसकृतानादरश्रवणादित्यर्थः । अरे हंस एतद्वचनं कमेनमुद्दिश्य आत्थ सन्तं सयुग्वानं रैक्वमिवेति योजना। सूच्यते हि श्रुतौ शोकः 'स ह संजिहान एव क्षत्तारमुवाच' इति । सः श्रुतानादरः पौत्रायणः शयनीयादुत्तिष्ठन्नेव क्षत्तारं रैक्वगवेषणायोवाच इत्युक्त्या हि व्यग्रत्वेन शोकः श्रुतौ सूचितः । मुनिस्तु सार्वज्ञ्यात् शोकेन द्रवणं बुद्ध्वा शूद्रेति समबोधयदिति भावः ॥

नन्वु योगाद्रूढिर्बलीयसीत्याशङ्क्याह—

## क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

'अयमश्वतरीरथः' इति चित्ररथसंबन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेः । 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' इति ब्राह्मे । 'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः' इति ब्रह्मवैवर्ते ॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्यध्ययनार्थं संस्कारपरामर्शात् । 'नाग्निर्न यज्ञो न संस्कारो न व्रतानि शूद्रस्य' इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्चेति सूत्रार्थः ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' इति सत्यकामवचनेन तस्यार्जवं ज्ञात्वा 'नैतदब्राह्मणो विवक्तुमर्हति' इति शूद्रत्वाभावं निश्चित्य तदुपनयने गौतमस्य प्रवृत्तेरित्यर्थः ॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्, अध्ययने जिह्वाच्छेदः, अर्थावधारणे हृदयविदारणम्' इति प्रतिषेधात् । 'नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः। केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते ॥' इति स्मृतेश्च । विदुरादीनां तु उत्पन्नतत्त्वज्ञानत्वान्न कश्चिन्निषेध इति भाष्यतत्त्वप्रकाशिकादौ स्थितम् ॥

कठवल्लीषु पठ्यते—'महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' इति । तत्र वज्रशब्दो रूढिबलादिन्द्रायुधपर इति प्राप्ते, आह—

---

1. प्राणविद्यामुपास्यास्मात्परं धर्ममुपास्तवान्

## कम्पनात् ॥ ३९ ॥

भगवानेव वज्रशब्दार्थः, 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम्' इति पूर्वार्धे कम्पनश्रवणात्। यत्किंच सर्वं जगत् प्राणे स्थितं प्राणान्निःसृतं तदिदं जगद्यस्मादेजति यत्प्रेरणया चेष्टते तन्महद्भयंकरं वज्रं ये विदुस्तेऽमृता भवन्ति इति हि श्रुत्यर्थः। न च सर्वजगच्चेष्टयितृत्वं भगवतोऽन्यस्य संभवति। न वाऽन्यज्ञानान्मोक्षः। न चोद्यतत्वलिङ्गविरोधः, उद्यमित्वार्थत्वात्। 'चक्रं चङ्क्रमणादेव वर्जनाद्वज्रमुच्यते। खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिः॥' इति ब्रह्मवैवर्ते। खण्डनं प्राग्वत्॥

वाजसनेयके श्रूयते—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति। अत्र ज्योतिः किं जीवो विष्णुर्वेति संशये, 'उभौ लोकावनुसंचरति' इति लिङ्गाज्जीव एवेति प्राप्ते, आह—

## ज्योतिर्दर्शनात् ॥ ४० ॥

'विष्णुरेव ज्योतिः' इति चतुर्वेदशिखायां दर्शनादित्यर्थः। तस्यापि लोकसंचरणमस्त्येव, 'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति' इति वचनात्। अधिकरणखण्डनं प्राग्वत्॥

छान्दोग्ये श्रूयते—'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति। अत्राकाशः प्रसिद्ध एव ग्राह्यः, रूढेरिति प्राप्ते, आह—

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

आकाश इह विष्णुरेव, नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात्, 'तद्ब्रह्म' इति ब्रह्मत्वव्यपदेशाच्च। 'ते यदन्तरा' इत्यस्य हि, ते नामरूपे अन्तरा विना वर्तेत इत्यर्थः। 'अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्' इति ब्राह्मे। खण्डनं प्राग्वत्। अत्र निर्वहितृत्वमित्यादिभेदवग्रन्थेष्वपशब्दः, श्रुतौ हि च्छान्दस इति॥

वाजसनेयके श्रूयते—'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः' इत्यादि। तत्र स्वप्नादिद्रष्टा जीवो विष्णुर्वेति संशये जीव इति प्राप्तम्, तस्यैवावस्थात्रयप्रसिद्धेः। सिद्धान्तस्तु—विष्णुरेवेति, असङ्गत्वलिङ्गात्। स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्य युज्यते। नन्वीश्वराभेदेन जीवेऽप्यसङ्गत्वोक्तिरस्तु इत्याशङ्क्याह सूत्रकारः—

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति सुषुप्तौ 'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति' इत्युत्क्रान्तौ च भेदेन जीवेशयोर्निर्देशात्तदभेदस्यासिद्धेरित्यर्थः। खण्डनं तु कृतप्रायम्, भेदस्य व्यावहारिकत्वात्, अध्यस्तसङ्गेन वास्तवासङ्गत्वानपायाच्च ॥

'एष नित्यो महिमा ब्राह्मणस्य' इति श्रूयते। अत्र ब्राह्मणो विरिञ्चो विष्णुर्वेति संशये विरिञ्च इति प्राप्तम्, 'स वा एष महानज आत्मा' इत्यजशब्दात्। सिद्धान्तस्तु विष्णुरेवेति। अत्र हेतुमाह सूत्रकारः—

**पत्यादिशब्देभ्यः ॥ ४३ ॥**

'सर्वस्याधिपतिः सर्वस्येशानः' इत्यादिशब्देभ्यो विष्णोर्नित्यमहिमत्वावगमादित्यर्थः। अजशब्दस्तु न जायत इति योगेन बोध्यः। अण गतौ, ब्रह्मणा वेदेन अण्यते गम्यते इति ब्राह्मणः। व्यत्ययात्साधुः। ननु विष्णोरवतारैरिव विरिञ्चेन सहाभेद एव, 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः' इति भागवतोक्तेरिति चेत्, न, उक्तवचनस्य तदन्तर्गतेश्वररूपापेक्षयोपपत्तेरिति माध्वाधिकरणशरीरम्। खण्डनं प्राग्वत् ॥

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे प्रथमाध्यायस्य
तृतीयः पादः ॥

---

## ॥ प्रथमाध्यायस्य चतुर्थः पादः ॥

---

'तत्तु समन्वयात्' इति सूत्रे सर्वे शब्दा विष्णुवाचका इत्युक्तम्। तदनुपपन्नम्, अव्यक्तादिशब्दानामन्यत्रैव प्रसिद्धेः, इत्याशङ्क्य तेषामपि विष्णुरेव मुख्योऽर्थ इति समर्थयितुमयं पाद आरभ्यते—

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥**

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' इति सांख्यानुमानकल्पितं प्रधानमप्येकेषां कठानां शाखायामुच्यत इति चेत्, न, शरीररूपके परमात्मतन्त्रतया तदीयशरीरप्राये प्रधानादौ विन्यस्तस्य स्थितस्य परमात्मन एवाव्यक्तशब्देन ग्रहणात्। दर्शयति च पिप्पलादशाखायाम्—'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम्। यो वेद हरिमात्मानं स भयादनुमुच्यते ॥' इति। अत्र जीवादिशब्दानप्युपलक्ष्य 'अनेन जीवेनात्मना' इत्यादिश्रुतयोऽप्युदाहार्या इति जयतीर्थः ॥

नन्वस्त्वेवं श्रौतस्मार्तप्रयोगबलेनाव्यक्तादिशब्दानां भगवद्वाचित्वम्, तथाऽपि तत्रैव मुख्यतेति कुतः? तत्राह—

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

सूक्ष्ममेवाव्यक्तशब्देनोच्यते; तद्ध्यव्यक्ततामर्हति। सूक्ष्मत्वं च भगवत एव मुख्यम्, 'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं परं वैष्णवं धामनन्ति' इति पिप्पलादशाखायाम्। एवं जीवादिशब्दप्रवृत्तिनिमित्तानां प्राणधारणादीनां भगवति मुख्यत्वेन तेषां तत्र मुख्यत्वम्। तदुक्तम्— 'स जीवनामा भगवान् प्राणधारणहेतुतः। उपचारेण जीवाख्या संसारिणि निगद्यते ॥' इति ॥

ननु 'अव्यक्तात्पुरुषः परः' इत्यादौ अव्यक्तादीनां महत्परत्वं पुरुषावरत्वं दुःखबहुत्वादिकं च श्रूयमाणं कथं परमात्मग्रहणे संगच्छताम्? अत आह—

## तदधीनत्वादर्थवत् ॥ ३ ॥

प्रधानादिगतपरावरत्वादिधर्माणां भगवदधीनतया तस्मिन्नेवावरत्वादिवाचिशब्दजातमर्थवत्। 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते। यथा जीवः परात्मेति यथा राजा जयीति च ॥' इति स्कान्दे। एवं च 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादेरपि ब्रह्मणि समन्वयो बोध्यः। तथा हि—इन्द्रियशब्दप्रवृत्तिनिमित्तस्येन्द्रियत्वस्य ब्रह्माधीनत्वादिन्द्रियशब्दो ब्रह्मपरः। इन्द्रियगतपरत्वावधित्वस्य पञ्चम्यर्थस्य ब्रह्माधीनत्वात्पञ्चम्यपि ब्रह्मपरा इत्यादि। इन्द्रियदेवतातदुत्कर्षक्रमप्रतिपादकत्वमपि न त्यज्यते, श्रुतेरनेकार्थत्वाभ्युपगमादिति दिक् ॥

इतोऽप्यव्यक्तशब्दो न प्रधानपर इत्याह—

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

यज्ज्ञाने मोक्षस्तज्ज्ञापको हि वेदः। ज्ञेयत्वं च विष्णोरेवोक्तम्—'तमेव विदित्वा' इत्यादौ; न तु प्रधानस्येत्यर्थः ॥

## वदतीति चेन्न प्राज्ञो हि ॥ ५ ॥

'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति ज्ञेयत्वं वदतीति चेत्, न; प्राज्ञः परमात्मा हि तत्रोच्यते। स एव हि महतः परः, 'अणोरणीयान्महतो महीयान्' इति श्रुतेः। नन्वत्राणुप्रतियोगिभूतं स्थूलमेव महच्छब्दार्थ इति चेत्, सत्यम्; तथाऽपि महत्तत्त्वात्परत्वं लभ्यत एव, सकलस्थूलमध्ये महत्तत्त्वस्याप्यन्तर्भावात् ॥

## प्रकरणात् ॥ ६ ॥

वैष्णवं हीदं प्रकरणम्, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति श्रवणात् ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ७ ॥

त्रयं ह्यत्रोपन्यस्तम्—पितुः सौमनस्यम्, स्वर्ग्योऽग्निः, परमात्मा चेति । प्रश्नोऽप्येषां त्रयाणामेव । यद्यपि पितृसौमनस्यं वरत्वेन प्रार्थितम्, न तु पृष्टम्, तथाऽपि 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते' इति वचनान्न विरोधः । अविज्ञातं प्राप्यते न वेत्यनिर्णीतं तस्य यत्प्रार्थनं सोऽपि प्रश्न इत्यर्थः ॥

## महद्वच्च ॥ ८ ॥

यथा महत्तत्त्वे प्रसिद्धोऽपि महच्छब्दः 'महान्तं विभुमात्मानम्' इत्यत्र ब्रह्मपरः, तथाऽव्यक्तशब्दोऽपीति सूत्रार्थः ॥

## चमसवदविशेषात् ॥ ९ ॥

यथा चमसशब्दो यज्ञपात्रे प्रसिद्धोऽपि शिरोवाचकः, 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति श्रुतेः, एवमव्यक्तादिशब्दाः सर्वे अन्यत्र प्रसिद्धा अपि विष्णुवाचका एव, 'नामानि सर्वाणि [1]यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इति श्रुतेरित्यर्थः । अविशेषादिति, श्रुत्योरनुशासनरूपतया शक्तिग्राहकत्वाविशेषादित्यर्थः । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति व्याख्येयमन्त्रे यदुक्तम्, तदिदं प्रतीयमानं शिरः, कुतः? एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । एष इति विधेयानुरोधि लिङ्गम् । 'दक्षिणाऽन्नं वनुते यो न आत्मा', 'णेरणौ यत्कर्म णौ चेत्स कर्ता', 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इतिवत् । बिलं मुखादि । तस्मादव्यक्तादिशब्दवाच्यो हरिर्भवत्येवेति सर्वशब्दवाच्यत्वं तस्योपपन्नमिति माध्वाधिकरणशरीरम् ।

अत्रेदं वक्तव्यम्—प्रवृत्तिनिमित्ततादधीन्यबलेन सर्वशब्दानां विष्णौ परममुख्यत्वं त्वावश्वयोक्तम् । तदेव शिवविरिञ्चयोरपि स्यात्, तयोरप्यन्तर्यामित्वस्य समन्वयाधिकरणद्युभ्वाद्यधिकरणभङ्गे स्फुटीकृतत्वात् । तथा च न तेन समन्वयस्य विष्णौ व्यवस्थितत्वं सिध्यति । किं च प्रवृत्तिनिमित्ततादधीन्यकथा वृथैव, तत्तच्छब्दप्रवृत्तिनिमित्ताश्रयस्यैव तत्तद्वाच्यत्वात् । वृद्धव्यवहारो हि शक्तिग्रहे मूलम् । स च प्रवृत्तिनिमित्ताश्रयगोचर एव, न तु तत्स्वामिगोचरः, घटमानयेत्युक्ते घटादावप्रवृत्त्यापत्तेः । न हि घटः स्वामी ॥

---

1. समामवन्ति

स्यादेतत्। यस्य शब्दस्य प्रवृत्तिनिमित्तमाश्रितत्वेन यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यविषयत्वेन वा यदधीनं स तस्य वाचकः। अत एव भृत्यगतस्य जयस्य राजानाश्रितत्वेऽपि तदधीनत्वमात्रेण राजा जयतीत्यपि प्रयोग इति चेन्न, तथा सति [1]रिपुगतदुःखबन्धमरणादीनां राजाधीनत्वमात्रेण राजा दुःखी बद्धो मृत इत्यादिप्रयोगापत्तेः। राजा जयतीति तु सम्यगेव। जिधात्वर्थभूतस्योत्कर्षस्य [2]राजनि सत्त्वात्। स च पराभिभावकभृत्यायत्त एव। अभिभवेऽपि प्रयोजककर्तृत्वाद्वास्तु वोपचारमात्रम्। यत्तु 'यदधीनो गुणो यस्य इति स्कान्दम्' इत्युदाहृतम्, तदपि 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभिर्ब्रह्मगीतादिवचनजातैश्च विरोधाद्वचनाभासकल्पकधूर्तमाध्वमात्रमुखनिर्गतत्वाच्चोपेक्ष्यम्; लाक्षणिकार्थप्रदर्शनपरं वाऽस्तु। एतेन 'नामानि सर्वाणि यमाविशन्ति' इति व्याख्यातम्। चमसशब्दोऽप्येवमेव, 'अनन्यलभ्यः शब्दार्थः' इति न्यायात्। यच्चूक्तमनुशासनमेतदिति, तत्तुच्छम्, आविशन्तीत्यस्य बोधयन्तीत्येतावन्मात्रपरतया शक्तिलक्षणयोरौदासीन्येन 'यतो वाचो निवर्तन्ते', 'यद्वाचाऽनभ्युदितम्' इत्यादिश्रुतीनाम्, 'यतो वाचो निवर्तन्ते निमित्तानामभावतः' इत्यादिस्कान्दादीनां चाविरोधाय लक्षणाभिप्रायेणैव व्याख्येयत्वात्। किं च 'यो देवानां [3]नामधा एक एव' इति श्रुत्यनुरोधेन 'नामानि सर्वाणि' इत्यपि इन्द्रवरुणादिशब्दमात्रपरम्। तथा च श्रूयते—'इन्द्रं मित्रं वरुणमग्निमाहुः' इत्यादि। अतो नानेन सकलशब्दप्रतिपाद्यत्वं लभ्यते; शक्यत्वं तु दूरत एव। अपि च प्रकरणादिति हेतुस्त्वद्रीत्या न संभवदुक्तिकः, ब्रह्मप्रकरणस्थानामप्यब्रह्मवाचिनां शब्दानां लक्षणसमर्पकतया स्वीकारात्। कथमन्यथा जन्मादिसूत्रं संगच्छताम्? एतावान् परं भेदः—तत्र कार्यतयोपन्यासः, अत्र तु ब्रह्मनिष्ठतयोत्कर्षावधितयेति। ननु, तत्राप्याकाशादिशब्दा ब्रह्मपरा इति 'कारणत्वेन चाकाशादिषु' इत्यधिकरणे वक्ष्यत इति चेन्न, तस्यापि दूषयिष्यमाणत्वात्। ब्रह्मप्रकरणस्थतामात्रेण सर्वेषां ब्रह्मवाचकत्वे ज्योतिष्टोमादितत्तत्प्रकरणस्थानां सर्वेषां तत्तद्वाचकताप्रसङ्गाच्च। न हि स्वर्गकामादिशब्दा अपि यागवाचका इति कश्चिदभ्युपैति। अधिकं तूत्तराधिकरणभङ्गे स्फुटीकरिष्यते॥

स्यादेतत्। अस्तु नामोपनिषन्निष्ठानामब्रह्मणि प्रसिद्धानां शब्दानां ब्रह्मवाचिता। तावताऽपि समन्वयसूत्रोक्तं सर्वशब्दानां ब्रह्मवाचकत्वं न सिध्यति, कर्मकाण्डपठितानां ज्योतिरादिशब्दानां तदभावात्; अत आह—

## ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ १० ॥

अत्र ज्योतिरादिशब्दवाच्यं विषयः। विष्णुः, अन्यद्वेति संदेहः। अन्यदिति प्राप्तम्, अन्यत्रैव प्रसिद्धेः। प्रसिद्धिमपहाय ब्रह्मवाचकत्वकल्पने विहितानुष्ठानविलोपापत्तेः निषिद्धानुष्ठाना-

---

1. भृत्य॰　2. राजनिमित्तत्वात्　3. नामधारक

पत्तेश्च । न हि धर्माधर्मौ मानान्तरेण सिध्यतः । तथा च विधिनिषेधविरहादुन्मत्तप्रायं जगदापद्येत । किं च, ज्योतिरादिसर्वशब्दाः किं विष्णौ रूढा यौगिका वा ? नाद्यः, ततो गुणपूर्त्यसिद्ध्यापत्तेः, अन्यत्रैव रूढत्वाच्च । न द्वितीयः, योगमात्रेण रूढार्थापहारायोगात् । किं च, योगो दुर्वचः । योगो हि अवयवशक्तिरूपः । अवयवाश्च यदि विष्णावेव शक्तास्तर्हि भगवन्नाम्नामावृत्तिमात्रमेव कृतं स्यात् ; न तु विशिष्टार्थलाभः । यदि विष्णोरन्यत्रावयवानां शक्तिस्तर्हि समुदायस्यापि तथाऽस्तु । एवं प्राप्ते, ब्रूमः—ज्योतिरादिशब्दवाच्यो हरिरेव । यस्मादेके शाखिनः तथा सर्वशब्दाभिधेयत्वेन हरिमेवाधीयते, तस्यैवोपक्रमात् । सूत्रे ज्योतिरिति शब्दान्तराणामप्युपलक्षणम् । तुशब्द एवकारार्थः । अयं भावः—ऐतरेयके द्वितीयारण्यके द्वितीयाध्याये 'एष इमं लोकमभ्यार्चत्पुरुषरूपेण' इत्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इति श्रूयते । अस्यार्थः—यास्ता एताः सर्वा ऋचस्तासामेकैव व्याहृतिः ; कर्माणि किन्तु, एकमेव व्याहर्तव्यम् , किं तदिति चेत् , प्राण एव, प्राणो विष्णुः । किं च, ये सर्वे वेदास्तेषामीश्वर एव प्रतिपाद्यः, किमुत र्चाम । अपि च, ये समुद्रादिघोषास्तेषामपि, किमु वेदानाम् । तत्र ऋचस्तु विशेषतः परमात्मप्रतिपादका इति जानीयादिति । एवं च कर्मकाण्डस्थानामपि सर्वशब्दानां हरौ यौगिकत्वं युक्तमेव । न च रूढ्या योगापहारः शङ्क्यः, 'तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तम्' 'तस्मान्माध्यमा इत्याचक्षते एतमेव सन्तम्' इत्यादिभिः पूर्वोक्तोपक्रमोपसंहारमध्यस्थवाक्यैर्योगेन रूढेरपहारोक्तेः । एतमेव परमात्मानं मुख्यतो यौगिकार्थं सन्तं शतर्च्यादिनामभिराचक्षते, न तु मुख्यतो रूढत्वेऽपि मुनीनिति प्रतीतेः । यद्यपि पङ्कजादिशब्दे रूढेर्योगापहारित्वं दृश्यते, तथाऽप्याचक्षत इति विद्वद्रूढिमहितत्वेनोक्तयोगस्य रूढ्यपहारित्वं युक्तमेव ॥

यत्तूक्तं धर्माधर्मोच्छेदः स्यादिति तदुद्धारार्थं सूत्रान्तरम्—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥

यथा मधुविद्यायां मधुशब्दस्येश्वरे वृत्तावपि न विरोधः, एवं सर्वशब्दानामीश्वरे वृत्तावपि न कर्मादिविरोधः, अन्यत्रापि वृत्त्यभ्युपगमात् । अयं तु विशेषः । लोके बह्व्यो वृत्तयः—रूढिः, योगः, योगरूढिः, रूढोपचारः, रूढलक्षणा, उपचारः, लक्षणा चेति । प्रयोगमात्रबाहुल्यं रूढिः ; यथा—घटपदस्य कुम्भे । योगः पाचकादौ । प्रवृत्तिनिमित्तं प्रयोगबाहुल्यं च योगरूढिः ; यथा—पङ्कजादिशब्दानां पद्मादौ । गौणस्य प्रयोगबाहुल्यं रूढोपचारः ; यथा—चित्रे सिंहः इति । रूढलक्षणा यथा—ग्रामो गच्छतीति पुरुषेषु ग्रामशब्दस्य । उपचारस्तु—अग्निर्माणवक इति । लक्षणा यथा—नद्यां घोष इति । हरौ तु महायोगो महारूढिर्योगश्च । तत्र तदितरत्र

प्रविष्टशब्दानां महायोगः, निरतिशयप्रवृत्तिनिमित्तसद्भावात् । तदेकनिष्ठानां महारूढियोगः ; नारायणादिशब्दानां बहुप्रयोगयुक्तत्वान्निरतिशयप्रवृत्तिनिमित्तसद्भावाच्च । स्तम्भादिशब्दानां हरौ विद्वद्रूढिसद्भावेऽपि सार्वजनीनताभावेनामहत्त्वात्ततो भेदः । अतः कर्मादिवाचिनामपि शब्दानां हरिर्वाच्य इति स्थितम् ॥

एवं कृत्स्नः कर्मकाण्डः कर्मब्रह्मोभयपर इति स्थिते तस्य ब्रह्मपरत्वं स्थालीपुलाकन्यायेन केषुचिद्वाक्येषूदाहृत्यमनुव्याख्याने—'जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः । आयजेतश्चायजेतो वसन्तिश्च वसन् स्थितः ॥ विगतच्छादनत्वात्तु गच्छो भूतक्षयंकरः । भुजूक्षेरयुक्तो हरिर्हुं च हुतमस्मिन् जगद्यतः ॥ स्वीयं संस्कुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः । नमन्त्यस्मिन्गुणा यस्मान्नम इत्येव कथ्यते ॥ स्फुटत्वात्फडिति प्रोक्तः' इत्यादि । व्याकृतं च सुधायाम् । तत्र वसन्तवाक्ये यथा—वसतीति वसः पचाद्यच्, तनोतीति तिः, औणादिको डिप्रत्ययः, पूर्वपदस्य च नकारागमः, वसंश्चासौ तिश्चेति वसन्तिः, सर्वत्र व्याप्तो वर्तमानो जगत्कर्ता चेत्यर्थः । तत्र संबुद्धिः वसन्ते । हिकारफकारादरार्थौ । जि जातम् ; पूर्ववज्जनेर्डिप्रत्ययः, ओतिः ओतम् ; अवतेः क्तिः । जातं जगत् ओतं प्रविष्टं यस्मिन् स ज्योतिः । षः प्राणः, चेष्टकत्वात्, 'षकारः प्राण आत्मा' इति श्रुतेः । ज्योतिश्चासौ षश्च ज्योतिषः, तस्य संबुद्धिः ज्योतिषेति । आयजेत इत्यपि संबुद्धिः । आ समन्तात् यजैर्यज्ञैरभिरित प्राप्त इत्यर्थः, यजेः 'घञर्थे कविधानम्' इति कः । संप्रसारणाभावश्छान्दसः । इन्द्रागच्छेत्यत्र इन्द्रेति अ इति गच्छेति संबोधनानि । गमेश्छदेश्च डप्रत्यये सति गं गतं छं छादनं यस्मादसौ गच्छः, निरविद्य इत्यर्थः । स्वाहाशब्दे स्वमात्मीयं यज्ञादिषु दत्तं हविरादि आहरति स्वीकुरुते इति स्वाहः । हृञो डप्रत्ययः । तदनन्तरम् 'अ' इति विष्णुनाम । तयोः समासे संबुद्धिः । नमःशब्दे नमतेरधिकरणार्थेऽसुन्प्रत्ययः । नमन्ति नियमेनास्मिन् वर्तन्ते कल्याणगुणा इत्यर्थ इति । इत्थं सर्वं कर्मकाण्डं व्याख्येयमिति मध्वमतस्थितिः ॥

अत्रेदं वक्तव्यम्—उदाहृतायाः 'ता वा एताः सर्वाः' इत्यादिश्रुतेरन्य एवार्थः, न तु त्वदुक्तः । तथा हि—ताः प्रकृताः वै प्रसिद्धा बृहतीरूपाः एता वर्णसमुदायात्मिकाः प्रत्यक्षाः सर्वा ऋचः पादबद्धा मन्त्राः, सर्वे वेदा ऋग्वेदाद्याः, सर्वे घोषा गद्याद्या वर्णाः ध्वनिविशेषा वा एकैव भूरात्मिका देवैरुपास्यमाना, न त्वन्या, व्याहृतिः भूरिति सुप्तस्य व्याहरणरूपा । भूरादिसर्वव्याहृतिगर्भाः प्राण एवोक्तः क्रियाशक्तिरेव यस्मात्ततः प्राण ऋच इत्येव विद्यादिति वाक्यदीपिकायां व्याख्यातम् । युक्तं चैतत्, 'स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासांचक्रिरे, ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति' इत्युपक्रमात्, सामानाधिकरण्यलाभादध्याहारक्लेशाभावाद्रूढेर्बलीयस्त्वाद्व्याकरणानुगुण्याच्च । त्वत्पक्षे हि तासां वेदाभिति चाध्याहारेण वैयधिकरण्येन च क्लिष्टता । व्याहृतिर्व्याहर्तव्यमिति च रूपार्थ-

परित्यागेन यौगिकार्थपरिग्रहः व्याकरणस्वरसभङ्गश्च । ‘ कर्तरि च कारके संज्ञायाम् ’ इति सूत्रेण हि संज्ञायां स्वारसिकः प्रत्ययः । व्यवहितयोजनामाश्रित्य चादसंज्ञायामपीति व्याख्यानेऽपि संज्ञायां चेत्येवंरूपपदद्वयवैयर्थ्यपरिहाराय संज्ञायामेवेत्युत्सर्गः, अगत्या तु क्वचिदसंज्ञायामिष्यत इति सूत्रकाराशयस्याभियुक्तैः स्थापितत्वात् । तस्मात्कर्मकाण्डस्थसकलपदानां हरौ यौगिकत्वमिति निर्मूलमेव । एवं च वसन्तादिवाक्यान्युदाहृत्य यज्जल्पित तदपि गर्भस्रावेणैव गतम्, अव्युत्पत्त्यतिशयसूचकं च । तथा हि यजैः यज्ञभिरिति व्याख्याय घञर्थे कः इति वदता घञर्थः सम्यग्बुद्धः संप्रसारणाद्विभ्यता छान्दसतां च शरणीकुर्वता वस इत्यत्रैव पचाद्यच् कथं विस्मृतः । न हि वसयजयोरण्वपि वैषम्यमस्ति । स्वाहेत्यत्र समासे संबुद्धिरिति वदता संबुद्धिलोपो दुर्लभ इति न ज्ञातम्; व्यासे हि लोपः सुलभः । किं चानेनानर्थकारिणा समासेन आमन्त्रितस्य इति षाष्ठिकस्वरश्च प्रतिपदं प्राप्नोतीति महान् दोषः, वैदिकप्रसिद्धलक्षणपरिगृहीतपदविभागाविरोधश्च प्रसिद्ध एवेत्यलं मृतहननेन ॥

वाजसनेयके श्रूयते यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम ॥ इति । तत्र पञ्चजनादिशब्दवाक्यो विषयः । विष्णुरन्यो वेति संदेहः । अन्य इति प्राप्तम्, यस्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषबलेन परमात्मतया तदाधेयानां पञ्चजनाकाशाना परमात्मत्वायोगात् । न ह्येकस्यैवाधाराधेयभावो युज्यते । एवं प्राप्ते सिद्धान्तमाह

## न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १२

अपिशब्दः पूर्वसूत्राद्विरोधपदमाकर्षति विष्णोरेव पञ्चजनाकाशादिशब्दवाच्यत्वे विरोधो नास्ति, स्वगतभेदशून्यस्यापि नानारूपत्वेन बहुत्वमङ्ख्योपसंग्रहाविरोधात् । न च प्रतिशरीरं परमात्मनो बहुरूपत्वमप्रामाणिकम्, शरीरान्तर्गताकाशप्राणादिपञ्चजननियामकत्वेन तेषु नानाभावस्य न्यायप्राप्तत्वात् । यस्मिन्नित्याधारतया निर्दिष्टादतिरेकेण तदाधेयाकाशादिषु भगवतोऽवस्थानादाधाराधेयभावोऽपि युज्यते । अतः परमात्मन एव पञ्चजनादिशब्दवाच्यत्वाणुक्तं समन्वयसूत्रम् ॥

भगवतः पञ्चजनशब्दवाच्यत्वे लिङ्गमाह

## प्राणादयो वाक्यशेषात् १३ ॥

‘प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः’ इति हि वाक्यशेषात् पञ्चजनावान्तरप्राणादीनां प्राणत्वप्रदाः । प्राणत्वादिप्रदत्वं च भगवत एव संभवतीति भावः ॥

ननु करीत्या माध्यन्दिनशाखायां पञ्चजनोक्तावपि काण्वशाखायामन्नस्याभिमतस्या-नाम्नानात् कथं निर्वाहः इत्याशङ्कायामाह—

ज्योतिषैकेषामसत्यन्ने ॥ १४ ॥

'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति किञ्चिद्दूरे आम्नातेन ज्योतिषा काण्वानां पञ्चकम् । तथा च ज्योतिरन्नशब्दयोरैकार्थ्यं पृथगेव वा पञ्चकमिति भावः । अधि-करणखण्डनं प्राग्वत् ॥

'आत्मन आकाशः संभूतः । आकाशाद्वायुः' इत्यादि श्रूयते । तत्राकाशवाय्वादि-शब्दवाच्यं विष्णुरन्यद्वेति संशये, अन्यदिति प्राप्तम्, तेषां कार्यत्वश्रवणात् । सिद्धान्तमाह—

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १५ ॥

आकाशादिषु विष्णुरेव स्थितः । अतस्तच्छब्दैरभिधीयते । कारणत्वेन चाकार्यत्वेन । न च कार्यकारणभावविरोधः, 'य आकाशे तिष्ठन्' इत्यादिना तत्स्थत्वसिद्धेः । न च तत्रापि विष्णुः कुत इति वाच्यम्, यथा विष्णुरविदितत्वादिरूपेण श्रुतिषु व्यपदिष्टस्तादृशस्यैवाकाशादिषु 'यमाकाशो न वेद' इत्यादिनोक्तेः । तथा चाकाशाद्युत्पत्तावाकाशाद्यन्तर्गतत्वेन भगवतोऽभिव्यक्त्या वाय्वादिगतस्वरूपाभिव्यक्तिहेतुत्वेन चावान्तरकारणत्वं युक्तम् । कार्यत्वे सति कारणत्वं ह्यवान्त-रकारणत्वम् । तथा च विष्णोरवान्तरकारणाभिधायकशब्दवाच्यत्वाद्युक्तं समन्वयसूत्रमिति भाव्याः । तत्तुच्छम्, तात्स्थ्यात्तच्छब्दोक्तौ मञ्चाः क्रोशन्तीत्यादिवदमुख्यत्वापत्तेः । मुख्ये संभवति गौणग्रहणायोगाच्च । 'नामानि सर्वाणि यम्' इति तु महातात्पर्यविषयत्वमात्रपरम् । एतेन 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि व्याख्यातम् । सामान्यखण्डनान्यपीह यथासंभवं योज्यानि ॥

इत्थमुक्तस्य परमात्मनि सर्वशब्दसमन्वयस्य बाधकमाशङ्क्य तत्परिहारार्थमष्टसूत्री प्रवर्तते । तथा हि— सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहारः ? यत्तु वैश्वानराधि-करणे 'साक्षादप्यविरोधम्' इति सूत्रेण समाहितम्, तदयुक्तम्, अबाधकैकव्यवहारे अव्यवस्था-पत्तेः । यदप्यस्मिन् पाद एवोक्तम्— 'शरीररूपकविन्यस्तेश्वरसंबन्धादन्यत्र व्यवह्रियते' इति, तदपि न, लोके लक्षणेतरवृत्त्यभावापत्तेः । यदपि 'कल्पनोपदेशाच्च मध्वादिवत्' इति सूत्रे-ऽन्यत्रापि रूढिमभ्युपेत्य समाहितम्, तदपि न, तथा सत्यक्षादिवन्नानार्थतापत्त्या परमात्मन एव मुख्यवाच्यत्वमिति प्रतिज्ञाव्याकोपात् इत्याशङ्कायां समाधत्ते सूत्रकारः—

समाकर्षात् ॥ १६ ॥

अस्यार्थः— न तावद्व्यवहारानुपपत्तिः, अन्यत्रापि रूढ्यादेरभ्युपगमात् । न चैव-

यथा द्विवदुभयत्र मुख्यता स्यादिति वाच्यम्, वैषम्यात्। अक्षादीनां ह्युभयत्रान्योन्यनिरपेक्षा शब्दवृत्तिः। इह तु नैवम्। किं तु स्वतो मुख्यया वृत्त्या परमात्मैकवाचिनां शब्दानां व्यवहारसिद्धयर्थं ततः समाकृष्यान्यत्र रूढत्वेन संकेतः। प्रवृत्तिनिमित्तानां च भगवदधीनतेति। उक्तं हि पाद्मे—'परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि। व्यवह्रियन्ते सततं लोकवेदानुसारतः॥' इति। लौकिकवैदिकव्यवहारसिद्धयनुसारत इत्यर्थः। उदाहृतसूत्राणां का गतिरिति चेत्, शृणु; प्रथमसूत्रे स्वातन्त्र्येण वाच्यत्वं नास्तीत्येतावन्मात्रमभिप्रेतम्। द्वितीये परमात्मसंबन्धोक्त्याऽन्योक्तमेवाभिसंहितम्। तृतीयेऽप्यविवेचितरूढ्याद्युक्तम्। इह पुनस्तस्यैव विवेचनमिति विशेषः॥

कथं तर्हि घटादौ मुख्यत्वव्यवहारः? तत्राह—

## जगद्वाचित्वात् ॥ १७ ॥

परमात्मन औपनिषदत्वादविदुषां जगत्येव शब्दमुख्यताभिमानः, अतद्गताभिमानवत्के यथेति भावः॥

## जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम् ॥ १८ ॥

यदुक्तम्—'तदधीनत्वात्तच्छब्दवाच्यत्वम्' इति, तज्जीववाय्वोरपि लिङ्गम्। 'अस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति' 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादिश्रुतिभ्य इति चेत्, न, तल्लिङ्गाभिधायकश्रुतीनामन्तर्यामिभगवत्परतया व्याख्यातत्वात्॥

समाकर्षस्य फलमाह—

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १९ ॥

समाकर्षेण हि वेदः कर्म वक्ति। तत्र परमात्मज्ञानार्थमिति जैमिनिः। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति। तस्मै स होवाच। द्वे विद्ये वेदितव्ये।' 'कथं नु भगवः स आदेशो भवतीति। यथा सौम्यैकेन मृत्पिण्डेन' इति च प्रश्नव्याख्यानाभ्याम्। अत्र हि सर्वमिदं कर्मादि कस्मिन् विज्ञाते विज्ञातं भवति, विज्ञातस्याप्यस्य फलं कस्मिन् ज्ञाते भवतीति शौनकप्रश्ने, सर्वमपराविद्यया विज्ञातं भवति, पराविद्याविषयपरमात्मज्ञानेन च सफलं भवतीत्यतो द्वे विद्ये वेदितव्ये इत्यङ्गिरसो व्याख्यानम्, श्वेतकेतुप्रश्ने चोद्दालकस्य व्याख्यानमिति भावः। स्पष्टं चैवमेके शाखिनः पठन्ति—'ऋचो अक्षरे' इत्यादि। अस्यार्थः—तदक्षरं यो न वेद सः कर्मादिमात्रविषयया ऋचा किं करिष्यति। यतः सर्वा ऋचः परमे व्योम्न्यक्षरे, तज्ज्ञानार्थमेव कर्मादिकं वदन्ति, तस्यैव सर्ववेदाधारत्वात्। ये पुनस्तदक्षरं विदुस्ते सम्यगासत इति॥

स्यादेतत् । वेदेन कर्म न वक्तव्यम्, परमात्ममात्रकथनेनापि कृतकृत्यत्वात् । न च मुख्यत्वस्यानुपपत्तिः, खण्डपदानामन्यवाचकत्वेन तदुपपत्तेः । ततोऽन्यकथनस्याफलत्वान्न तत्र समाकर्ष इत्याशङ्क्याह—

## वाक्यान्वयात् ॥ २० ॥

अयं भावः—अन्यथावचने पदान्वय एव स्यात्, न तु वाक्यान्वयः । तथा चात्ममाधिकारिव्यतिरिक्तानां ज्ञानं न स्यादेव, 'कश्छन्दसां योगमावेद' इति श्रुतेः । तथा च कर्मकाण्डस्य भगवति पदान्वयोऽपि कर्मभिश्चित्तशुद्धिं [1]संपाद्य बोद्धव्य इति तान्यवश्यं वक्तव्यानीति स्थितम् ॥

कर्मोक्तेः परमात्मज्ञानार्थत्वं केन प्रकारेणेत्याकाङ्क्षायामाह—

## प्रतिज्ञासिद्धेर्लिङ्गमित्याश्मरथ्यः ॥ २१ ॥

'नान्यः पन्था अयनाय विद्यते' इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इति आश्मरथ्यो मन्यते । सपरिकरे हि कर्मण्युक्ते यस्मादेवमनित्यफलमिदं तस्मान्नान्यः पन्था इति ज्ञानातिरिक्तमोक्षोपायनिषेधो युज्यत इति सिध्यति । श्रूयते च—'परीक्ष्य लोकान् कर्मचितान्' इति ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २२ ॥

उत्क्रमिष्यतो मुमुक्षोः एवंभावात् मोक्षजनकज्ञानसाधनत्वात् कर्म वक्तीत्यौडुलोमिः । फलोक्तिस्तु रुच्यर्था । तदुक्तम्— 'रोचनार्था फलश्रुतिः' इति ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २३ ॥

कर्मणां [2]सत्त्वशुद्धिद्वारेणाराटुपकारकत्वं तावदस्त्येव । किं तु सर्वं कर्मादिकं परमात्मनि स्थितम् । अतः सर्वाधारत्वरूपेण ज्ञातव्य इति 'एष सेतुर्विधरणः' इत्यादौ वक्तुमाधेयं कर्मापि वेदेनोच्यत इति साक्षादपि परमात्मज्ञानोपयोगितां काशकृत्स्नाचार्य आहेत्यर्थः । सर्वेषामप्येषां पक्षाणामात्ममतत्वेऽपि शिष्यप्रसिद्ध्यर्थं तत्तन्नाम्नोपन्यासः । अधिकारिभेदाच्च न विरोधः । उक्तं च पाद्मे— 'कृष्णद्वैपायनमतादेकदेशमतः [3]परे । वदन्ति ते यथाप्रज्ञं न विरोधः कथंचन ॥' इति । अतो भगवज्ज्ञानाद्यर्थं वैदिकादिशब्दानामन्यत्र समाकर्षेण व्यवहारोपपत्तेर्युक्तं हरेः सकलशब्दमुख्यार्थत्वमिति माध्वाः । अत्र समाकर्षप्रसक्तानुप्रसक्त्या यत्कर्मणोऽपि ज्ञानं प्रति शेषत्वं कथितं तेनैव 'सर्वे वेदा यत्पदमामनन्ति' 'नामानि सर्वाणि यमाविशन्ति' इत्यादीनां गतार्थत्वात् समाकर्षस्तावन्निर्मूलो दुरुपपादश्च । तथा हि— कोऽयं समाकर्षः? न तावद्दृश्याच्छाखाया

---

1. संभाव्य 2. सत्त्वशुद्धिद्वारेण तदुप० 3. ०देकदेशविदः

समाकर्षणम्, शब्दस्य तदयोगात्, परमात्मसंबन्धस्य अप्राप्तेश्च। न च सत्येव परमात्मसंबन्धेऽन्यत्रापि संकेतमात्रम्, संकेतस्यापीश्वरेच्छारूपत्वेन नित्यत्वात् अक्षादिसाम्यतादवस्थ्याच। अनित्यत्वे तु वेदपौरुषेयतापत्तिप्रवेशः। यदाहुः— 'यत्नतो हि निषेध्या नः पुरुषाणां स्वतन्त्रता' इति। सकलमहर्षिवचनविरोधश्च। यथाऽऽह जैमिनिः— 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति। कात्यायनोऽप्याह— 'सिद्धे शब्दार्थसंबन्धे' इति। तत्रैव महाभाष्यकारोऽपि सिद्धशब्दं नित्यपर्यायतया [1]अव्याकयत्। माध्वग्रन्थेष्वपि 'न विलक्षणत्वादस्य तथात्वं च' इत्यादिसूत्रेषु तथोक्तेश्च। उपजीव्यविरोधश्च, लोकगृहीतशक्त्यनुसारेणैव समाकर्षबोधकवचसामपि प्रवृत्तेः। किं च, निरूढलक्षणयैव गतार्थत्वात् समाकर्षे प्रमाणं नास्ति। विनिगमकाभावाच्चि सैन्धवादिपदानां नानार्थतेति सकलतान्त्रिकमर्यादा। न च स्वन्मते विनिगमनाविरहोऽस्ति। समाकर्षशब्देन निरूढलक्षणैव विवक्षितेति चेत्, न, अपसिद्धान्तात्। 'कल्पनोपदेशाच्च' इति सूत्रे तत्त्वप्रकाशिकादौ लोके वृत्तेः सामविष्योक्तेरिति दिक्॥

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात् ॥ २४ ॥

'इत्वैतमेव पुरुषं सर्वाणि नामान्यभिसंवदन्ति, यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिसंविशन्ति' इति प्रतिज्ञादृष्टान्तानुरोधात् प्रकृतिशब्दवाच्यः स एव॥

## अभिध्योपदेशाच्च ॥ २५ ॥

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतौ हि मायायाः प्रकृतिशब्दवाच्यत्वमुक्तम्। माया चेश्वरेच्छैव, 'महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते॥' इति स्मृतेः। इच्छैव चाभिध्या। साऽपि भगवत्स्वरूपैव, 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः' इति श्रुतेः। जूतिः प्रेरणा। नन्विच्छा न भगवत्स्वरूपम्, 'मायिनं' 'तवेच्छा' इत्युदाहृतस्थल एव संबन्धाभिधानादिति चेत्, न, 'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च। परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते॥' इति ब्रह्माण्डवचनात्॥

नन्वेवमपि इच्छाद्वारेण प्रकृतिशब्दवाच्यत्वमागतं न तु साक्षात्; अत आह—

## साक्षाच्चोभयाम्नानात् ॥ २६ ॥

'एष स्त्री एष पुरुष एष प्रकृतिरेष आत्मैव ब्रह्मैष लोक एष आलोको योऽसौ हरिरादि-

1. व्याख्याति

स्त्वनादिरनन्तोऽनन्तः परमः पराद्विश्वरूपः’ इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानादित्यर्थः ॥

तत्र प्रकृतिशब्दस्य प्रवृत्तिनिमित्तमाह—

## आत्मकृतेः परिणामात् ॥ २७ ॥

प्रकृतिं प्रविश्य महदादिरूपेण परिणतां कृत्वा आत्मानं च महदादिरूपेण प्रेरणाय बहुधा करोतीति प्रकर्षेण करोतीति व्युत्पत्तिर्बोध्येत्यर्थः । ‘अथ ह्येव आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार । तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षते’ इति भाल्लवेयश्रुतेः । ‘अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् । अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ॥’ इति नारदीये ॥

## योनिश्च हि गीयते ॥ २८ ॥

अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम् । तच्चास्यैव गीयते— ‘यद्भूतयोनिं परिपश्यन्ति धीराः’ इति । ‘व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते । सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥ उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् । प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते ॥’ इति ब्रह्माण्डे । किं च, भगवतः स्त्रीरूपत्वादपि तच्छब्दोपपत्तिः । न स्त्रीति निषेधस्तु प्राकृतस्त्रीत्वाभावमात्रार्थः । अन्यथा ‘न स्त्री न षण्डो न पुमान् न जन्तुः’ इति निषेधात्पुंस्त्वमपि न सिध्येत् । तस्माद्विष्णुरेवाशेषस्त्रीशब्दवाच्य इति युक्तमेव समन्वयसूत्रमिति माध्वाः । खण्डनं तूक्तमेव ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

शून्यादिशब्दानां परमात्मवाचित्वाभावात् समन्वयानुपपत्तौ प्राप्तायां सिद्धान्तमाह—एतेनेति । एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन सर्वे शून्यादिशब्दा अपि भगवद्विषयतया व्याख्याता इत्यर्थः । ‘एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च’ इति महोपनिषदि । ‘शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् । तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥ नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः । अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश उच्यते ॥ सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता । अन्येषु व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥’ इति महाकौर्मे । शमूनमिति; स्वसुखादन्यसुखमल्पं करोतीत्यर्थः । भावयितुमुत्पादयितुमशक्यत्वादभावः । नाश्यत्वात्; अश्यो भक्ष्यो न भवतीति हेतोः न अश्यते भक्ष्यते इति व्युत्पत्त्या नाश इत्यर्थः । सर्वस्येति; एतेन ‘असद्वा इदम्’ इत्यादौ प्रयुज्यमाना असदादयः शब्दा अपि संगृहीताः । न चासतोऽन्याधीनत्वायोगः, एतत्स्मृतिबलादेव स्वीकर्तव्यत्वात् । अलीकत्वादीनामपि भगवत्प्रेरणामन्तरेणानुपपत्तेश्च । न हि कारणमन्तरेण तत्रैव तदुपपद्यते । ईश्वरस्य तु स्वातन्त्र्याददोषः । द्विरुक्तिस्तु अध्यायार्थस्य दार्ढ्यार्था । ‘अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः । द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये ॥’ इति वाराहसंहितायाम् । विनिर्णये

निर्णयग्रन्थे । तस्मादिदं सकलस्वरवर्णवाक्यात्मकशास्त्रयोनित्वं ततोऽनन्तगुणत्वं चेति माध्वाः । तत्र तादधीन्यादिकं प्रागेव खण्डितम् । शिवविरिञ्च्योरतिशयसक्तिरप्युक्ता । किं चैतद्बलेनान्यर्थो-मित्यमेकं सर्वशब्दैः सिध्येत्, न गुणान्तरम् । किं बहुना ? ज्ञानानन्दादिरूपताऽपि न स्यात्, आनन्दादिशब्दानामपि असदादिशब्दवर्जियामकतामात्रपर्यवसायित्वात् । सिध्येद्वा अलीकताऽपि, 'आत्मकृतेः परिणामात्' इति सूत्रे वर्णितस्यात्मनः कार्यत्वबहुरूपत्वादेरिव 'स्वाप्ययात्' इति सूत्रोक्तलयस्येव चालीकत्वस्याप्यचिन्त्यशक्त्याविरोधात् । अलीकत्वेऽपि कारणप्रश्नो भगवदधीनतया निर्वाह्य इत्यादिचर्चाऽत्र माध्वस्यैव शोभते, न तु विदुषाम् । गुणानां स्वरूपमात्रत्वे इष्टापत्तिश्च । विशेष इत्यपि शब्दमात्रमित्युक्तमिति दिक् । तस्माद्वचनाभासकल्पनामात्रमवलम्ब्य प्रवृत्तमिदं माध्वमतम्, न त्वत्र न्यायलेशोऽपीति स्थितम् ॥

भट्टोजिभट्टरचिते ग्रन्थेऽस्मिंस्तत्त्वकौस्तुभे ।

समाप्तं प्रथमाध्यायमध्वभाष्यस्य खण्डनम् ॥

इति श्रीमद्विद्वन्मुकुटमाणिक्यलक्ष्मीधरभट्टसूरिसूनुभट्टोजिभट्टविरचिते

श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे प्रथमस्याध्यायस्य

चतुर्थः पादः ॥

समाप्तश्च प्रथमोऽध्यायः ॥

# द्वितीयोऽध्यायः ॥

प्रथमेऽध्याये विष्णौ समन्वय उक्तः । तत्र युक्त्यादिविरोधं निराकर्तुं द्वितीयाध्याय आरभ्यते इति माध्वाः ; तन्न, त्वदभिमतेऽनन्तगुणपरिपूर्णे समन्वयो दुरुपपाद इति प्रथमाध्यायगततत्तदधिकरणभङ्गेन स्फुटीकृतत्वात् । एवं च द्वितीयाध्यायस्तत्र्द्वीत्या अभित्तिचित्रायते । किं च, तर्कागोचरे परमेश्वरे युक्तिविरोधोऽकिंचित्कर इति वदतस्तव मतेऽविरोधाध्यायोऽकाण्डताण्डवप्रायः । एवं च समन्वयमविरोधं चोपजीव्य प्रवृत्तौ साधनफलाध्यायावप्यफलावेवेति समूलमुन्मूलितमेव मध्वदर्शनम् । तथाऽपि तत्र तत्र दूषणान्तराणि बहूनि सन्तीति स्फुटीकर्तुं प्रवर्तामहे ॥

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥

विष्णौ समन्वयश्चेत्तर्हि पाशुपताद्यागमरूपस्मृतेरनवकाशत्वं स्यात् । तथा च तद्विरोधात् श्रुतिरन्यथा नेयेति पूर्वपक्षः । एवं सति पाञ्चरात्राद्यागमस्यानवकाशता स्यात् । तथा च सर्वज्ञपरमात्मविष्णुप्रणीतपाञ्चरात्रोपष्टम्भात् श्रुतेर्विष्णावेव समन्वय इति सिद्धान्तः ॥

नन्वेवं पाशुपतादेरप्रामाण्यं स्यादिति चेत्, इष्टापत्तिः । तथा च सूत्रम्—

## इतरेषां चानुपलब्धेः ॥ २ ॥

इतरेषां पाशुपतादिषूक्तानां फलानर्थानामुक्तानुष्ठानपरित्यागयोः कृतयोरपि प्रत्यक्षतोऽनुपलब्धेः । तथा च तानि मोहनार्थान्येवेति भावः ॥

ननु योगफलं दृश्यत इत्याशङ्क्य नेत्याह—

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

योगफलस्याप्यभ्यासकालेऽदर्शनादित्यर्थः । एवं चावैदिकस्मृतीनामप्रामाण्यात् न समन्वयाविरोध इति माध्वाधिकरणशरीरम् । तुच्छं चैतत् । पाशुपतपाञ्चरात्रयोर्वैषम्यस्य ब्रह्मणा-

ऽपि दुरुपपादत्वात् । तथा हि— तत्प्रणेत्रोः शिवविष्णवोः परमात्मत्वेन श्रुत्यादिषु कथनम्, फलविशेषस्य प्रत्यक्षेणोपलब्धिः, अनुपलब्धिस्थलेऽप्यङ्गन्यूनताकल्पनम्, क्वचित्तु कालान्तरे फलमिति स्वीकारः, [2]शापदग्धब्रह्माद्यधिकारिपरं पूर्वतन्त्रे अप्रामाण्यस्थापनं चेत्यादि तावदुभयोस्तुल्यम् । स्फुटीकृतं चेदं प्रागेव । प्रत्युत पाशुपतोक्तस्यैव शिवोत्कर्षविभूतिरुद्राक्षादेरनेकोपनिषत्संवादः, अथर्वशिखाथर्वशिरःश्वेताश्वतरकैवल्योपनिषत्कालाग्निरुद्राक्षजाबालादिषु बहुशस्तद्दर्शनात् । तथा शिवोत्कर्षपराणि शिवपुराणादीनि [3]ग्रन्थसंख्यया विष्णुपुराणादिभ्योऽधिकानीति स्पष्टमेव । पुराणसंख्याबाहुल्यमपि प्रभासखण्डे दर्शितम्— 'चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शेषेषु भगवान् शिवः ॥' इति । उपपुराणानि तु शिवपराण्येव बहूनीति स्पष्टमेव तद्दर्शिनाम् । भूयसामनुग्रहश्च न्याय्यः । उक्तं हि जैमिनिना— 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्' इति । वस्तुतस्तु न हि निन्दान्यायाश्रयणात् विरोध एव नास्ति । किं तु 'शैवागमोऽपि द्विविधः श्रौताश्रौतविभागतः' इति वायुसंहितावचनात् श्रौतपाशुपतस्योपनिषत्संवादिनो वैदिकविषयता ; इतरस्य तु पाञ्चरात्रवत् भ्रष्टविषयतेति विवेकः ॥ १ ॥

स्यादेतत् । श्रुत्यादिप्रामाण्यमप्येवं सति भज्येत, कारीर्याद्यनुष्ठानेऽपि फलादर्शनात् । क्वाचित्कफलस्य काकतालीयत्वात् पाशुपतादिवदिति प्राप्ते आह सूत्रकारः—

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

अस्य श्रुत्यादेस्तथात्वं पाशुपतादिसाम्यं न, कुतः ? श्रुतेरपौरुषेयतया पाञ्चरात्रादेश्च वेदानुसारितया पाशुपतादिभ्यो विलक्षणत्वात् । ननु वेदस्यापौरुषेयत्वमपि कुत इत्याकाङ्क्षायामावृत्त्या 'अस्य तथात्वं च शब्दात्' इत्युत्तरम् । 'वाचा विरूपनित्यया' (ऋ. ८-६४-६) 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' इत्यादिश्रुतिस्मृतिवचनादित्यर्थः । न चैवं वक्तृवाक्यार्थयथार्थज्ञानरूपगुणाभावे प्रामाण्यानुपपत्तिः, प्रामाण्यस्योत्पत्तिज्ञप्त्योः स्वतस्त्वात् ॥

## दृश्यते तु ॥ ५ ॥

इति सूत्रम् । कारीर्यादिफलं दृश्यते इत्यर्थः । भविष्यत्पुराणे— 'ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा । भारतं पाञ्चरात्रं च वेद इत्येव शब्दिताः ॥ पुराणानि च यानीह वैष्णवानि विदो विदुः । स्वतः प्रामाण्यमेतेषां नात्र किंचिद्विचार्यते ॥ यत्नेपूर्ण न दृश्येत पूर्वकर्माख्य कारणम् । नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः ॥ इतः प्रामाण्यमन्येषां न स्वतस्तु

1. परमात्मत्वेन 2. शापदग्धब्रह्माद्यधिकारिता, पूर्वतन्त्रे प्रामाण्यस्थापनं 3 ग्रन्थसंख्यायां

कर्दमेन । अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशयः ॥' इति। इहापि खण्डनं प्राग्वत् । आगमानां वैषम्यस्य दुर्बलत्वात् । इतराप्रामाण्योक्तेर्न हि निन्दान्यायेनैव नेयत्वादिति दिक् ॥ २ ॥

मृदब्रवीदित्यादिबाधितार्थकथनाद्वेदप्रामाण्यमयुक्तमिति प्राप्ते आह—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ६ ॥

मृदाद्यभिमानिदेवता व्यपदिश्यते । तासामितरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्व-
त्रास्ति । अतो भाषणादिकं युज्यते ॥

## दृश्यते च ॥ ७ ॥

दृश्यते च तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च— 'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः । अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः । ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः ॥' इति । अस्माकमप्यविरुद्धोऽयमर्थः ॥ ३ ॥

स्यादेतत् । विष्णोर्जगत्कारणत्वं न युक्तम्, 'असदेवेदमग्र आसीत्' 'असतः सदजायत' इत्यादिश्रुत्या असतः कारणत्वोक्तेः, तदुपष्टम्भात्कारणं प्रलयेऽसत्, वस्तुत्वात् कार्यवत् इत्यनुमानाच्चेति प्राप्ते सूत्रम्—

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ८ ॥

असत् न कारणम्, प्रतिषेधबुद्धिविषयत्वात्, शशशृङ्गवत् । किं च,

## आपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ९ ॥

असतः कारणत्वमसमञ्जसम्, प्रलये कारणीभूतासन्मात्रावशेषप्रसङ्गादित्यर्थः ॥

इत्यापत्तिं परिहर्तुं सूत्रान्तरम्—

## न तु दृष्टान्तभावात् ॥ १० ॥

प्रलये सर्वासत्त्वं न युज्यते, दृष्टान्तभावादित्युपलक्षणम् । वियदाद्युत्पत्तिः सन्मूला उत्पत्तित्वात् घटोत्पत्तिवत्, विमतो नाशः सशेषः, नाशत्वात् घटनाशवत् इत्यनुमानस्य 'सन्मूलाः सोम्येमाः प्रजाः' इत्याद्यनेकश्रुतीनां च सत्त्वात् इत्यर्थः ॥

## स्वपक्षदोषाच्च ॥ ११ ॥

प्रलये सर्वस्यासत्त्वमित्युक्तिः प्रलयकालाभ्युपगमेनैव व्याहतेति सूत्रार्थः ॥

## तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ १२ ॥

तर्केण सतः कारणत्वमसतो नेति यदुक्तं तदाक्षिप्यानेन समाधीयते । तथा हि—यत्तर्केण साध्यते ततोऽन्यथाऽपि प्रतितर्केण सुसाधमिति सर्वानुमानाप्रामाण्यमिति चेत्, एवं सर्वत्रानुमानाप्रामाण्ये शब्दस्यापि संगतिग्रहादिमूलकस्याप्रामाण्यापत्तौ मोक्षोऽपि न सिध्येत् । किं च, यस्तर्कः सोऽप्रतिष्ठः इत्येवंरूपव्याप्तेरभ्युपगमेऽयमेव तर्कः सुस्थ इति न सर्वतर्कापलापः सुकरः । तथा च प्रामाणिकतर्को न प्रत्याख्येय इति भावः ॥

स्यादेतत् । मा भूदसतः कारणत्वम् । तथाऽपि विष्णोस्तन्न सिध्यति । जगत् निष्कारणम्, अचेतनकारणम्, जीवकारणं वा, कार्यत्वात् दध्यादिवदिति युक्त्या अकस्मादित्यादिश्रुत्युपष्टब्धया विरोधादित्याशङ्क्याह—

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

सकारणत्वे दृष्टान्तभावेन निष्कारणत्वादौ तदभावेन चेत्यर्थः । दध्याद्यपि पक्षसमम् । न च घटादिदृष्टान्तेन जीवकर्तृकत्वं सिध्यति, जीवस्य व्यापकतावच्छेदककोटिप्रवेशे निष्प्रमाणकगौरवात् । तथा च विष्णोः सिद्धं जगत्कारणत्वमिति माध्वाधिकरणशरीरम् । खण्डनं प्रागवत् । किं च, शशशृङ्गादिवन्न जनकमिति माध्वेन दुरुपपादम् । अलीकस्यापि ज्ञानविषयतां दृष्टान्ततां निषेधप्रतियोगितां स्वीकुर्वता जनकताऽपि कुतो न स्वीकार्या । 'सर्वस्य तदधीनत्वात्' इति स्मृतिबलेनासतो विष्णवधीनतां प्रथमाध्यायान्ते सिद्धान्तयता 'असतः सदजायत' इति श्रुतिसिद्धकारणतायाः सुतरां स्वीकार्यत्वात् । न च 'एतेन सर्वे व्याख्याता व्याख्याताः' इत्यत्रासदादिशब्दानां विष्णुरर्थ इत्युक्तत्वादयुक्तमिदमिति वाच्यम्, ब्रह्मवाचकत्वेऽपि इतरवाचकतायाः 'समाकर्षात्' इति सूत्रे स्वीकृतत्वात् । अन्यथा प्रकृताधिकरणस्य निरालम्बनत्वापत्तेः । यत्तु प्रकृताधिकरणमेव प्रागभावप्रध्वंसयोर्जनकतानिराकरणपरमित्यनुव्याख्यानन्यायसुधयोरुक्तम्, तदपि दुरुपपादमेव तथा हि—सर्वे पदार्थाः भावाभावोभयात्मकाः । प्रागभावप्रध्वंसाभावात्यन्ताभावेष्वपि प्रमेयत्वादेर्भावरूपस्य सत्वात्, तस्य च धर्मिणा सहात्यन्ताभेदात् । एवं घटादिरप्यन्योन्याभावेन सहात्यन्ताभिन्नत्वादभावरूप इति सुधायां स्पष्टम् । 'खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् । भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ॥' इति स्वतिसिद्धान्तानुगुणं च । एवं स्थिते कथमभावकारणतां निराकुर्याः ?

स्यादेतत् । सर्वे भावाभावोभयात्मका इति सत्यम् ; तथाऽप्यस्ति घटो भावः प्रागभावादिस्त्वभावः इति व्यवस्था । 'विशेष्यतैव धर्मित्वं प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं भावा-

भावत्वमत्र हि[1] ॥' इति अनुव्याख्यानं विवृण्वता सुधाकृता घटो हि प्रथमं विधित्वेन धर्मि-रूपेण प्रतीतोऽनन्तरं घटो नेति घटनिषेधात्मतया प्रतीयते । प्रागभावादिस्तु प्रथमं निषेधत्वेना-वगतोऽनन्तरं विधितया प्रतीयत इति व्यवस्थोपपादनादिति चेत्, भवेदेवं यदि धर्मधर्मिणोर्भेदः स्यात् । भेदप्रतिनिधिर्विशेष इति तु प्रागेव निराकृतम् । किं च, भावादिशब्दैर्नञादिभिश्च प्रतीति-रनियतेति कथं प्राथम्यादिनिर्वाहः ? एवमनुमितिरप्यनियता । प्रत्यक्षबोधस्त्वतीन्द्रिययोर्भावाभावयो-र्नास्ति । तस्मात् भावत्वाभावत्वे अखण्डोपाधी इति निष्कर्षात्कुतस्त्वदुक्तो विभागः ? एवमभाव-त्वप्रमेयत्वादीनां घटत्वादिजातीनां च व्यक्त्याभेदाच्छब्दान्निर्विकल्पकापत्तिः ; शक्तिग्रहानुप-पत्तिश्च । सादृश्योपाधौ शक्तिग्रह इत्यपि तुच्छम्, सादृश्येऽपि 'यावद्वस्तु न भेदवत्' इति तत्त्वविवेकोक्तेः । 'एतादृशं च सादृश्यं पदार्थेषु पृथक्पृथक् । एकस्मिन् प्रविनष्टेऽपि यतोऽन्य-त्रैव दृश्यते ॥' इति वैशेषिकनिरासे अनुव्याख्यानोक्तेश्च त्वद्रीत्या जातितौल्यात् । 'आनन्द-मात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा' इति वदता माध्वेन लौकिकैः करपादादिभिः मत्स्यकूर्मवराहादिभिश्च ब्रह्मणः सादृश्यस्य दुरुपपादत्वाच्च । अचिन्त्यशक्तौ सर्वं स्वीकुर्वता एकत्वानेकत्वाणुत्वमहत्त्वादिवच्छून्यत्वप्रागभावत्वप्रध्वंसत्वादेरप्युक्तश्रुतिबलेन सुवचत्वा-च्चेति दिक् ॥ ४ ॥

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

भोक्तुर्जीवस्यापत्तेः 'परेऽव्यये सर्व एकीभवन्ति' इति मोक्षे ब्रह्मत्वापत्तिश्रवणात् तयोरविभागो भेदाभावः । ततो न ब्रह्मणो जगत्कारणत्वं युक्तमिति पूर्वः पक्षः । सिद्धान्तस्तु— स्यादेवं यदि मुक्तस्य ब्रह्माभेदे प्रमाणं लभ्येत । एकीभावोक्तिस्तु स्याल्लोकवत् । यथा एकीभूता ब्राह्मणाः एकस्थाना एकमतयो वा तथेहापीत्यर्थः । खण्डनं प्राग्वत् ॥ ५ ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

हरेः स्वातन्त्र्येण जगत्कारणत्वे युक्तिविरोधं निराकर्तुमिदमधिकरणम् । कर्त्रनधीनस-साशक्त्यादिमत्कारणान्तरसापेक्षा खलु घटादिसृष्टिर्दृष्टा । ततो महदादिसृष्टिरपि कर्तृव्यतिरिक्त-स्वतन्त्रकारणसापेक्षा, सृष्टित्वात् घटादिसृष्टिवत् । ततश्च न ब्रह्मणः स्वातन्त्र्यमिति प्राप्ते, महदादिसृष्टौ यत् स्वतन्त्रं कारणं तस्य तदनन्यत्वं ब्रह्मानन्यत्वमिति प्रतिज्ञा । ब्रह्मणोऽन्यस्य स्वतन्त्रकारणता नास्तीति फलितोऽर्थः । कुतः ? 'किंस्विदासीदधिष्ठानमारम्भणम्' इति श्रुतेः । अनया हि अधिष्ठानमुपादानमारभ्यतेऽनेनेत्यारम्भणं साधनं वा कतमदासीत् इति स्वतन्त्रमन्य-

1. भावाभावत्वमस्ति हि

नासीदित्येवोच्यते। ननु किंशब्दस्य प्रश्नेऽपि दर्शनात् कथमिहाक्षेपार्थतानिर्णय इति चेत्, 'किंस्विद्धिमस्य' इत्यत्र 'अग्निर्हिमस्य' इत्यादेरिवेहोत्तरस्यानुक्तेः। तस्मादाक्षेप एवायम्। किं च,

## भावे चोपलब्धेः ॥ १६ ॥

यदि भगवत्सृष्टौ स्वतन्त्रं कारणान्तरं स्यात्, तर्हि श्रुतिस्मृत्यादिभिरुपलभ्येत इति सूत्रार्थः ॥

ननूपलभ्यत एव 'अद्भ्यः संभूतः', 'प्रकृतिं स्वामवष्टभ्य' इत्यादिश्रुतिस्मृतिषु इत्याशङ्कायां सूत्रान्तरम्—

## सत्त्वाच्चापरस्य ॥ १७ ॥

अस्यार्थः—स्यादयं दोषो यदि वयं ब्रह्मातिरिक्तं कारणमेव नास्तीति ब्रूमहि। न चैवम्, अपरस्य तदधीनस्य प्रकृत्यादेः कारणस्य सत्त्वात्। तथा च श्रुतिः—'द्रव्यं कर्म च कालश्च स्वभावश्चेतनो धृतिः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया॥' इति। चेतनो जीवः। धृतिः चित्प्रकृतिः, धारकत्वात् ॥

## असद्व्यपदेशान्नेति चेन्न, धर्मान्तरेण वाक्यशेषात् ॥ १८ ॥

इति सूत्रान्तरम्। ईश्वराधीनं प्रकृत्यादि स्वीकृत्य समाहितम्। तन्नोपपद्यते—'नासदासीत्' इत्यादिना महाप्रलये ब्रह्मातिरिक्तसकलनिराकरणादिति चेन्न, स्वातन्त्र्यरूपधर्मान्तरेण निराकरणस्याभिप्रेतत्वात्। तथा च वाक्यशेषः—'तम आसीत्' इति। प्रकृतिरेव हि तमः, आच्छादकत्वात्। 'तस्माद्धान्यत्' इति वाक्यशेषः। तस्मात् ब्रह्मणोऽन्यत् प्रकृत्यादिकं परस्परं स्वातन्त्र्यादिधर्मोपेतं नासीदिति तत्स्वरूपाभ्युपगमेन परत्वमात्रं निषिध्यते, अन्यथा परशब्दवैयर्थ्यादिति भावः ॥

स्यादेतत्। सिद्धान्तेऽपि प्रकृत्यैव महान्तं महतैवाहंकारं सृजतीति तत्रापि प्रकृत्यादिकमुपादानीकृत्यैव कालादिकं निमित्तीकृत्यैवेति स्वीक्रियते। तत्कथं स्वातन्त्र्यम्? वैपरीत्यस्यापि सुवचत्वात् इत्याशङ्कानिरासार्थं सूत्रम्—

## युक्तेः शब्दान्तराच्च ॥ १९ ॥

अस्यार्थः—सत्यमस्ति भगवतोऽपि सहकारिनियमः। किंतु नासौ कुलालादेरिव साहाय्याय व्यत्ययस्य वा करणे शक्त्यभावनिबन्धनः, येन तस्य स्वातन्त्र्यं तेषां पारतन्त्र्यं वा न स्यात्। किं नाम? स्वेच्छायत्त एव नियमः। स्वेच्छायत्तमेव चेतरेषां सत्ताशक्त्यादि। उक्तं च—

'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते। तदा साधनसंपत्तिरैश्वर्यद्योतिका भवेत्॥'
इति। शक्तस्यापीश्वरस्य सत्तान्नियमामुसरणेच्छा तु स्वभावादेव युज्यते; तदिदमुक्तं—श्रुतेरिति। श्रुत्यन्तरात् स्वातन्त्र्यादिबोधकश्रौतशब्दादित्यर्थः॥

## पटवच्च॥ २०॥

विमता सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या, सृष्टित्वात् पटसृष्टिवदित्यर्थः॥

अस्तु तर्हि तद्वदेव कर्त्रनधीनसत्ताशक्तिमत्कारणसाध्यताऽपीत्याशङ्कापनोदनार्थं सूत्रान्तरम्—

## यथा च प्राणादि॥ २१॥

यथा हि प्राणशरीरेन्द्रियादयो भगवदधीना एवं दण्डादयोऽपि, न तु स्वतन्त्राः। तथा च साध्यविकलो दृष्टान्त इति भावः। अतो भगवतः स्वातन्त्र्येण सर्वकर्तृत्वे विरोधाभावात् युक्तं सर्वगुणपरिपूर्णत्वं विष्णोरिति माध्वाधिकरणशरीरम्। खण्डनं प्राग्वत्॥ ६॥

स्यादेतत्। विष्णुर्जगत्कर्तेत्ययुक्तम्, अहं करोमीति प्रत्यक्षसिद्धकर्तृताकस्य जीवस्यैव जगत्कर्तृत्वे लाघवात्, अतिरिक्तविष्णुकल्पने गौरवात्, 'जीवाद्भवन्ति भूतानि' इत्यादिश्रुतेश्चेति प्राप्ते, सिद्धान्तमाह—

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः॥ २२॥

यद्युक्तश्रुत्यादिबलाज्जीवः स्वतन्त्र इति ब्रूषे तर्हि तस्य हिताकरणमहितकरणं च न स्यादित्यर्थः॥

ननु विष्णोरपि जगत्कर्तृत्वे भ्रमादिप्रसङ्ग इत्याशङ्क्याह—

## अधिकं तु भेदनिर्देशात्॥ २३॥

ब्रह्म अधिकं जीवापेक्षया अधिकशक्तिकम्, श्रुतिषु भेदेन जीववैलक्षण्येन निर्देशात्। अतो न तस्य भ्रमादिप्रसक्तिरिति भावः॥

ननु जीवः अन्यनिरपेक्षः चेतनत्वात् ब्रह्मवत इत्याशङ्क्याह—

## अश्मादिवच्च तदनुपपत्तिः॥ २४॥

अस्वातन्त्र्यश्रवणात् बाधितमनुमानमिति भावः॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २५ ॥

ननु जीवः स्वतन्त्र एव । स हि यत्कार्यमारभते तदुपसंहरतीति दृश्यत इति चेन्न, उपसंहारस्येश्वराधीनत्वात् । यथा गोषु दृश्यमानस्य क्षीरस्य प्राणाधीनत्वं तद्वत् ॥

नन्वीश्वरोऽस्ति चेत्, उपलभ्येतेत्यत्राह—

## देवादिवदपि लोके ॥ २६ ॥

देवाः पिशाचादयश्चादृश्यत्वशक्तिबलात्सन्तोऽपि न दृश्यन्ते किल ; किमुताचिन्त्यशक्तिर्भगवानित्यर्थः ॥

जीवकर्तृत्वे दोषान्तरमाह—

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २७ ॥

जीवः किं सर्वसामर्थ्येन प्रवर्तते, अंशेन वा । नाद्यः, अङ्गुल्या तृणचालनेऽपि पूर्णशक्त्या प्रवृत्त्यापत्तेः । न चेष्टापत्तिः, अनुभवविरोधात् । न द्वितीयः, अंशाभावात् । श्रूयते हि निरवयवत्वं भाल्लवेयश्रुतौ—'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः' इति । सिद्धान्ते तु 'यत्तु युक्त्या विरुध्येत तदीशकृतमेव हि' इति प्रमाणसिद्धा । तस्माज्जीवस्य स्वातन्त्र्यानुपपत्तेर्युक्तं विष्णुर्जगत्कर्तेति । खण्डनं प्राग्वत् । किं च, निरवयवत्वं त्वया दुर्वचम्, 'व्यतिरेको गन्धवत्' इत्यधिकरणे जीवस्य सांशताया व्यवस्थापनात् । एवं चांशविशेषैः कार्यानुसारितारतम्येन कर्तृत्वमुपपद्यत एव ॥

यत्तूक्तं सुधायाम्—अंशानां बहुत्वे बहुत्वादेव भेदोऽपि स्यात् । तथा च भिन्नांशराहित्यरूपं निरवयवत्वं व्याकुप्येत इति, तन्न, व्यूहावतारगुणादिषु व्यभिचारिणो बहुत्वस्य भेदासाधकत्वात् । स्वसिद्धान्त इव पूर्वपक्षेऽपि विशेषेणैव बहुत्वसंभवाच्च । न चैवं जीव इव जडेऽप्यंशानां परस्परेणांशिना सह भेदो न सिध्येदिति वाच्यम्, त्वां प्रत्येवमपि मया आपादनीयत्वात् । यदपि 'अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यन्ते नैवमेव हि चेतनाः । अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तते । अप्यभिन्नस्वरूपेषु विशेषादेव केवलम् ॥ बहुस्वरूपताख्या तु तेष्वस्त्येव हि सांशता । बहुत्वेनाविनाभावाद्भिन्नता नियमाद्भवेत् । यदि नैवं नियमकृद्भगवान्पुरुषोत्तमः ॥' इत्यनुव्याख्यानस्य फलितमुपसंहरता सुधाकृतोक्तम्—तस्माद्भगवानेव स्वरूपस्वभावविशेषाणां नियामकश्चैतन्यमवच्छेदकं विधाय विशेषं निमित्तीकृत्य विरुद्धे अप्यभेदबहुत्वे समावेश्याभेदेन निरवयवत्वशब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न्यक्कृत्य कार्यानुरूपं

सामर्थ्यविशेषं योजयन् जीवेन कारयतीत्यङ्गीकर्तव्यम्' इति । तदेतदपार्थकम् । तथा हि—विशेषं निमित्तीकृत्येत्ययुक्तम्, ईश्वरशक्त्यैव गतार्थत्वात् । कर्तुमकर्तुमन्यथा च कर्तुं शक्तः स इति हि स्वीकरोषि । विशेषशरणीकरणे वा किमीश्वरशक्त्यनुसरणेन । विरुद्धे अपि समावेश्य इति तु व्याहतमिति स्पष्टमेव । यदि हि विरुद्धे तर्हि समावेश एव न ; यद्यसौ तर्हि न विरुद्धे । किं च, अभेदबहुत्वयोरनादित्वाद्विशेषाभिन्नत्वाच्च कथं तत्र विशेषः कारणम् ? एतेन जडेष्वेव बहुत्वं भेदनियतम् । जीवे तु विनैव भेदं बहुत्वमित्यत्र कुत एवमिति कारणप्रश्नोऽयमिति सुधाग्रन्थोऽप्यपास्तः । एवं सामर्थ्यविशेषं योजयन् कारयतीत्यंशोऽपि असन्, सामर्थ्यकृत्योरपि त्वया स्वरूपात्मकत्वाभ्युपगमात् । तस्मादापातरमणीयमेवेदं माध्वमतम् ॥ ७ ॥

स्यादेतत् । ईश्वरस्य जगत्कर्तृत्वं न युक्तम्, कृत्स्नप्रसक्त्यादिदोषस्य तुल्यत्वादिति प्राप्ते सिद्धान्तार्थं सूत्राणि—

## श्रुतेस्तु शब्दमूलत्वात् ॥ २८ ॥

नेश्वरकर्तृत्वे युक्तिविरोधः, 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुः' इत्यादिश्रुत्या लोकविरुद्धधर्माणामीश्वरे अविरुद्धतया अवस्थानोक्तेः । श्रुत्येकगम्यत्वाच्चेश्वरस्य । 'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित् । विरोधे वाक्ययोः क्वापि किंचित्स्याद्दाढ्यकारणम् ॥' इति पुरुषोत्तमतन्त्रे ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २९ ॥

आद्यश्चकार एवकारार्थः । आत्मन्येवैवं युक्तिविरोधो नास्तीत्यर्थः । 'विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः' इति श्रुतेः ॥

जीवपक्षे तु दोषोऽस्त्येवेत्याह—

## स्वपक्षदोषाच्च ॥ ३० ॥

'ये दोषा इतरत्रापि ते गुणाः परमे मताः । न दोषः परमे कश्चिद्गुणा एव निरन्तराः ॥' इति वचनात् । 'अथ यः सदोषः ज्ञनः सजनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मा' इति काषायणश्रुतेः ॥

नन्वस्तु विचित्रशक्तित्वम्, तथाऽपि सा शक्तिर्यमर्थं न विषयीकरोति, यदा वा नष्टशक्तिताऽसमर्थे, कालविशेषे च विरो स्यादेवेत्याशङ्कां समाधातुमाह—

## सर्वोपेता च तद्दर्शनात् ॥ ३१ ॥

परा देवता न केवलं विचित्रशक्तिः किं तु सर्वथा सर्वविषयिण्या सार्वकालिक्या च शक्त्या युक्ता। 'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम्। नित्यानन्दा नित्यरूपाऽक्षरा च या शाश्वतात्मेति च यां वदन्ति ॥' इति चतुर्वेदशिखायाम्। सर्वैः सर्वाभिः सर्वविषयाभिरित्यर्थः ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

'अचक्षुःश्रोत्रं तदपाणिपादम्' इति श्रुतेर्हस्तपादादिशून्यत्वावगमादसौ कर्तेति चेत्, न; उक्तं हि—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादि। ननु व्यर्थमिदं सूत्रम्, 'श्रुतेस्तु शब्दमूलत्वात्' 'आत्मनि चैवं विचित्राश्च हि' 'सर्वोपेता च' इति त्रिसूत्र्यैवालौकिकत्वशब्दैकसमधिगम्यत्वविचित्रानन्तशक्तित्वादियुक्तिभिः सर्वस्यापि दोषस्यास्य परिहृतत्वात् इति चेत्; सत्यम्; विशेषयुक्तिपरमिदम्। प्राकृतशरीराभावेऽपि चिदानन्दाद्यात्मकदिव्यमङ्गलविग्रहवतो महापुरुषस्य सर्वकर्तृत्वं युक्तमेवेत्याशयात्। एतच्च माध्वाधिकरणं कुठारापत्यवन्मूलोच्छेदकम्। सर्वविरोधानां विष्णावदूषणत्वे द्वितीयाध्यायवैयर्थ्यापत्तेः। जीवब्रह्मणोरभेदापाताच्च। उक्तं च—'किं च श्रुत्येकगम्ये रव इव रसनं साधनं बाधनं वा कर्तुं शक्तं न मानान्तरमखिलजगत्कर्तरीति स्वरीतिः। स्मृत्यारूढा कथं न व्यपगमयति ते लोकदृष्ट्या विरुद्धामेकत्वायोगमङ्गं परतनुधरयोर्वल्गनं तन्मुधैव ॥' (मध्वमतविध्वंसनं, श्लो. ४१) इति। प्रत्यक्षसिद्धस्य जीवस्य श्रुत्येकगम्येन सह कथमभेद इति चेत्, कृष्णरामादिशरीराणामिवेति गृहाण। तत्र लोकसिद्धभेदानुवादकानि पुराणानीत्यवोचः। नाहं सर्वज्ञ इति भेदप्रतीतिस्तु सर्वज्ञाभेदादेरावरणाद्भविष्यति, नाहमानन्दो नाहमणुरित्यादिवत्। उक्तं च—'किं चेशे गुणगरिमा न जीववर्गे भूमाक्यस्त्वदभिमतो विरुद्ध एषः। यत्तस्मिन्नपि घटते सदा सतोऽस्य स्वानन्दप्रभृतिवदावृतेरभानम् ॥' (मध्वमतविध्वंसनम्, श्लो. २०) इति। खण्डनान्तरं प्राग्वत् ॥ ८ ॥

न्यूनुद्देशेन सृजति न्यूनत्वात्पूर्णत्वानुपपत्तिरिति प्राप्ते आह—

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

नेयं प्रयोजनाय सृष्टिः, येन तदूनस्य स्रष्टुरपूर्णता स्यात्। प्रयोजनानुद्देशे कीदृशी सृष्टिरिति चेत्, केवललीलार्थैवेत्याह सूत्रान्तरेण—

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

उक्तं च नारायणसंहितायाम्—'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु। कुरुते केवलानन्दो यथा मत्तस्य नर्तनम् ॥ पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः। मुक्ता अप्याप्तकामाः स्युः

किमु तस्याखिलात्मनः ॥' इति । 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति च श्रुतिः । अत्र स्वप्रयोजनेच्छाभावाभिप्रायेणोक्तं का स्पृहेति । परप्रयोजनेच्छा तु ज्ञानानन्दप्रयत्नादिवत् स्वरूपात्मिका 'यमेवैष वृणुते' इति श्रुतिबलात् स्वीक्रियत एवेति स्पष्टं सुधायाम् । खण्डनं प्राग्वत् ॥ ९ ॥

स्यादेतत् । भगवतः कर्तृत्वमयुक्तम्, निर्निमित्तं कांश्चित्सुखयतो वैषम्यापत्तेः, कांश्चिद्दुःखयतो नैर्घृण्यापत्तेश्चेति प्राप्ते सूत्रम्—

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३५ ॥

कर्मसापेक्षत्वान्नोक्तदोषः । तथा हि दर्शयति श्रुतिः—'पुण्येन पुण्यं लोकं नयति पापेन पापम्' इति ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३६ ॥

यदपेक्षयाऽसौ फलं ददाति तत्कर्मैव नास्ति, 'एष ह्येव साधु कर्म कारयति तम्' इत्यादिश्रुत्या तस्यैव कारयितृत्वावगमात् । केन विहितं करणीयम्, केन वा विपरीतमिति विभागायोगाच्च इति चेन्न, प्राचीनकर्मानुसरणात् । न चाद्यप्रवृत्त्यनुपपत्तिः, प्रवाहानादित्वादिति सूत्रार्थः ॥

ननु धर्माधर्मावनुरुन्धानस्य स्वातन्त्र्यं भज्येतेत्याशङ्क्याह—

## उपपद्यते चाप्युपलभ्यते च ॥ ३७ ॥

उपपद्यते च स्वातन्त्र्यम् । अपेक्ष्यकर्मणोऽपि सत्तादेः स्वाधीनताया आरम्भणाधिकरणे व्युत्पादितत्वात् । अपेक्षा तु वैषम्याद्यप्रसङ्गाय स्वेच्छाधीनैव । नन्वेवं वैषम्यं तदवस्थम्, कर्मादिसत्ताया अपि स्वाधीनत्वादित्याशङ्क्योक्तम्— उपलभ्यते चेति । तथा च स्वाधीनकर्मापेक्षया फलदातृरूपस्य वैषम्यस्य श्रुतावुपलभ्यमानत्वाददोषत्वमेव । उक्तं हि—'ये दोषा इतरत्रापि ते गुणाः परमे मताः' इति । नन्वेवं कर्मापेक्षताऽपि व्यर्थेति चेत्, न, तदनपेक्षायां वेदप्रामाण्यभङ्गापत्तेः । उक्तं चानुव्याख्याने—'वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न [1]वैषम्यादि दूषणम् ॥' इति । अस्य सुधायामुक्तोऽर्थः—'द्विविधं हि वैषम्यं निर्घृणत्वं च । एकं कर्माद्यनपेक्षाप्रयुक्तम्, अपरं तु सापेक्षत्वेऽपि कर्मादिसत्तादेरीश्वराधीनत्वप्रयुक्तम् । तत्राद्यं नाङ्गीकार्यम्, कर्मकाण्डाप्रामाण्यापत्तेः । द्वितीयं तु वैषम्यादिकं दूषणं नेत्यर्थः ।

---

1. वैषम्यादिनामकम्

न हि जीवानामिवेश्वरस्य प्रत्यवायः संभवति, येन तद्बाधकं सत् वैषम्यादि दोषतां कभेत। अतो दोषत्वाभावादङ्गीकृतमेव भगवतो वैषम्यादि' इति। अधिकरणखण्डनं प्रागवत्। कृपा च दुरुपपादा स्यात्। कृतेः स्वरूपात्मकत्वात् सापेक्षत्वं दुरुपपादम्। अस्मिन्नधिकरणे पूर्वसनं कर्मे- त्याम्रेडयन् जयतीर्थः टयुटयुलोरप्राप्तिं नाज्ञासीदिति दिक्॥ १०॥

स्यादेतत्। ईश्वरः अपूर्णगुणो दोषवांश्च, चेतनत्वात् जीववदिति प्राप्ते आह—

## सर्वधर्मोपपत्तेश्च ॥ ३८॥

अत्र सुधा—ईश्वरः प्रतिपन्नगुणवान्, तदपेक्षावत्त्वे सति स्वतन्त्रत्वात्। न दोषवान् तज्जिहासुत्वे सति स्वतन्त्रत्वात्। एवं सर्वेषां गुणानां दोषाभावरूपाणां च धर्माणामुपपत्तेः, चात् श्रुतेः पूर्वपक्षानुमानं बाधितमिति। श्रूयते हि—'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का। चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाशैर्हि तथा प्रतीताः॥' इति। सुविरु- द्धाश्च इति लोकदृष्ट्या। अश्रुता अपि द्विधा। रमादिचिन्त्या अचिन्त्याश्चेत्यर्थः। अत्रापि खण्डनं प्रागवत्। किं च, अपेक्षावत्त्वे जिहासुत्वे च सतीति स्वरूपासिद्धम्, 'आप्तकामस्य का स्पृहा' इति प्रागुक्तत्वात्। सिद्धे इच्छाविरहेण निर्गुणत्वस्य दोषत्वापत्त्या हेतोर्विरुद्धत्वाच्चेति दिक्॥ ११॥

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य

प्रथमः पादः॥

---

### द्वितीयस्याध्यायस्य द्वितीयः पादः॥

---

प्रथमपादे युक्तिविरोधो निराकृतः। समयविरोधोऽपि 'इतरेषां चानुपलब्धेः' इति सूत्रे सामान्यतो निराकृतः। तमेव विशिष्य निराकर्तुमयं पाद आरभ्यते। तत्र निरीश्वरसांख्यमतं प्रथमं निराक्रियते। स्वतन्त्रप्रकृतेरेव जगदुत्पत्तेर्न विष्णुः सर्वकर्तेति प्राप्ते आह—

## रचनानुपपत्तेश्च नानुमानम्॥ १॥

अनुमानपरिकल्पितं प्रधानं न जगत्कर्तृ, अचेतनत्वात्, घटवत् इत्यर्थः॥

ननु मा भूत् कर्तृ, तथाऽपि दण्डादिवज्जनकं स्यादेवेत्यत आह—

## प्रवृत्तेश्च ॥ २ ॥

घटादिकार्यं प्रवृत्तिं विना न दृष्टम् । तथेहापीत्यर्थः ॥

नन्वचेतनमेव प्रधानं प्रवर्तताम्; यथा पयो दध्यारम्भे, यथा वा नद्यो देशान्तरप्राप्ताविति चेन्न, तत्रापि अन्तर्यामिण एव प्रेरकत्वादित्याह —

## पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

सूत्रार्थः स्पष्टः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' इत्यादिश्रुतेरिति भावः ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

'न ऋते त्वत् क्रियते किंचन' इति तद्व्यतिरेकेण कस्यापि कर्मणः अनवस्थितेश्चानपेक्ष्यमिदं मतमित्यर्थः । एवं पुरुषस्योदासीनत्वाभ्युपगमेन शास्त्रवैयर्थ्यं स्यादित्यादीन्यपीह दूषणानि बोध्यानि । यत्त्वत्रानुव्याख्याने वल्गितम्—'सर्वमानविरोधैकदुर्दीक्षादीक्षितः स्वयम् । मायावाद्युपमां यायात्' इति । यच्च तद्विवृतं सुधायाम्—'सर्वमानविरोध एव दुर्दीक्षा दुष्टोऽनुष्ठानसंकल्पः; तद्दीक्षितोऽयं तु सांख्यो मायावादिनामुपमात्वं प्राप्नुयात् । तेऽपि हि कर्तृत्वभोक्तृत्वादिसकलधर्मविकलमसत्कल्पं चैतन्यमात्रमङ्गीकृत्य अविद्याया एवाचेतनायाः सर्वकारणत्वं बन्धमोक्षाधिकरणत्वं चाभ्युपगच्छन्ति । तदेतेषां सर्वप्रमाणविरुद्धाङ्गीकारित्वे सांख्योऽयं दृष्टान्तभावमापद्यते' इति; तदुभयं मध्वजयतीर्थयोः शास्त्रसंप्रदायानभिज्ञतां स्फुटयति । तथा हि—'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणे बन्धश्चैतन्यस्य स्थापितः । 'अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः' इत्याद्यभियुक्तग्रन्थान्तरेष्वपि स्फुटीकृतः । मोक्षोऽप्यविद्यानिवृत्तिरूपश्चैतन्यस्यैवेति स्पष्टमाकरे । बन्धहेतुरविद्याऽपि सांख्याभिमतप्रकृतिवन्न स्वतन्त्रा; किं तु जगत्कर्तृभगवदधीनेत्यादि स्पष्टमेव । एवं स्थिते अविद्याया एव सर्वकारणत्वं बन्धमोक्षाधिकरणत्वं चेति वदन्माध्ववराकः कैश्चिदद्वैतवादिबालकैः प्रतारित एव । किं च, असत्कल्पं चैतन्यमिति प्रलापमात्रम्, कालत्रयाबाध्यस्य सर्वाधिष्ठानसन्मात्र इति तापनीयादिश्रुतिप्रसिद्धस्यासत्कल्पत्वायोगात् । सकलधर्मवैकल्यात्तथोक्तमिति चेन्न, त्वन्मतेऽपि स्वरूपातिरिक्तधर्माभावात् । स्वरूपस्य चास्माभिरपि स्वीकारात् । त्वन्मते ययोरभेदस्तयोर्धर्मधर्मित्वव्यवहारे सत्यपि वस्तुत आश्रयाश्रयित्वानङ्गीकाराच्च । अत एव अयं पट एतत्तन्तुसंबद्धः, एतदाश्रितत्वात् एतदाश्रिततृणवदिति समवायसाधकानुमानस्य तन्तुपटयोराश्रयाश्रयिभावासिद्धेरिति स्वरूपासिद्धिरुक्ता सुधायाम् । तथा प्रकृताधिकरणेऽपि सुधायामुक्तम्—

'न हि स्वयमेव स्वधर्मो भवति । न ह्युपचारोऽनुमानप्रवृत्तेरङ्गम्, अतिप्रसङ्गात्' इति । प्रत्युतास्माभिर्व्यावहारिका धर्मास्तत्र स्वीक्रियन्ते प्रसादफलदातृत्वादयः । तव तु सत्कर्मसाध्यं प्रसादादिकमपि भगवति नास्तीति विपरीतोऽयं सगुणवादः । अपि च, धर्मवैकल्यादसत्त्वमिति त्वया दुर्वचम्, अलीकस्यापि ज्ञानविषयत्वमत्यन्ताभावप्रतियोगित्वादिकं च धर्म इति त्वदभ्युपगमात् ॥

किं च, जीवे बन्धो नास्तीति त्वदभ्युपगमात्सवैवायं दुरुद्धरो दोषः । यथा चैतत्तथा 'कर्ता शास्त्रार्थवत्त्वात्' इति त्वदीयाधिकरणस्य भङ्गे वक्ष्यामः । यच्चेह सुधायां कार्यस्य सदसदात्मकत्वं स्वीकृतम्, तत्सप्तभङ्गीप्रवेशं स्फुटयति । यदपीह 'शक्यतेऽपोदितुं कचित्' इति, यच्च 'स्वनाशार्थं च को यतेत्' इति अनुव्याख्याने प्रयुक्तम्; यच्च मे चैतन्यमिति तद्व्यवहारमात्रत्वादिति सुधायां प्रयुक्तम्, तत्रापवदितुं यतेत ममेति वक्तव्ये अपोदितुं यतेन्मे इत्युक्त्या शब्दशास्त्रपरिशीलनवैकल्यं स्फुटीकृतम् । तदलं दुर्बलपरिपीडनेनेत्युपरम्यते ॥

सेश्वरसांख्यापरपर्यायं पातञ्जलमतमिदानीं निराक्रियते । तच्चेत्थम्—प्रकृतिरेवोपादानत्वशक्तिमती स्वतन्त्रा जगज्जनयति, पृथिवीव तृणम् । ईश्वरस्त्वनुग्राहकः प्रकृतेः, पर्जन्य इव भूमेः । तथा च विष्णोः स्वातन्त्र्यं नोपपद्यते । एवं प्राप्ते आह—

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

अन्यत्र विष्णुव्यतिरेकेण सत्ताशक्त्योरभावात् । उक्तं हि—'ब्रह्मैवेदं सर्वम्' इति । ब्रह्माधीनसत्ताशक्तिकमित्यर्थः । एवं च पर्जन्यवन्न सहकारित्वमात्रं विष्णोः, येन प्रकृतेः स्वातन्त्र्यं स्यात्; किं तु विष्णोरेव स्वातन्त्र्यम्, प्रधानपुरुषादिसत्ताशक्तिप्रदत्वादिति फलितोऽर्थः । सत्ता तु वस्तुनः स्वरूपमेव, प्रमाणयोग्यत्वं वा, अर्थक्रियाकारित्वं वेति त्रयमपि सुधायां स्थितम् । नन्वनाद्योः प्रधानपुरुषादिसत्ताशक्त्योः कथं भगवदधीनतेति चेत्, अनादेरपि प्रागभावस्य साध्यतोपगमात्, तद्वदेव प्रमाणबलादन्यस्यापि तथात्वमित्यस्यापि सुवचत्वात् । इयानेव विशेषः—किंचिदस्मदायत्तं नित्यत्वम्, किंचित्तु भगवदेकायत्तं नित्यत्वमित्यपि सुधायां स्थितम् । खण्डनं तूक्तम् । अत्रानुव्याख्याने 'नियामयति नित्यं च स इति त्वादिति श्रुतेः' इति श्लोके नियमयतीति ह्रस्वे वक्तव्ये दीर्घः प्रामादिक इति दिक् ॥

प्रत्यक्षमेव प्रमाणं नेतरदिति वदन् चार्वाक इदानीं निरस्यते—

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

इति सिद्धान्तसूत्रम् । चार्वाकशास्त्रं तन्नीत्यैव निष्फलम्, शब्दस्याप्रामाण्यात्, धर्माधर्म-

प्रभृतेरपूर्वस्य बोधनीयस्याभावाच्चेति सूत्रार्थः। इह तत्त्वप्रकाशिकायां मे माला वन्ध्येति प्रयुक्तम्, तदशुद्धमेव ॥

निरीश्वरसांख्यस्यैकदेशी मन्यते— पुरुषोपसर्जनं प्रधानमेव सृष्टौ प्रवर्तते; यथा पुरुषसंबद्धं शरीरमश्मानयनादौ इति। तद्दूषणाय सूत्रम्—

**पुरुषाश्मवदिति चेत्तथाऽपि ॥ ७ ॥**

'न ऋते त्वत्क्रियते' इति श्रुतिबलात् दृष्टान्तेऽपि परमात्माधीनतैवास्तीति सूत्रस्य भावः ॥

**अङ्गित्वानुपपत्तेश्च ॥ ८ ॥**

इति सूत्रान्तरम्। शरीरस्य प्राधान्ये शरीरमङ्गी पुरुषोऽङ्गं स्यात्। तथा च पुरुषोऽङ्गी शरीरमङ्गमिति लौकिकपरीक्षकव्यवहारो विरुध्येतेत्यर्थः ॥

अस्तु तर्हि गुणप्रधानभावव्यत्यासेन प्रकृत्युपसर्जनः पुरुषः प्रवर्तत इति तदेकदेश्यन्तरमतम्। अत्राह सूत्रकारः—

**अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥**

शरीरसंबन्ध एव तावद्भगवदधीन इति भावः ॥

एवं प्रत्येकं दूषितान्यनीश्वरमतानि साधारण्येन दूषयितुं सूत्रम्—

**विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥**

इति। श्रुतिस्मृत्यादिविरोधादनादेयं निरीश्वरमतमित्यर्थः। तदेवं पञ्च मतानि निराकृतानि ॥

इदानीं सप्तभिः सूत्रैः वैशेषिकादिमतं निराकरोति—

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

यदुच्यते परमाणुद्व्यणुकगतं परिमाणं नासमवायिकारणमिति, तदसत्। यथा महत्त्वाद्दीर्घत्वाच्च त्र्यणुकादिगतात्समानाधिकरणे द्रव्ये परिमाणमारभ्यते, तथा ह्रस्वत्वात् द्व्यणुकगतात्परिमण्डलाच्च परमाणुगतादारभ्येत। वाशब्देनैतत्सूचयति—यदि ह्रस्वादेर्नारम्भकत्वं तर्हि महत्त्वदीर्घत्वयोरपि स्यात्, अविशेषादिति ॥

## उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

ईश्वरेच्छा नित्या अनित्या वा । आद्ये प्रलयेऽप्यतिप्रसक्ता सा । द्वितीये कारणबाधाद्बाधिता । उभयथाऽपीश्वरसिसृक्षया परमाणुकर्मेति सिद्धान्तो दुरुपपादः । अतस्तदभावो द्व्यणुकाभावः । स्वसिद्धान्ते तु न दोषः, ईश्वरस्याचिन्त्यशक्तेर्वेदसिद्धत्वात् । स्वत एव काले विशेषाभ्युपगमाच्च ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

समवायस्वीकारादनवस्था । ननु समवायस्यैकत्वान्नानवस्थेत्यत आह— साम्यादिति । समवायस्यापि संबन्धापेक्षातौल्यात् । स्वनिर्वाहकत्वे वा गुणादेरेव तथात्वसंभवात् किं तेनेत्यर्थः ॥

## नित्यमेव च भावात् ॥ १४ ॥

कारणे कार्यस्य सत्तासमवायो जनिरिति तैरभ्युपगतम् । तथा च नित्यमुत्पत्तिः स्यात्, परमाणूनां समवायस्य च नित्यत्वादिति सूत्रार्थः । किं च,

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

परमाणूनां अनित्यता स्यात्, रूपादिमत्वात् घटवदित्यर्थः ॥

## उभयथा च दोषात् ॥ १६ ॥

परमाणूनां नित्यत्वे तद्गतद्वयटादेरपि नित्यत्वं स्यात् । अनित्यत्वे तु सर्गाद्यकार्यद्रव्यं नोत्पद्येत, निराश्रयत्वादित्यर्थः ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

नेदं मतमपेक्ष्यम् , श्रुत्यादिभिरपरिगृहीतत्वात्, प्रत्युत निरस्तत्वाच्च । तथा च मोक्षधर्मेषु सृगालवाक्यम्— 'अहमासं पण्डितको हैतुको वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकाम् ॥' इति । अत्रानुव्याख्याने सुधायां च प्रसङ्गाद्द्रुवः स्वसिद्धान्ता उक्ताः। तद्यथा — काल आकाशश्चानवधिकपरिमाणोत्कर्षापकर्षवान् सांशश्च। ईश्वरोऽप्येवम् । परमाणुश्च सांशः । एवं तदंशा अपीत्यनवधिकमेवाणुत्वोत्कर्षापकर्षादिकम् । सर्वं चैतत्साक्षिसिद्धम् । अणीयान्महीयानिति श्रुत्युक्तयोरणोर्महतश्चेति शब्दविषयत्वाच्च । नन्वेवं स्वरूपादपि स्वयमुत्कृष्टोऽपकृष्टश्चेत्येवमागतम् । को नेत्याहेत्यादि । तथा जातेरपि प्रतिव्यक्ति भेदः, ब्राह्मणत्वादेः सत्येवाश्रये नाशः, सादृश्यबलेन व्युत्पत्तिः, सादृश्यमपि प्रतिव्यक्ति भिन्नम्, सर्वं च भावात्मका इति । एतच्च सर्वमसंभवदुक्तिकमिति विदुषां स्पष्टमेव । वैशेषिकादिमतखण्डनं त्वस्माकमिष्टमेवेति नाधिकं लिख्यते ॥

इह महद्दीर्घवदिति सूत्रे षष्ठ्यर्थे वतिः। विभक्तिविपरिणामेन वा सकाशादित्यध्याहारेण वा तस्मादिति भाष्यकारेणोक्तमिति सुधायामुक्तम्। तत्र षष्ठ्यर्थ इति तुच्छम्, इवार्थे षष्ठ्यन्ताद्विधानात्। विभक्तिविपरिणामेनेति सुतरां तुच्छम्, यथाश्रुतस्य चारितार्थ्यं विना तदयोगात्; अन्यथाऽतिप्रसङ्गात्। सकाशादित्यध्याहारस्त्वतितुच्छः, असामर्थ्येन तद्धिता-योगात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकताव्युत्पत्तिभङ्गप्रसङ्गाच्च। अपरिग्रहाच्चेति सूत्रे सृगा-लवाक्यमुदाहरन् पाञ्चरात्रस्य पतितायेकविषयतां बोधयन्ति प्रथमपरिच्छेदोदाहृतानि स्कान्दकौर्मा-दिवचनानि स्मारणीयः। प्रत्युत चतुर्दशविद्यास्थानानामध्ययनविधिपरिगृहीतत्वादान्वीक्षिकी श्रेष्ठैव। किं तु न तत्रैवाभिनिवेष्टव्यम्। 'अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः। सर्वतः सार-मादद्यात्पुष्पेभ्य इव षट्पदः॥' इति न्यायेन व्युत्पत्त्यनन्तरं वेदान्ताः परिशीलनीया इत्याशयेन सृगालवाक्येऽनुरक्तपदं प्रयुक्तम्। यदपि जल्पन्ति— 'अस्ति किल' विष्णुना नारायणरूपेणाति-विस्तरेण कृतं पुनर्व्यासरूपेण तेन संक्षिप्तं ब्रह्मतर्काभिधानं शास्त्रम्। तदेव चतुर्दशविद्यास्थानान्त-र्गतं न्यायशास्त्रम्, न तु गौतमप्रणीतम्। तच्चास्य मीमांसाशास्त्रस्याङ्गम्, प्रत्यक्षादीनामुपक्रमा-दीनां श्रुतिलिङ्गवाक्यादीनां च स्वरूपप्रामाण्यतद्बलाबलनिर्णायकतयोपयुज्यमानत्वात्। उक्तं चानु-व्याख्याने—'प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः। मानन्यायैस्तु [1]तत्सिद्धिर्मीमांसा मेयशोध-नम्॥ ब्रह्मतर्कं च भगवान् स एव कृतवान् प्रभुः। पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात्। उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः॥' इति। तथा च गौतमीयादीनामत्यन्तमनपेक्षतैव' इति। तत्रेदं वक्तव्यम्— कमठमाठरकौरव्यादिश्रुतीनां मीमांसायामङ्गं ब्रह्मतर्क इति सम्यगेव, 'यक्षा-नुरूपो बलिः' इति न्यायात्। किं तु, त्वया 'ज्योतिरुपक्रमात्तु' इत्यधिकरणसिद्धान्ततया स्वीकृ-तस्य वेदार्थस्य प्रतिकूलत्वात् प्रसिद्धानि परित्यज्य व्याकरणप्रातिशाख्यानुक्रमणिकादीन्यपि भिन्ना-न्येव ब्रह्मतर्कसहोदराणि वक्तव्यानि, कल्पनाकोशस्य निरवधिकत्वात्। तथाऽपि तानि नावोच-दिति न्यूनता भवदीयभाष्यकृतः। सचेतसां त्विह मूकतैवोचितेत्युपरम्यते॥ ६॥

इदानीमष्टभिः सूत्रैः परमाणुपुञ्जवादिनौ वैभाषिकसौत्रान्तिकौ निराकरोति—

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः॥ १८॥

पुञ्जः किमेकस्मादनेकस्माद्वा। आद्ये व्याघातः। द्वितीये समुदिताद्विशकलिताद्वा? आद्ये अन्योन्याश्रयात्तदप्राप्तिः। अन्त्ये समुदायस्य सदातनत्वापत्त्या प्रलयाभ्युपगमविरोध इत्यर्थः॥

---

1. तत्सिद्धौ मीमांसा

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥**

अस्तु समुदायस्य सदातनत्वम् । न चैवं प्रलयानुपपत्तिः; इदमिदं चेति परस्परापेक्ष-वित्तिव्यवहाराभावेन तदुपपत्तेरिति चेन्न, उत्पत्तौ सत्यां तन्निमित्तकवित्तिव्यवहारयोरप्यावश्यक-त्वादित्यर्थः ॥

**उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥**

उत्तरोत्पादे कारणविनाशात् घटपटादिविशेषो न स्यादित्यर्थः । कारणस्य हि सदृश-कार्यजनन एव सामर्थ्यम् । अन्यथा घटात्पटोऽप्युत्पद्येतेति भावः ॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥**

कारणे विनष्टे कार्यमुत्पद्यते चेत् तत्कार्यमिति प्रतिज्ञाहानिः। अविनष्टे चेद्यौगपद्यं कार्य-कारणयोः स्यात् । तथा च क्षणिकत्वं भग्नमिति भावः । किं च,

**प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥**

सन्तानमन्तरेण यः प्रतिक्षणं विनाशः यश्च सन्तानेन सह, तयोरनुपपत्तिरिति सूत्रार्थः ॥

**उभयथा च दोषात् ॥ २३ ॥**

कारणे सति कार्यं भवत्येवेति नियमे अर्थक्रियाकारित्वमेव सत्त्वमित्यभ्युपगमात् कार्य-स्यापि यावत्कारणभावित्वं वाच्यम् । तथा च सव्येतरविषाणवत् कार्यकारणभावव्याघातः । अनियमे त्वसत्त्वं स्यादिति उभयथाऽपि दोष एवेत्यर्थः ॥

**आकाशे चाविशेषात् ॥ २४ ॥**

प्रदीपादिषु परिमाणभेदेन भेदसिद्धौ तद्दृष्टान्तेन सर्वस्यापि क्षणिकत्वमनुमेयमिति चेन्न, आकाशदृष्टान्तेन स्थैर्यस्याप्यनुमातुं शक्यत्वादित्यर्थः ॥

**अनुस्मृतेश्च ॥ २५ ॥**

प्रत्यभिज्ञानात् स्थैर्यसिद्धिरित्यर्थः ॥ ७ ॥

अथ चतुर्भिः सूत्रैः शून्यवादमपाकरोति—

**नासतोऽदृष्टत्वात् ॥ २६ ॥**

अदृष्टत्वादसतः कारणत्वं न युज्यते । किं च,

**उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥**

असतः कारणत्वे उदासीनानां खपुष्पादीनां सकाशादपि सौरभादिसिद्धिः स्यादिति सूत्रार्थः। चशब्देन न चेदन्यत्रापि न स्यात्, अविशेषादिति सूच्यते ॥

**नाभाव उपलब्धेः ॥ २८ ॥**

न च जगदपि शून्यमिति वाच्यम्, दृश्यमानत्वादित्यर्थः ॥

न च दृष्टस्यापि स्वप्नादिवदसत्त्वमस्त्विति वाच्यम्, स्वप्नस्यासत्त्वाभावात्। स्वप्न-जाग्रत्त्वं दृष्टान्त इति चेत्, न, स्वप्न एवायं न जाग्रत्, रज्जुरियं न सर्प इति बाधबलेन वैधर्म्यादित्याह सूत्रकारः—

**वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥** इति ॥ ८ ॥

योगाचारसंमतं विज्ञानवादं निराकरोति—

**न भावोऽनुपलब्धेः ॥ ३० ॥**

न विज्ञानमात्रं जगत्, ज्ञानं घट इत्याद्यननुभवादित्यर्थः ॥

**क्षणिकत्वाच्च ॥ ३१ ॥**

ज्ञानं हि क्षणिकम्। अर्थास्तु प्रत्यभिज्ञया स्थिराः। अतो नैक्यम् ॥

एवं प्रत्येकं दूषितानि बौद्धमतानि साधारण्येन दूषयितुं सूत्रम्—

**सर्वथानुपपत्तेश्च ॥ ३२ ॥**

इति। प्रमाणाभावाच्छ्रुतिस्मृतिविरोधाच्च बौद्धानां चत्वार्यपि मतानि उपेक्षणीयानी-त्यर्थः ॥ ९ ॥

स्याद्वादिनो जैनस्य मतं दूषयति—

**नैकस्मिन्नसंभवात् ॥ ३३ ॥**

स्यात् सत्, स्यादसत्, स्यादुभयम्, स्यादुभयविलक्षणम्, स्यादुभयत्वे सति उभय-विलक्षणम्, स्यान्नैतत्सर्वं, स्यात्सर्वं चेति सप्तभङ्गी नैकस्मिन् युज्यते, अदृष्टत्वेनासंभवात्। अत्रानुव्याख्यानम्— 'आह क्षपणको विश्वं सदसद्द्वयमद्वयम्। द्वयाद्वयमतत्सर्वं सप्तभङ्गिप्रभावनम् ॥ नैतत्पदार्थ एकस्मिन् युक्तं दृष्टविरोधतः ॥' इति ॥

**एवं चात्माकात्स्न्र्यम् ॥ ३४ ॥**

जीवस्य शरीरपरिमाणत्वे पिपीलिकादिशरीरस्थस्य गजादिशरीरप्राप्तौ सत्यां तत्रापूर्णता स्यात् । तथा च न सर्वं शरीरं चेष्टेत ॥

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

तत्तच्छरीरस्थस्य तत्तत्परिमाणतेत्यपि न मन्तव्यम्, विकारत्वादनित्यतापत्तेः ॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॥ ३६ ॥**

शरीरावच्छेदमन्तरेण स्वतः परिमाणाभावादात्मनः शरीरपरिमाणतेति हि परो ब्रूते । तत्रेदं पृच्छामः— मोक्षे शरीरमस्ति न वेति । द्वितीये परिमाणाभावाज्जीवस्याप्यभावप्रसङ्गः; न हि परिमाणशून्यं द्रव्यमस्ति । आद्ये तु देहात्मनोर्नित्यत्वमागतम् । तथा च शरीरत्वाविशेषात् सांसारिकशरीरमपि नित्यं स्यादित्यर्थः ॥ १० ॥

पाशुपतपक्षं निरस्यति—

**पत्युरसामञ्जस्यात् ॥ ३७ ॥**

पत्युरज्ञजनप्रसिद्धेश्वरस्य पशुपतेर्जगत्कारणत्वं न युक्तम्, पारतन्त्र्यादिदोषग्रस्तत्वेनासामञ्जस्यात् । श्रूयते हि— 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ' 'अस्य देवस्य मीळ्हुषोवया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ।' 'एको नारायण आसीन्न ब्रह्मा नेशानः' इति । ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे शरवे हिंसनशीलाय हन्तवै हन्तुमेव, न तु भूषणाद्यर्थमिति भावः । आसमन्तादीशस्य अभीष्टसेचकस्य विष्णोर्देवस्य हविर्भिः प्रभरणे कृते सति अहंकाररूपेण बन्धको रुद्रो रौद्रं महिमानं यथा लेभे, तथा युवामपि विष्णुपूजयैव अन्नवद्वर्तनं प्राप्तवन्तौ स्थ इति तत्त्वप्रकाशिकोक्तश्रुत्यर्थः ॥

**संबन्धानुपपत्तेश्च ॥ ३८ ॥**

रुद्रस्य जगता सह कार्यकर्तृभावरूपसंबन्धो नोपपद्यते, अशरीरत्वादिति सूत्रार्थः॥

**अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥**

इति सूत्रान्तरम् । मृतलादावधिष्ठाने स्थितो हि कुलालादिः करोति । न चात्र तदस्तीत्यर्थः ॥

**करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥**

यथा शरीरं साक्षात्प्रयत्नाधिष्ठेयत्वान्न शरीरान्तरमपेक्षते तथा सर्वं जगद्रुद्रस्य साक्षात्प्रयत्नाधिष्ठेयत्वान्न शरीरसापेक्षमिति चेन्न, साक्षात्प्रयत्नाधिष्ठेयस्योत्पत्तिविनाशयोर्जननमरणाद्यापत्तेरित्यर्थः ॥

**अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥**

देहवत्त्वेऽन्तवत्त्वं स्यात्, अन्यथा तु ज्ञानाभावः स्यादिति सूत्रार्थः। विष्णोस्तु श्रुत्यैव विरोधाः परिहृताः इति माध्वाधिकरणशरीरम्। एतच्च द्युभ्वाद्याधिकरणस्य स्मृत्यनवकाशेत्यादिद्वितीयाध्यायप्रथमाधिकरणस्य च भङ्गेन भग्नमेवेत्यवधेयम् ॥ ११ ॥

शक्तिरेव जगज्जननीति मतं निरस्यति—

**उत्पत्त्यसंभवात् ॥ ४२ ॥**

न हि पुरुषाननुगृहीताभ्यः स्त्रीभ्य उत्पत्तिर्दृश्यते ॥

नन्वस्त्यनुग्राहकः पुरुषः सदाशिव इत्याशङ्क्य तत्रापि बाधकमुक्तमेवेत्याह—

**न च कर्तुः करणम् ॥ ४३ ॥**

नन्वस्तु शक्त्यनुग्राहकेश्वरस्य विज्ञानकरणमपीत्यत आह—

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥**

तस्य पाशुपतमतस्याप्रतिषेधः। शाक्तमतमपहाय मतान्तरमेव परिगृहीतं स्यादित्यर्थः। तच्च दूषितमिति भावः ॥

**विप्रतिषेधाच्च ॥ ४५ ॥**

श्रुतिस्मृत्यादिविरोधादप्यसमञ्जसं शाक्तमतमित्यर्थः ॥

तदेवं वैदिकानामवैदिकानां च समयान्तराणां निरासात् सिद्धं विष्णोः सर्वकर्तृत्वमिति माध्वाः। खण्डनं तूक्तमेव ॥ १२ ॥

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

# TATVA KAUSTUBHA

of

Sri BHATTOJI DIKSHITA

PART II

# तत्त्वकौस्तुभः

श्रीभट्टोजिदीक्षितविरचितः

(द्वितीयो भागः)

Edited with Introduction by

Panditaraja Vidwan

S. Subrahmanaya Sastri

Published by:

**Advaita Sabha, Kumbakonam**

1964

*All Rights Reserved.*]

# उपोद्घातः

गीर्वाणवाण्यां लब्धकिञ्चित्परिचयः कस्को न जानाति नव्यव्याकरणशास्त्रस्य प्रवर्तकः श्रीमान् भट्टोजिदीक्षित इति। अनेन महात्मना व्याकरणशास्त्रमहोदधेः रत्नभूताः सिद्धान्तकौमुदी-प्रौढमनोरमाशब्दकौस्तुभवैयाकरणभूषणाख्याः ग्रन्था निरमीयन्त। न केवलं शब्दशास्त्र एव, किन्तु वेदान्तमहोदधेरुद्धृत्य तत्त्वकौस्तुभाख्यो ग्रन्थः श्रीमहाविष्णोः पदयोः उपहारीकृतः। धर्मशास्त्रे च सप्ताधिकाः ग्रन्था व्यरचिषत।

एते च श्रीमतां विश्वविख्यातयशसां अप्पय्यदीक्षितानां समकालिकाः तत्सकाशादेव लब्धब्रह्मविद्याकौशलाः इति दाक्षिणात्येषु प्रथा। उदाहृताश्चैतैः मध्वमुखमर्दनगतश्लोका बहवोऽस्मिंस्तत्त्वकौस्तुभे सबहुमानं "तदुक्तमभियुक्तैः" इत्यादिना।

तत्त्वकौस्तुभस्य प्रथमो भागः आदित आरभ्य तर्कपादान्तः श्रीरङ्गस्थवाणीविलास-मुद्रणालयात् पूर्वमेव प्रकाशितः इदानीं अवशिष्टो ग्रन्थः अद्वैतसभया प्रकाशतां नीयते।

अयं च ग्रन्थः अद्वैततत्त्वजिज्ञासूनां द्वैतवादं प्रतिचिक्षिप्सूनां च चिन्तामणिरिवोप-कारकः। नहि निन्दान्यायमवलम्ब्य प्रवृत्तोऽयं ग्रन्थः परमतनिराकरणे नाभिनिविशते अपितु स्वमतोत्कर्षप्रतिपादन एव।

अस्य ग्रन्थस्य त्रयः परिच्छेदाः। आद्ये तन्त्राधिकारो निरूप्यते। द्वितीये तु द्वैतमतो-परि दोषा उद्भाव्यन्ते। तृतीये तु अद्वैतवादसमर्थनं सकलश्रुतिस्मृतिपुराणानां तत्र ऐदंपर्यं च वर्ण्यते।

एतन्मुद्रणायोपयुक्ते द्वे मातृके।

एका मद्रराजकीय लिखितपुस्तकभाण्डारस्था, अन्या अड्यार् कोशस्था।

अस्मिन् मुद्रणकार्ये स्वस्वमातृकाप्रदानेन उपकृतवद्भ्यां तत्तत्कोशाध्यक्षाभ्यां तत्त-न्मातृकादापनेन उपकृतवद्भ्यः पद्मभूषणबिरुदालङ्कृतेभ्यः श्री Dr. राघवमहोदयेभ्यश्च मदीयं कृतज्ञभावमाविष्करोमि। सम्प्रार्थये च विदुषः अत्र आयसाक्षरयोजकप्रमादापतिताः अशुद्धीः परिहृत्याद्वैतसाम्राज्ये रमन्तामिति।

सुधीजनविधेयः
ग्रन्थप्रकाशकः.

॥ श्रीरस्तु ॥

# तत्त्वकौस्तुभः

## द्वितीयो भागः

## श्री भट्टोजिदीक्षितविरचितः

### द्वितीयस्याध्यायस्य तृतीयः पादः प्रारभ्यते ॥

आकाश उत्पत्तिमान्न वेति संशये नेति प्राप्तं विभुत्वात् "अनादिर्वा अयमाकाश" इति श्रुतेश्च। अत्र सिद्धान्तमाह—

**न वियदश्रुतेः ॥ १**

उत्पत्त्यसम्भवादिति प्रकृतानुत्पत्तिः सम्बध्यते। वियदनुत्पत्तिमन्न, तथा च श्रुतेः ॥

**अस्ति तु ॥ २**

अस्ति चोत्पत्तौ श्रुतिः आत्मन आकाशःसम्भूत इति ॥

**गौण्यसम्भवात् ॥ ३**

'अनादिर्वा अयमाकाशः शून्यो लौकिक' इति श्रुतिर्गौणी। अन्यथा उत्पत्तिश्रुतिबाहुल्यासम्भवात् ॥

**शब्दाच्च ॥ ४**

अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति। अथ यान्यनित्यानि प्राणाः श्रद्धा भूतानि भौतिकानीति। यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि, नह्येतानि कदाचनोत्पद्यन्ते न लीयन्ते* पुरुषः प्रकृतिरात्मा काल इति अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाशःभागशो ह्युत्पद्यन्त इति भाल्लवेयश्रुतिः ॥

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५**

एकस्यैवाकाशस्य गौणमुख्यापेक्षयानुत्पत्तिरुत्पत्तिश्चेति व्यवस्था युक्तैव। यथा ब्रह्मशब्दस्य विष्णौ मुख्यस्य विरिञ्च्यादौ गौणता एवमनुत्पत्तिमच्छब्दस्यापि विष्णौ मुख्यस्याकाशे गौणतापत्तेः ॥

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६**

ब्रह्मणोऽन्यस्यानुत्पत्तिमत्वे इदम् सर्वमसृजतेति प्रतिज्ञा हीयेत। आकाशस्यापि सर्वस्मादव्यतिरेकात् आत्मा वा इदमेक एवाग्र आसीदेकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिभ्यां युक्तैव वियदुत्पत्तिः ॥

* अस्यां श्रुतौ पुरुषेण सह आत्मनः पृथङ्निर्देशो विमृश्यः।

## यावद्विकारं तु विभागो लोकवत् ॥ ७

वियदुत्पत्तिमत् विभक्तत्वात् घटवत् । ब्रह्म नोत्पत्तिमत् अविभक्तत्वात् व्यतिरेकेण घटवदिति प्रयोगावभिप्रेत्य व्याप्तिदर्शनपरं सूत्रम् । विकारिण एव हि लोके विभक्ता दृश्यन्ते । विभागश्चाल्पशक्तिकत्वम् । तदुक्तं बृहत्संहितायाम—

"एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते
प्रकृतिः पुरुषः कालस्त्रय एते विभागतः ।
चतुर्थस्तु महान् प्रोक्तः पञ्चमाहंकृतिर्मता
तद्विभागेन जायन्ते आकाशाद्याः पृथक्पृथक् ॥

योविभागाविकारः सः सोऽविकारः परो हरिः । अविभागात्परानन्दो नित्यो नित्यगुणात्मकः । विभागो ह्यल्पशक्तिः स्यात् न तदस्ति जनार्दन" इति । विष्णुरविभक्तः प्रकृत्यादयस्त्रयो विभागवत्वेनोक्ताः । महानपि तथा । तस्माद्धेतोः । न चास्य प्रागुक्तभाल्लवेयश्रुतिविरोधः । तत्र स्वरूपत उत्पत्तेरभावस्योक्तत्वात् । अनेन वियत्पदमनादित्वेन प्रसिद्धानां प्रकृत्यादीनामुपलक्षणार्थमिति नोचितम् । आकाशशब्देनेह भूताकाशतद्देवता उच्यन्ते । तत्र भूतं स्वरूपत एवोत्पत्तिमत् । रूपित्वात् । आकाशे नीलिमोदेतीति श्रुतेः । तदभिमानिनोऽपि शरीरोत्पत्तिद्वारा अस्त्येवोत्पत्तिः । अवकाशतदभिमानिनोस्तु पराधीनविशेषलाभलक्षणोत्पत्तिः । एवं प्रकृतिजीवादीनामपीति माध्वाधिकरणशरीरम् ॥

इह ब्रह्म शब्दवदिति दृष्टान्तो न युक्तः । बृहज्जातिजीवकमलासनशब्दराशिष्विति धातुं कल्पयता माध्वेन विरिञ्चे रूढेः स्वीकारात् । यतो वेत्यादिवाक्यशेषाद्धि रूढ्यर्थस्तत्रागत्या त्याज्य इति जन्माद्यसूत्रेऽवोचः । बृहत्संहितास्थत्वेन त्वत्कथिते वचने पञ्चमीति वक्तव्ये पञ्चमेति टाबसाधुः । शरीरोत्पत्तिद्वारोत्पत्तिरिति ब्रुवतोत्पत्तेर्गौणत्वमेवोक्तं स्यात् । तथा च प्रागुक्तमुख्यत्वव्याकोपः । पराधीनविशेषलाभादुत्पत्तिरिति त्वतिस्थवीयः । ब्रह्मणो जगत्कारणताया निर्वाहार्थं हि ब्रह्मभिन्नस्याखिलस्योत्पत्तिरिति ब्रवीषि । न च पारिभाषिक्याऽनयोत्पत्त्या कारणता निर्वहति अनादीनां कार्यताया दुरुपपादत्वात् । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेत्यपार्थकमेव त्वद्रीत्या भगवदनुग्रहोपेक्षयोः स्वरूपात्मकतया सर्वदा सदसत्वापत्तेः । किं च कदाचिदुपेक्षायामपि जीवानां नाशःस्यात् । कदाप्यसौ न तानुपेक्षत इति चेत्तर्ह्युपेक्षाऽलीकेति फलितोऽर्थः । तथा च न सन्ति यदुपेक्षयेति त्वत्कल्पितपैङ्गिश्रुतेः कथं नाप्रामाण्यम् । असदर्थबोधकत्वस्यैव तथात्वात् । तथान्यप्रतिषेधात् । अध्यानाय प्रयोजनाभावादिति त्वदधिकरणरीत्या ध्येयात्सगुणादन्यस्यैव ब्रह्मतया अत्र जगत्कारणत्वायोगेनान्योक्त्यसंभवाच्चेति दिक् ॥

वायुर्वाव नित्य इत्यादिश्रुतेर्वायुर्नित्य इति प्राप्ते सिद्धान्तमाह—

## एतेन मातरिश्वा व्याख्यातः ॥ ८

उत्पत्तेर्मुख्यत्वेनानुपपत्तेर्गौणत्वेन विभागेन चेत्यर्थः । अत्र भूतवायोर्मुख्यैवोत्पत्तिः । देवतायास्तु स्वरूपेणानादित्वेऽपि शरीरोपाधिकोत्पत्तिः पराधीनविशेषलाभरूपा चेति माध्वाः । खण्डनं प्राग्वत्—

ब्रह्म उत्पद्यते नवेति संशये उत्पद्यत इति प्राप्तम् । असतः सदजायतेति श्रुतेः । सिद्धान्तमाह—

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९

ब्रह्म नोत्पत्तिमत् स्वातन्त्र्यादिति व्यतिरेकी सत इत्यनेन सूच्यते । पूर्वपक्षोदाहृतश्रुतिस्त्वन्यपरा । असतो ब्रह्मणः सत् प्राण इत्यर्थात् । तथा च पैङ्गिश्रुतिः—ब्रह्म वा असत् सद्वाव प्राण इति श्रुत्यन्तरे प्रवृत्तिनिमित्तमपि स्पष्टमुक्तम् । तद्वा एतदसदाहुर्नह्यसादयति कश्चनेति । ननु रामकृष्णादिरूपेण जायमानत्वात्कथं हरेर्जन्माभाव इति चेन्न अजायमानो बहुधा विजायत इतिश्रुतेः । अजायमानस्य कीदृशं जन्मेति चेत् प्रत्यक्षत्वमेवेति गृहाण । प्रत्यक्षत्वं हरेर्जन्म न विकारः कथंचन । पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ॥ विकार एव जननं पुरुषे तद्विशेषणम् । परतन्त्रविशेषो हि विकार इति कीर्तितः । इति पाद्मे । अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः । विकारहेतुकं सर्वं कुरुते निर्विकारवान् । शक्तिशक्तिमतोश्चापि न विभेदः कथंचन । अविभिन्नापि सेच्छादिभेदैरपि विभाव्यत" इति भागवततन्त्रे । क्रमादिति । उपचयाद्याधिक्यक्रमादित्यर्थः । पुरुषस्य चेतनत्वात्कथं विकार इत्यत आह—**पुरुष** इति । तेन विकारेण विशेषतत्त्वं भवतीत्यर्थः । तर्हि तस्य नोत्पत्तिरित्यत आह—**परतन्त्रेति** । विकारहेतुकं—प्रकृत्याद्युपादानकं, निर्विकाराः ज्ञानानन्दादिधर्मास्तद्वान् । इच्छादीति । इच्छाज्ञानप्रयत्ना अपि शक्त्यात्मकाः शक्तिश्च भगवत्स्वरूपमेवेत्यर्थः । तस्माद्ब्रह्म नोत्पद्यत इति माध्वाधिकरणशरीरम् ॥

अत्रेदं वक्तव्यम् । कृष्णरामादिशरीराणां ब्रह्मणा सहात्यन्ताभेद इति तावत्त्वन्मतम् । तथा च तेषामुत्पत्तेरावश्यकत्वात् अजायमानत्वं त्वद्रीत्या व्याहतम् । ननूक्तं प्रत्यक्षत्वं हरेर्जन्म इति । सत्यमुक्तम् नतु युक्तम् । चाक्षुषत्वे उपनिषदैव गम्यत्वव्याघातात् । विषयत्वस्यापि ब्रह्मस्वरूपात्मकत्वाच्च । आत्मकृतेः परिणामादित्यादौ बहुधात्मानं करोतीति त्वदुक्तेश्च । तत्र सर्वत्र भाक्तत्वे वियदादेरपि तथास्तु । सर्वं खल्विदं ब्रह्मेति स्वरसात् । तथा च रामकृष्णादिशरीराणां वियदादीनां च वैषम्यस्य दुरुपपादत्वात् उभयत्र ब्रह्माभेदो ब्रह्मभेद एव स्यात् । न त्वर्धजारतीयं युक्तम् । अजायमान इति तूत्पत्तेरौपाधिकतया विषमसत्ताकत्वादस्मन्मते युज्यत इति दिक् ॥ ३ ॥

तेजः किं वायोर्जायते ब्रह्मणो वेति संशये वायोरिति प्राप्तम् । वायोरग्निरिति श्रुतेः । सिद्धान्तमाह—

**तेजोऽतस्तथाह्याह ॥ १०**

अत: ब्रह्मणस्तेजो जायते । तथाह्याह—तत्तेजोऽसृजतेति । न च वायोरग्निरिति श्रुतिविरोध: । वायोरित्यस्यान्तर्यामिपरत्वात् । उक्तं च वामने—"तत्र तत्र स्थितो विष्णुः तत्तच्छक्ती: प्रबोधयन् । एक एव महाशक्ति: कुरुते सर्वमञ्जसा इति । सगुणस्य कर्तृत्वेऽपि तथान्यदिति त्वधिकरणरीत्या ब्रह्म ततोन्यदेवेत्यादिखण्डनं प्राग्वत् ॥ ४ ॥

**आपः ॥ ११**

अतस्तथा ह्याहेत्यनुवर्तते अग्नेराप इति श्रुतेः आपस्तेजसोऽजायन्तेति प्राप्ते ब्रह्मण एवेति सिद्धान्त: । एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिराप: पृथिवी विश्वस्य धारिणीत्यादिश्रुते: । अग्नेराप इत्यग्निपदं तु प्राग्वदन्तर्यामिपरम् । खण्डनं प्राग्वत् ॥ ५ ॥

अत्र ता आप ऐक्षन्त बह्वयस्स्याम प्रजायेमहीति ता अन्नमसृजन्तेत्यद्भ्योऽन्नसृष्टि: श्रूयते । क्वचित्तु अद्भ्य: पृथिवीति पृथिवीसृष्टि: । तथा च श्रुतिविगानात् प्रकृता आप: किमन्नस्य कारणमुत पृथिव्या इति संशये अन्यतरनिर्धारणोपायाभावेन परस्परविरोधात् श्रुति-द्वयमप्यप्रमाणम् । तथा च तत्सामान्यादितरश्रुतयोऽपि तथेति न श्रुतिसमन्वयो ब्रह्मणीति प्राप्ते आह—

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२**

अन्नं पृथिव्येव । अन्नशब्द: पृथिवीपर इति यावत् । भूताधिकारात् । तत्तेजो-सृजत । तदपोऽसृजत । तदन्नमसृजत । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादि-श्रवणात् । भूतविषयं हीदं प्रकरणम् । यत्कृष्णं तदन्नस्येति कृष्णरूपश्रवणाच्च । तद्धि प्रायेण पृथिव्यामेव दृष्टम् । अन्ने तु काचित्कम् । पृथिवी वा अन्नमिति शब्दान्तराच्च । आदिशब्दाद-पौरुषेयत्वाच्च प्रामाण्यमिति युक्ति: सूच्यत इति सिद्धः समन्वय इति माध्वा: । अत्र खण्डनं प्राग्वत् । किञ्च उदाहृतं समन्वयवाक्यमप्युत्पत्तिमूलकम् । ईश्वरस्येवापामप्युभयं प्रति कारणत्वे विरोधाभावात् । जनकत्वाजनकत्वे हि विरुद्धे न तूभयजनकत्वे । तथा चाविरुद्धयो: कथं कोटितयोपन्यास इति दिक् ॥

संहर्ता किं रुद्रो विष्णुर्वेति संशये रुद्र इति प्राप्तम् । प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तक: । तेनान्नेनाप्यायस्वेति श्रुते: । रुद्रस्त्वं प्राणानामाश्रयोऽन्तकश्चासि । सत्वंमामाविश आहुतिरूपेणान्नेन दत्तेन निमित्तेन मामाप्यास्वेत्यर्थ: । सिद्धान्तमाह—

**तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३**

स विष्णु: संहर्ता कुत: तदभिध्यानरूपात् तल्लिङ्गात् तस्याभिध्यानाद्योजनात्तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिरिति हि श्रूयते । ततश्च संसारमोक्षस्य भगवदभिध्यानाधीनत्वेन

तत्कृतत्वं लभ्यते । तथा चानादिभवमेत्तुर्विश्वसंहारसामर्थ्यमर्थसिद्धमित्याशयः । एवकारेणेदं द्योतयति लिङ्गादेव तावत् सिद्धम् । किमुत स्पष्टश्रुतिभ्य इति । श्रूयते हि यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽस्तु देव इत्यादि । एतच्चाधिकरणं समन्वयाधिकरणद्युभ्वाद्यधिकरणयोः खण्डनेनैव खण्डितम् । खण्डनान्तरश्च प्राग्वत् ॥

प्रकृतानि भूतानि किमुत्पत्तिक्रमेण लीयन्ते व्युत्क्रमेणेति संशयः । श्रुतिविगानं तद्बीजम् । अत एव हीदं "पराक्रमादुत्पद्यते क्रमाद्विलीयत ' इति भाल्लवेयश्रुतौ क्रमप्रतीतेः । "अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनीति चतुर्वेदशिखायां व्युत्क्रमप्रतीतेश्च । तत्र क्रमेण लय इति प्राप्तम् । लोके प्रायेणोत्पत्तिक्रमेण लयदर्शनात् । सिद्धान्तमाह—

## विपर्ययेण तु क्रमोऽत उपपद्यते वा ॥ १४

व्युत्क्रमेऽपि क्रमशब्दोपपत्तेरित्यर्थः । तथा च श्रुत्यन्तरम्—" द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा । सृष्टौ चान्यो लये चान्य इति वेदविदो विदुः ।" तस्माच्छ्रुत्यविरोधेन क्रमाल्लयसिद्धेः युक्तो हरौ समन्वय इति माध्वाः । इह सामान्यखण्डनं योज्यम् ॥ ८ ॥

किं सर्वेषां व्युत्क्रमेणैव लयः उत केषां चित्क्रमेणापीति संशये क्वचित्क्रमेणेति प्राप्तम् । यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनीति श्रुतेः वाङ्मनसी यच्छेत् । वाङ्मनसी लीयत इति स्मृतेरित्यर्थः । मनश्च ज्ञाने ज्ञानं च मनस उत्पन्नम् 'मनसश्च विज्ञान'मिति श्रुतेः । एवं च विज्ञानमनसी विनान्येषामेव व्युत्क्रमेण लयः । युक्तं चैनत् । लोकेपि केषांचित् व्युत्क्रमेण लयदर्शनात् । सिद्धान्तमाह—

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५

विज्ञानमनसी अन्तरा व्युत्क्रमेण लय इति चेन्न । अविशेषात् ॥

ननूक्तो विशेष इत्याशङ्क्याह—

## चराचरव्यपाश्रयं तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् १६

मनसश्च विज्ञानमिति व्यपदेशो न विज्ञानतत्त्वापेक्षया । किं तु चराचरेष्वालोचनात् । विज्ञानं भवतीति भागोपक्षः । विज्ञानतत्त्वं तु मनसः कारणं न तु कार्यम् । उक्तं च स्कान्दे "परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा । विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात् । विज्ञानतत्त्वात्तु मन इत्यादि । खण्डनं प्राग्वत् ॥ ९ ॥

परमात्मा लीयते नवेति संशये लीयत इति प्राप्तम् । 'तमसि निलीन' इति श्रुतेः । सिद्धान्तमाह—**नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः । १७**

परमात्मा न लीयते अश्रुतत्वाद्ब्रह्मलयस्य, निलीनशब्दो ह्यपिहितपरः । तुच्छेनाभ्वपिहितं यदासीति समाख्यानात् । "स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं

चानुपश्यति नैनं पश्यति कश्चने"ति **पैङ्गिश्रुतेश्च** । ताभ्यःनित्योऽनित्यानां चेतनश्चेतनानामित्यादिश्रुतिभ्यो नित्यत्वावधारणाच्चेति माध्वाः । अत्रापि खण्डनं प्राग्वत् । किं च अपिधानमावरणम् । तच्च माध्वरीत्या न संभवतीति पुंस्त्वादिवदित्यधिकरणभङ्गे वक्ष्यते ॥ १० ॥

जीव उत्पद्यते नवेति संशये नेति प्राप्तम् अनादित्वात् । नित्योनित्यानामिति श्रुतेश्च सिद्धान्तस्तूत्पद्यत इति । अत्र सूत्रम्—

**ज्ञोऽत एव ॥ १८**

जीवोऽप्यत एव परमेश्वरादुत्पद्यते । सर्वे एत आत्मनो व्युच्चरन्तीति श्रुतेः । शब्दादेव वा । "ते वा एते चिदात्मनो विनष्टाः परंज्योतिर्निर्विशन्ति अविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचनेति **काषायणश्रुतिः** ॥

नन्वनादेरुत्पत्तिर्बाधितेत्याशंकां परिहर्तुं सूत्रान्तरम् ॥

**युक्तेश्च ॥**

नित्यस्यापि जीवस्य उत्पत्तिरुपाध्यपेक्षया युज्यते "उत्पद्यन्ते चिदात्मानो नित्यानित्याः परात्मनः । उपाध्यपेक्षया तेषामुत्पत्तिरिति गीयत"इति **व्योमसंहितायाम्** । अतो जीवस्य ब्रह्मजातत्वात् सिद्धं ब्रह्मणो जगत्कर्तृत्वमिति माध्वाधिकरणशरीरम् । तुच्छं चैतत् । सत्यप्रपञ्चवादिनस्तव मते औपाधिकी उत्पत्तिरित्यस्यानुत्पत्तिपर्यवसायित्वात् । न ह्युपाधिजन्या तद्व्याप्या वा जीवस्योत्पत्तिः संभवति । किं च तदात्मानं सृजाम्यहमित्यादिवचनात् विष्णोरप्येवमुत्पत्तिः स्यात् । तथा च नात्माऽश्रुतेरित्यादि त्वदीयं पूर्वाधिकरणं विरुध्येत । तथा चैते माध्वाधिकरणे सुन्दोपसुन्दन्यायेन परस्परपराहते । ननु तत्त्वप्रकाशिकोक्तरीत्या पराधीनविशेषलाभ एवेह जीवस्योत्पत्तिः पारतन्त्र्यात् । विष्णोस्तु स्वातन्त्र्यात् सा नेति वैषम्यमिति चेत्; तर्हि विष्णोः स्वातन्त्र्यमात्रं समर्थ्यताम् । तावतैव गतार्थत्वे किममीभिः क्षुल्लकैरधिकरणाभासैः । किं च तावतापि कर्तृत्वं न निर्वहति तथान्यदित्यधिकरणस्य प्रतिकूलं च तदित्युक्तम् । अपि च जीवसत्तायाः स्वरूपात्मिकायाः किमिदं विष्ण्वधीनत्वं तज्जन्यत्वं ज्ञाप्यत्वं व्याप्यत्वं वा? नाद्यः, अनादित्वात् । न द्वितीयः स्वप्रकाशत्वात् । तद्विषयकवृत्तिर्विष्णुजन्येति चेत् विष्ण्वाकारवृत्तेरपि जीवजन्यत्वेनाविशेषात् । न तृतीयः, कालिकव्याप्यव्यापकभावस्याविशिष्टत्वात् । दैशिकस्य बाधित्वात्, सर्वाधारस्य विष्णोरवृत्तित्वात् । "यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये"ति त्वदुदाहृतवचनस्य त्वत्संमतोऽर्थो बाधित इति तूक्तमेव । अपि च एवंजातीयकान्युक्त्याभासानुपष्टभ्य युक्तेश्चेति सूत्रमस्तीति कल्पना प्रलापमात्रम् । नहि शङ्करभगवत्पादादिभिरिदं सूत्रमुपन्यस्तम् । एवमन्यत्रापि तत्र तत्र सूत्रत्यागो नूतनसूत्रवल्गनं चाप्रामाणिकमेव । वैश्वानराधिकरणे पुरुषमपि चैनमधीयत इत्यत्र पुरुषविधमपीति पाठः कल्पितः । रंहतिपादे चरणा-

दिति चेन्नोपलक्षणार्थेत्यत्र तदुलक्षणार्थेति, तृतीयशब्दावरोध इत्यत्र तृतीय इति सप्तम्यन्तं, तत्सूत्रानन्तरं च स्मरणाच्चेति सूत्रान्तरं कल्पितम् । पदार्थपादे तथान्येत्यत्र तथान्यदिति, अनेन सर्वगतत्वमायामेत्यत्र मायामयेति, गुणोपसंहारपादे सत्ववच्च तन्नियम इत्यत्र सलिलवदिति, व्याप्तेश्च समञ्जसमित्यत्र प्राप्तेरिति, पुरुषविद्यायामिव चेत्यत्रापि चेति, हानौ तूपायनेति सूत्रे हानौ तूपासनमिति, पुरुषार्थपादे भावमशनवदिति वक्तव्ये भावशमनवदिति, उत्क्रान्तिपादे समाना चासृतीति सूत्रे समानाचासृतीति, अर्चिरादिपादे आतिवाहिका इति सूत्रे आतिवाहिक इत्येकवचनान्तमिति दिक् । ननु मध्वोक्तपाठा एव चिरन्तना इति विपरीतमेव किं न स्यादिति चेत्, न, भारततात्पर्यनिर्णये स्वर्गारोहणभाष्ये द्वात्रिंशेऽध्याये "चतुस्सहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ पृथिव्याम्। जातः पुनर्विप्रतनुस्स भीम" इत्यादिजल्पता मध्वेन स्वार्वाचीनतायाः स्वयमेव प्रकटीकरणात् । तत्रैवाद्वैतपरव्याख्याग्रन्थानां प्राचीनत्वोक्तेश्च । किं च प्रागुक्तरीत्या व्याकरणमीमांसादिषु बहुधा विपरीतं जल्पद्भिर्वचनाभासकल्पनामात्रशरणैर्मध्वादिभिरेव सूत्रान्यथाभावः कल्पित इति स्पष्टमेव विदुषाम् । दृष्टानुरोधित्वात्कल्पनायाः । नहि वेदवेदाङ्गादिषु माध्वैरिवान्यैरुच्छृङ्खलं वल्ग्यत इति बहुश्रुता एव विदांकुर्वन्तु ॥ ११ ॥

जीवो व्यापकोऽणुर्वेति संशये व्यापक इति प्राप्तम् । 'व्याप्तात्मनः केवला निर्गुणा' श्चेति **काषायणश्रुतेः** । सर्वं मूर्तमेतज्जीवस्पृष्टम् मूर्तत्वात् मच्छरीरवदित्यनुमानाच्च । सिद्धान्तमाह—

## उत्क्रान्तिगत्यागतीनाम् ॥ १९

सत्वादिति शेषः । जीवो न व्यापकः । उत्क्रान्तिगत्यागतिमत्त्वात् । व्यापकस्य तदयोगात् । मध्यमपरिमाणत्वे त्वनित्यत्वं स्यात् । तस्मात्परिशेषादणुरेव जीवः । अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं चापुण्यं चेति **गौपवनश्रुतेश्च** । प्रसङ्गादन्यदपि चिन्त्यते । सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमधिगत्यामुष्मादिमं लोकमधिगच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुत इति **पौत्रायणश्रुतौ** जीवस्योत्क्रान्त्यादिकमुक्तम् । किं तदीश्वराधीनं नवेति । यद्यप्युदाहृतश्रुतिस्तत्रोदासीना तथापि श्रुत्यास्वातन्त्र्यमेव प्राप्तम् । एकः प्रसूयते जन्तुरेक एव प्रमीयते । एकोऽनुभुङ्क्ते सुकृतमेक एव तु दुष्कृतमित्यत्र हि एक एवेत्युक्तिः स्वातन्त्र्ये उपपद्यतेतराम् । एवं प्राप्ते सिद्धान्तमाह—

## स्वात्मना चोत्तरयोः ॥ २०

स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मेति । एष ह्यानन्दमादत्ते एष ह्येनं जीवमत्ति । जीवयत्येष उद्गमयत्येष आगमयति उत्तरयोर्वाक्योः परमात्मनैव उत्क्रान्त्यादयो निर्णीता इति गतं प्रासङ्गिकम् ॥

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१**

व्याप्ता ह्यात्मान इति व्याप्तिश्रुतेः नाणुर्जीवइ ति चेन्न, स आत्मेदमसृज इति परमात्माधिकारात् । न च बहुवचनविरोधः "एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः । एक एवोच्यते वेदैस्ता ता वास्य भिन्नतेति भविष्यत्पुराणात् ॥

**स्वशब्दानुमाभ्यां च ॥ २२**

न केवलं प्रकरणमात्रेणोक्तश्रुतेर्विष्णुपरत्वम् । किं तु वाक्यशेषादपि । एष ह्यात्मा ह्युद्गतमानशक्तेरिति हि आत्मशब्दः अपरिमितत्वं च श्रूयते ॥

ननु जीवस्याप्यणुत्वे सर्वाङ्गीणं ज्ञानं विरुध्येतेत्यत आह ॥

**अविरोधश्चन्दनवत् ॥ २३**

अणोरपि जीवस्यांशैः सर्वशरीरव्यापित्वेऽविरोधः । दृश्यते हि हरिचन्दनबिन्दोरेकदेशपतितस्यापि सर्वशरीरव्याप्तिः । "अणुमात्रोऽपि जीवः स्वदेहं व्याप्य तिष्ठति । यथा व्याप्य शरीराणि हरिचन्दनविप्रुष" इति ब्रह्माण्डे ॥

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमो हृदि हि ॥ २४**

चन्दनबिन्दोः शरीरैकदेशे सम्यगवस्थानस्य अंशैः शरीरव्याप्तेश्चानुभवसिद्धत्वात् तथास्तु । न त्वात्मनः । तस्यैकदेशस्थत्वे मानाभावात् इति चेन्न । हृदि ह्येष आत्मेति श्रुतेरात्मनोऽपि हृद्येव सम्यगवस्थितेः ॥

**गुणाद्वाऽऽलोकवत् ॥ २५**

यथा आलोकस्य प्रकाशगुणेन व्याप्तिः ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीवस्य स्वरूपेण व्याप्तिरिति वा । उक्तं च स्कान्दे—"असम्यक्सम्यगिति च व्यवस्थाभेदतः सुराः । व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा । चिद्गुणस्य स्वरूपत्वात् तद्व्याप्तिश्चेति युज्यते । शक्तियोगात्सुराणां च विविधा च व्यवस्थिति"रिति, तस्मादणुर्जीव इति माध्वाधिकरणशरीरम् । अत्राणुर्व्यापको वेति संशय एव तावत् त्वया दुरुपपादः अणुत्वव्यापकत्वयोर्विष्णौ समावेशेनाविरुद्धत्वात् । गत्यादिकमपि व्यापकत्वाभावे साध्ये विष्णौ व्यभिचारि । इतराधिकारादित्यपि असाधु । जीवब्रह्मणोरभेदस्य प्रथमाधिकरणभङ्ग एवोक्तत्वात् । पृथगुपदेशात् तद्गुणसारत्वादित्यधिकरणभङ्गे वक्ष्यमाणत्वाच्च । स्वशब्दानुमानाभ्यां चेत्यप्यसाधु । क्षेत्रज्ञ आत्मा पुरुष इत्यादौ आम्नानं बहुधा कृत्वेत्युत्तराधिकरणे त्वद्भाष्योदाहृतश्लोके च जीवेऽपि बहुधा आत्मशब्दप्रयोगात् जीवस्याप्यपरिमितत्वाच्च । तथाचामृतबिन्दूपनिषदि श्रूयते । घटसंवृतमाकाशं नीयमाने यथा घटे । घटो नीयेत नाकाशं तद्वज्जीवो नभोपम इति । याज्ञवल्क्योऽप्याह—आकाशमेकं हि यथा घटादिषु पृथग्भवेदित्यादि ।

यदप्युक्तम् अणोरपि जीवस्य अंशैर्गुणेन वा शरीरव्यापकतेति, तदतिस्थवीयः। जीवस्य स्वांशैः स्वगुणैश्चात्यन्ताभेद इति त्वत्सिद्धान्तात्। विशेषोऽस्तीति त्वपार्थकमेवेति असकृदुक्तत्वात्। आलोकवदिति दृष्टान्तोऽयमसंगतः दीपादिसहचरितप्रकाशस्यापि तेजोऽन्तरत्वादिति दिक्॥ १२॥

जीवः किमेकरूप उतानेकरूप इति संशये एकरूप इति प्राप्तम्। स नित्यो निरवयवः पुण्ययुक् पापयुक्च। स इमं लोकममुं चावर्तते स विमुच्यते स एकधा स सप्तधा स दशधेति **गौपवन**श्रुतौ एकवेत्युक्तेः। तत्रैव निरवयवत्वोक्त्या अंशबाहुल्यप्रयुक्तबहुत्वस्यापि दुर्वचत्वाच्च। सिद्धान्तमाह—

## व्यतिरेको गन्धवत्तथा च दर्शयति॥ २६-२७

अणुत्वे भिन्नांशराहित्ये च सत्यप्यत्यन्ताभिन्नांशानां व्यतिरेकः। यथा पुष्पाद्गन्धः पृथग्गच्छत्येवमंशिनो जीवादंशाः पृथग्गच्छन्तीत्यर्थ। अथैक एव सन्गन्धवद्व्यतिरिच्यतेऽथैकीभवति अथ बह्वी भवति तं यथा यथेश्वरः प्रकुरुते तथा तथा स भवति सोऽचिन्त्यः परमो गरीयनिति **शाण्डिल्य**श्रुतेः। अचिन्त्येशशक्त्यैव ह्येकोऽवयववर्जितः। आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदेति पाद्मोक्तेश्च। आत्माऽऽनन्तः न सप्तधेति गौपवनश्रुतिस्तु स्वरूपैक्यपरा। स पञ्चधा सप्तधा नवधेति **पाराशर्यायण**श्रुतिर्न विरुध्यत इति माध्वाः। जीवब्रह्मणोरभेदे विरुद्धधर्माध्यासो बाधक इत्यास्थाय परःशता अद्वैतश्रुतीर्भङ्क्त्वा व्याचक्षाणेन माध्वेन कथमिदमधिकरणं स्वीकृमिति सहृदयैराकलनीयम्॥ १३।

जीवो ब्रह्मणो भिद्यते नवेति संशये नेति प्राप्तम। तत्त्वमस्यहं ब्रह्मास्मीत्यादिश्रुतेः। **सिद्धान्तमाह—**

## पृथगुपदेशात्॥ २८

भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसंघो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं च तत एवाभिवाञ्छेदिति सोपपत्तिक**कौशिक**श्रुतेः भिन्न एव जीवः। तत्त्वमसीत्यादिभिरभेदव्यवहारस्तु गौण इत्याह—

## तद्गुणसारत्वात्त तद्व्यपदेशः प्राज्ञवत्॥ २९

ज्ञानानन्दादिर्ब्रह्मगुण एवास्य यतः सारं स्वरूपमतो गौणोऽयमभेदव्यपदेशः। यथा-सर्वजगद्गुणसदृशगुणात्मकत्वात्सर्वात्मकत्वं ब्रह्मण उच्यते सर्वं खल्विदं ब्रह्मेति भविष्यत्पर्वणि च "भिन्नाः जीवाः परोभिन्नस्तथापि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वश इति माध्वाः।

अत्रेदं वक्तव्यम्। कौशिकश्रुतिस्तावत् कल्पिता। व्यावहारिकभेदेन चरितार्था च। भिन्नाजीवा इत्यादि भविष्यत्पर्ववचनमप्येवमेव। सत्तात्रयं ममासम्मतमिति चेत् प्रमाणसिद्धस्य त्वयाऽभ्युपेयत्वात्। उक्तं हि स्कन्दे—कल्पितानामवस्तूनां मध्ये केचन मायया। परमार्थतया

क्लृप्ता व्यवहारे सुरर्षभा इति। व्यवहारदशायां च केचनापरमार्थत:। आकाशादि जगच्छुक्तिरूप्ये ते कथिते मयेति। पाराशरोपपुराणे सप्तदशेऽध्यायेऽप्युक्तम् "शुक्तिकाव्यवहारे तु सती न रजतोपमेति। श्रूयते च मैत्रायणीयोपनिषदि चतुर्थप्रपाठके प्रपञ्चमिथ्यात्वम्। "इन्द्रजालमिव मायमयं स्वप्न इव मिथ्यादर्शन"मिति। ननूक्तरीत्या सत्तात्रैविध्येऽपि भेद: परमार्थ एव किं न स्यादिति चेत्; न, तस्य ज्ञाननिवर्त्यत्वात् अज्ञानप्रयुक्तत्वाच्च। अत्रार्थे श्रुतीनां प्रथमाधिकरणभङ्ग एवोदाहृतत्वात्। उक्तं च विष्णुपुराणे षष्ठेंशे सप्तमेऽध्याये "तद्भावभावनापन्नस्ततोऽसौ परमात्मन:। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेदि"ति। विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं क: करिष्यति॥ किं च भिन्नोऽचिन्त्य इति त्वदीयश्रुतिरभेदपरैव परमो जीवसंघाद्भिन्नो न चिन्त्य: किं त्वभिन्न एव चिन्त्य इति व्याख्यानात्। पूर्ण: पर इत्याद्यपि भेदचिन्तननिषेधापेक्षितनिषेध्यप्रसक्तिपरतया संयोज्यम्। जीवब्रह्मणोर्हि प्रत्यक्षागमाभ्यां अपूर्णत्वपूर्णत्वे बद्धत्वनित्यमुक्तत्वे चावगम्येते। ते च लोकतो विरुद्धत्वेन प्रतीयेते। तन्मूलभेदभ्रमेण भेदानुचिन्तनं प्रसक्तमिति। युक्तं चैतत्। त्वद्रीत्या विरुद्धधर्मा न भेदका इति प्रथमाधिकरणभङ्गे प्रपञ्चितत्वात्। एवं च तत्त्वमसीत्यपि अभेदपरमेव। नतु गौणतया नेयम्। उक्तं च स्कान्दे-ब्रह्मगीतायाम्—" त्वमहंशब्दलक्ष्यार्थ: साक्षात्प्रत्यक्चिति: परा। तच्छब्दस्य च लक्ष्यार्थ: सैव नात्र विचारणा। तदैक्यविरुद्धांशं त्यक्त्वा वाच्यगतं श्रुति:। अविरुद्धचिदाकारं लक्षयित्वा ब्रवीति हि। तत्त्वंशब्दार्थलक्ष्यस्य चिन्मात्रस्य परात्मन:। एकत्वं यत्स्वतस्सिद्धं स हि वाक्यार्थ आस्तिका:॥" इति। यत्तु विष्णुतत्त्वनिर्णयादौ तत्र तत्र मध्वेन, प्रकृताधिकरण एव जयतीर्थेन चातत्त्वमसीति नञं प्रश्लिष्य व्याख्यातम्। तत्तु वेदोपप्लवमात्रमिति दिक्।

यत्तु गुहां प्रविष्टावित्यधिकरणे मध्वभाष्ये "सत्यं भिदा सत्यं भिदा सत्यं भिदेति भाल्लवेयश्रुतिरित्युपन्यस्तम्। तदपि प्रामाणिकश्रुत्याद्यनुसारेण सुयोज्यम्। तथा हि—सत्यमित्यर्थाङ्गीकारे भेदोऽस्ति सत्यं किं तु मिथ्याभूत इत्याह—असत्यं भिदेति। यद्वा व्यावहारिकसत्यतैव सत्यशब्दार्थ:। तथा च नञ्प्रश्लेषो मास्तु। एतेन 'सत्यस्य सत्यम्' "विश्वं सत्यं मघवाने" त्यादि व्याख्यातम्। उक्तं च विष्णुपुराणे द्वितीयेंशे द्वादशाध्याये—"तस्मान्न विज्ञानमृतेऽत्र किंचित्क्वचित्कदाचित् द्विज वस्तुजातम्। विज्ञानमेकं द्विजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम्। ज्ञानं च शुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्। एकस्स देव: परम: परेश: स वासुदेवो न यतोऽन्यदस्ति। सद्भाव एवं भवतो मयोक्तो यथा सत्यमसत्यमन्यत्। एतत्तु सत्यं व्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥" इति। प्रथमाधिकरणे "श्रुतेस्तु शब्दमूलत्वात्" व्यतिरेको गन्धवदित्याद्यधिकरणेषु च यदुक्तं तदिहानुसन्धेयम्॥ १४॥

जीवो नित्योऽनित्यो वेति संशयेऽनित्य इति प्राप्तम्। ब्रह्मन् लयमभ्युपैतीति श्रुते: उत्पत्तिमत्त्वाच्च। उक्ता हि ज्ञोऽत एवेति सूत्रे जीवस्योत्पत्ति:। ननु तत्रोपाधेरेव सेत्युक्तमेवेति चेत् न। उपाधेरुत्पत्तौ प्रतिबिंबस्योत्पत्तेरर्थसिद्धत्वात्। सिद्धान्तमाह—

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३०**

यावत्परमात्मा तिष्ठते अनाद्यनन्तत्वेन तावज्जीवोऽपि । अतो न कृतहानाकृताभ्यागमादिदोषः । दृश्यते हि श्रुतिस्मृत्यादिषु जीवस्य नित्यत्वम् बिम्बोपाधितत्सन्निधीनां विनाशं विना प्रतिबिंबनाशायोगाच्च । इह च बिंबस्य परमात्मनोऽनाद्यन्तत्वात् । उपाधेश्च यावत्परमात्मभावित्वात् । सर्वगतबिम्बस्योपाधिसन्निधेश्च नित्यत्वात् । कथं तदुपाधिनाश इति चेत्; न हि येनोपाधिना जीवः प्रतिबिंबः तस्योत्पत्तिविनाशौ ब्रूमः किं तु धात्वादिपदोदितस्य बाह्योपाधेरेव । उक्तं भारते-जीवो नित्यो धातुरस्य त्वनित्य इति । अन्यत्राप्युक्तम् । जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे तु प्रतिबिंबः कथं भवेत् । कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् । इति । तथा उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनमिति । तस्मात्सिद्धं जीवस्य नित्यत्वमिति माध्वाधिकरणम् । इह स्वरूपेणोधिना जीवः प्रतिबिंब इति माध्वव्यवहारे स्वरूपेणेत्यादितृतीया अपार्थिका । करणताया बाधितत्वात् । एवं स्वरूपस्योपाधित्वमपि बाधितमिति आस्ताम् तावत् । एवं स्थिते चैतन्यस्य प्रतिबिंबो नोपपद्यत इति अस्मान् प्रति नवीनमाध्वेन यद्वल्ग्यते तत्तु स्वव्याघातमनालोच्येति दिक् ।

जीवो ज्ञानानन्दादिरूपो नवेति संशये नेति प्राप्तम् । स दुःखाद्विमुक्त आनन्दी भवति सोऽज्ञानात् विमुक्तो ज्ञानी भवति । सोऽबलाद्विमुक्तो बली भवति स नित्यो निरातङ्कोऽवतिष्ठत इति पैङ्गिश्रुतेः । अहमिति जीवस्वरूपे भासमानेऽपि आनन्दादिरूपत्वानुभवाच्च । आनन्दादिरूपत्वे कृतकृत्यतया मोक्षार्थं शास्त्रानारम्भप्रसंगात् । सिद्धान्तमाह—

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१**

जीवो ज्ञानानन्दादिरूपो भवत्येव । न चोक्तपैङ्गिश्रुतिविरोधः । यथा बाल्ये सदेव पुंस्त्वं यौवनेऽभिव्यज्यते । एवं सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुपपत्तेः । सूत्रेऽस्येतीदमा प्रकृतं तद्गुणसारत्वं परामृश्यते । नचासतामुत्पत्तिरेव किं न स्यादिति वाच्यम् । "बलमानन्द ओजश्च सहोज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभो" रिति गौपवनश्रुतेः । अत एव नानुभवविरोधः संसारावस्थायां सतामप्यनन्दादीनां अनादिभावरूपाज्ञानेनावृततयाऽननुभवस्य तद्विपरीतानुभवस्य चोपपत्तेः । भगवत्प्रसादेनावरणनिवृत्तौ सत्यामानन्दानुभवतद्विपरीताननुभवयोरुपपत्तेश्च ॥ जीवस्वरूपस्यानन्दादेरावरणतन्निवृत्त्योरनभ्युपगमे बाधकमाह—

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२**

अन्यथा आवरणतन्निवृत्त्योरनभ्युपगमे मोक्षयोग्यानां सज्जीवानां नित्यमानन्दाद्यनुभवः स्यात् । असुराणां कदापि न स्यात् । दुःखाद्यनुभवश्च तेषां सदा स्यात् मध्यममानुषाणां तु नित्योपलब्ध्यनुपलब्धी स्याताम् । नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं

च मनुष्या इति आग्निवेश्यश्रुतिः । भविष्यत्पर्वणि च "नित्यानन्दज्ञानबला देवा; नैवं तु दानवाः । दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ।। तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् । विज्ञानेनात्मयोगेन निजरूपव्यवस्थितिः । सम्यग्ज्ञानं तु देवानां मानुषाणां विमिश्रितम् । विपरीतं च दैत्यानां ज्ञानस्यैवं व्यवस्थितिः । इति । उपाधिरिह बाह्यो बोध्यः । तदयं फलितोऽर्थः— जीवाश्रिततदीयानन्दादेः ब्रह्मस्वरूपतद्गुणादेश्चावरकं मायाऽविद्याप्रकृत्यादिशब्दवाच्यं द्रव्यरूपं ज्ञानविरोधिभावरूपाज्ञानं सर्वथा स्वीकर्तव्यम् । "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।" "भूयश्चान्ते विश्वमायानिवृत्ति" रित्यादिश्रुतिभ्यः । तस्य च परमेश्वरापरोक्षज्ञानेन निवृत्तौ प्राक् सत एवानन्दस्य बाल्ये सतः पुंस्त्वादेः यौवन इव मुक्तावभिव्यक्तिः सुषुप्तौ तत्सत्वेऽपि कामकर्मादिनिवृत्त्यभावादीषदभिव्यक्तिः । तस्यानादित्वेन स्वोपादानगतोत्तरावस्थारूपनिवृत्त्यसम्भवे प्रमाणसिद्धनिवर्तकोपनिपातबलात्स्वरूपप्रध्वंसरूपनिवृत्तिः । तच्च प्रतिजीवं भिन्नमित्येकमुक्तौ न सर्वमुक्तिः अनिर्वचनीयतानभ्युपगमाच्च नाद्वैतवादिमतप्रवेश इति माध्वाः ।

अत्रायं दूषणगणः । एवं वदता माध्वेन जीवब्रह्मणोरभेदो दुर्वारः श्रुतिस्मृतिसहस्रस्य, जीवो ब्रह्म चित्त्वात् आनन्दत्वादित्याद्यनुमानस्य च लाघवतर्कोपष्टम्भस्याभेदे प्रमाणत्वात् बाधत्वस्य त्वदीत्यैवोद्धारात् । नाहमानन्दो नाहं ज्ञानमित्यादेर्नाहं ब्रह्मेत्यस्य चानुभवस्य समानयोगक्षेमत्वात् आवरणस्यापि तुल्यत्वात् । न च विरुद्धधर्माध्यस्तत्वात् युक्तिबाधः । ब्रह्मगुणानां जीवस्थत्वेप्यावृतत्वादभानेन हेतोरसिद्धेः व्यूहावतारादाविवाखण्डलार्जुनादाविव च त्वन्मते विरुद्धसमावेशस्य सम्भवाच्च । एवं चानिर्वचनीयताविरहेण किं हीयते सिद्धेः । विरुद्धधर्मवतोरभेदो बाधित इति ब्रुवतो नैयायिकादीन् प्रति हि विषमसत्ताकत्वबलेन बाधमुद्धप्रपञ्चमिथ्यात्वं प्राचीनैरुक्तम् । नतु व्यसनितया । प्रक्रियायामस्माकमाग्रहाभावात् । कारणतुत्वेन चाकाशादिष्वित्यधिकरणे भाष्यकारैस्तथोक्तत्वात् । यया यया भवेदित्यादिवार्तिकाच्च । एवं चाद्वैतस्य निष्प्रत्यूहत्वे स्थिते अनिर्वचनीयतानभ्युपगमान्नाद्वैतमतप्रवेश इति माध्वोक्तिर्निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितमिति न्यायमनुहरति । किं च जीवे प्रकाशमाने कथं तदभिन्नस्यावरणम्?

अपि च आनन्दादिप्रकाशो हि मोक्षेऽपि जीवस्वरूपात्मक एव । स चेदानीमस्त्येवेति कथं तस्यावरणम् । तद्धि न प्रकाशस्यानुत्पत्तिः ध्वंसो वा । अनाद्यनन्तत्वात् । अत एव ब्रह्मणस्तद्गुणानां चावृतत्वमपि त्वया दुरुपपादम् । जीवचैतन्यस्येदानीं ब्रह्मानन्दादिसम्बन्धो नास्तीति चेन्न । विषयविषयिभावस्यापि स्वरूपात्मकत्वात् । न च मुक्तावानन्दप्रकाशो जीवभिन्नो जन्यज्ञानरूप एवास्तु । जीवचैतन्यस्यैव विषयता तदानीं जन्यास्त्विति वाच्यम् । मुक्तावन्तःकरणविलयेन तद्वृत्तीनां जन्यज्ञानानां जीवे जन्यधर्माणां च त्वयानङ्गीकृतत्वाच्च । इदानीमप्यानन्दप्रकाशप्रयुक्तस्य स्वात्मनि परमप्रेम्णोऽनुभवाच्च । स्थानविशेषात्प्रकाशादिवदिति त्वदीयाधिकरणे

ब्रह्मतद्गुणाश्चानादिकालमारभ्यैव मुक्तियोग्यानां स्वरूपचैतन्ये प्रकाशन्त इति अभ्युपगमाच्च। तस्मात्प्रकाशमानस्यैवाप्रकाशमानत्वमगत्या त्वया वाच्यम्। एवं चास्तीति व्यवहारयोग्यस्य नास्तीति व्यवहारयोग्यत्वमपि। तच्च विषमसत्ताकतयैव निर्वाह्यमिति सिद्धमनिर्वचनीयत्वमपि। नारदोऽप्याह-" नासद्रूपा न सद्रूपा माया नैवोभयात्मिका। अनिर्वाच्या ततो ज्ञेया भेदबुद्धिप्रदायिनीति। विष्णुपुराणेऽप्युक्तम्। ज्ञानं यथा सत्यमसत्यमन्यदिति। अनृतेन हि प्रत्यूढाः। तुच्छेनाभ्वपिहितं इत्यादिश्रुतयोऽप्यत्रानुकूला इति दिक्। एवं स्थिते अस्मदभिमताविद्यायाः खण्डनप्रस्तावे अनादिभावस्यात्मवदनिवर्त्यत्वादित्यादि यन्नवीनेन जल्पितं तत्स्वव्याघातात् उपेक्ष्यम्॥ १६॥

जीवः कर्ता नवेति संशये नेति प्राप्तम्। ईश्वरं प्रस्तुत्य जीवः कर्तेति श्रुतेः। इतरव्यपदेशादित्यधिकरणे ईश्वर एव कर्तेति समर्थितत्वाच्च। सिद्धान्तमाह—

**कर्ता शास्त्रार्थवत्त्वात्॥ ३३**

जीवः कर्ता भवत्येव। अन्यथा विधिनिषेधशास्त्रवैयर्थ्यापत्तेः।

ननु काल्पनिककर्तृत्वेन शास्त्रस्य सार्थक्यं किं न स्यादित्यत आह—

**विहारोपदेशात्॥ ३४**

स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेत्यादिना मोक्षेऽपि व्यवहारस्य श्रवणादित्यर्थः।

**उपादानात्॥ ३५**

फलोद्देशेन साधनोपादानस्य अनुभवसिद्धत्वादित्यर्थः।

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥ ३६**

आत्मानमेव लोकमुपासीतेत्युपासनक्रियायां जीवस्य कर्तृत्वेन परमात्मनश्च कर्मत्वेन निर्देशात्। न चेहेश्वर कर्ता। आत्मेति प्रथमया निर्देशापत्तेः। कथं तर्हि श्रुतिसूत्रयोरीश्वरस्यैव कर्तृत्वं प्रागुक्तमिति चेत् तत्राह—

**उपलब्धिवदनियमः॥ ३७**

यथा जीवो जिज्ञासितमपि किंचिन्न वेत्ति। अबुभुत्सितमपि किंचिद्वेत्ति न तु तस्योपलब्धौ स्वातन्त्र्यम्। तथा चिकीर्षितमपि सर्वं न करोतीति कर्मणि अनियमादस्वतन्त्रोऽयम्। अत्र हेतुमाह—

**शक्तिविपर्ययात्॥ ३८**

अल्पशक्तित्वाज्जीवस्येत्यर्थः।

**समाध्यभावाच्च॥ ३९**

समाधानमलंबुद्धिः पूर्णकामता। तदभावादित्यर्थः।

यथा च तक्षोभयथा ॥ ४०

यथा च तक्ष्णः कारयितृत्वं नियन्तृत्वं कर्मत्वं चास्ति तथा जीवस्य ।

परात्तु तच्छ्रुतेः ॥ ४१

सा च कर्तृत्वशक्तिः पराधीनैव । कर्तृत्वं कारणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति पैङ्गिश्रुतेः ।

कृतप्रयत्नापेक्षन्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२

विधिनिषेधशास्त्रावैयर्थ्याय । आदिशब्दाद्वैषम्यनैर्घृण्यपरिहाराय । परमात्मा जीवस्यानादिकर्मप्रयत्नयोग्यतामपेक्ष्यैव जीवं प्रेरयति । न त्वनपेक्ष्य । अतो न कश्चिद्दोषः । जीवस्येश्वरसमकक्षस्वातन्त्र्यानभ्युपगमेऽपि तद्दत्तकर्तृत्वाभ्युपगमेन सर्वसामञ्जस्यात् । उक्तं च मोक्षधर्मे— "एतदेवं नचाप्येवमेतदस्ति न चास्ति चेति । एतत् जीवस्य कर्तृत्वमेवं प्रामाणिकम् । नचाप्येवमीश्वरवत्स्वातन्त्र्येण । अत एव तदस्ति नास्ति चेति उभयथापि व्यवहार इत्यर्थः । इति माध्वाधिकरणम् ।

अत्रेदं वक्तव्यम् । शास्त्रार्थवत्त्वं त्वया दुरुपपादम् । जीवे बन्धो नास्तीति त्वत्सिद्धान्तात् । तथा हि—त्वन्मते दुःखित्वाद्यनुभवोऽध्यासरूप एव । उक्तं ह्यानन्दमयाधिकरणे त्वद्भाष्ये प्रमादात्मकत्वात् बन्धस्य विमुक्तत्वं च युज्यते । मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरिति भागवते इति । तत्त्वप्रकाशिकायां च—विमुक्तश्च विमुच्यते इति संसारिणोऽपि विमुक्तत्वश्रवणात् । तदन्यथानुपपत्त्या तस्य परब्रह्मत्वसिद्धेस्तद्विरोधो भेदव्यपदेशस्येति शङ्कानिराकरणार्थत्वेनोदाहृतभाष्यग्रन्थमवतार्य तस्यार्थो वर्णितः । जीवस्य परब्रह्मत्वाभावेऽपि विमुक्तत्वोक्तिर्युज्यते । बन्धस्याज्ञानमूलत्वेनास्वाभाविकत्वादिति । युक्तंचैतत् । त्वन्मते दुःखादेरन्तःकरणपरिणामतया जीवस्य दुःखाद्याश्रयत्वाभावात् । तथापि दुःखादिस्वामित्वमस्तीति चेन्न । ज्योतिराद्यधिष्ठानं तु तदामननात् । स्वामिनः फलश्रुतेरित्यात्रेय इति त्वदीयाधिकरणयोर्जीवस्येन्द्रियतत्फलस्वामिताया निरस्तत्वात् ।

स्यादेतत् । अहं दुःखीत्याद्यनुभवात् जीवस्य दुःखादिस्वामित्वमस्तीत्येव मन्मतम् । किं तु तत्स्वामित्वमीश्वरदत्तमपकृष्टं चेत्येव विशेषः । अत एव सांख्याधिकरणानुव्याख्याने द्वैविध्येऽपि तु कामादेः कुतः स्वामित्वमात्मनः । साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचिदिति कामादिस्वामित्वस्याप्रत्याख्येयत्वमुक्त्वा तदनन्तरश्लोके तस्यापकृष्टत्वमुक्तम् । न्यायसुधायां चात्यन्तवश्यत्वरहितगवादिस्वामित्वदृष्टान्तेन तस्यापकर्षः समर्थित इति चेत् मैवम् । आनन्दमयाधिकरणीयत्वद्भाष्यादिविरोधात् । नन्वभ्युच्चयमात्रं तत् । अत एव मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः । मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेत् ॥ मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिन" इत्यनुव्याख्यानं सङ्गच्छेत । अयं ह्यस्यार्थः । बन्धो न मिथ्या प्रत्यक्षसिद्ध-

त्वात्। यदि श्रुतिविरोधाद्बन्धस्य मिथ्यात्वं तदा तस्यापि वाक्यस्य तत एव मिथ्यात्वं स्यात्। वाक्यस्य सर्वमिथ्यात्वसाधकत्वं न स्यात्। मिथ्याभूतस्य साधकतायाः प्रतिवाद्यसम्मतत्वादिति। अत एवानुव्याख्यानेऽपि सुखादिग्राहकस्य साक्षिणो निर्दोषतया याथार्थ्यनियम उक्त इति चेन्न। अनुव्याख्यानस्य त्वदीयैरेवाभिप्रायान्तरकथनात्। उक्तं हि तद्व्याख्यानन्तरमेव न्यायसुधायाम्—अत्र तत्त्वविदो वदन्ति। सर्वो हि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणोऽस्मादध्यात्मन्येवारोपित इत्यङ्गीक्रियते। यथोक्तं भाष्यकृता-प्रमादात्मकत्वाद्बन्धस्येति। अतः किं निबन्धनो बन्धमिथ्यात्वनिरासे निर्बन्धः। सत्यम्। तथाप्यस्त्यत्र दर्शनभेदः। बुद्धीन्द्रियशरीरविषयाः स्वरूपत एवेश्वरपरवशा अप्यविद्यादिवशादात्मीयतयाध्यस्यन्ते। तांश्चात्मनो विविक्तानपि विस्पष्टं तथानुपलभमानस्तद्धर्मान् दुःखादीन् सत्यानेवात्मीयत्वेन पश्यंस्तत्कृते नीचोच्चत्वलक्षणे विकृती सत्ये एव प्रतिपद्यत इत्यस्मन्मतम्। मायावादिनस्तु दुःखादिकं स्वरूपेणापि मिथ्येति मन्यन्ते। अतस्तन्निराकरणनिर्बन्धो युक्त एव। एतदेव परिभावयितुं बन्धस्य मिथ्यात्वमिति संमुग्धे प्रस्तुते दुःखादेरिति निष्कृष्योक्तमिति। एवं च स्वपरसिद्धान्तविशेषाविष्करणपरेण न्यायसुधाग्रन्थेन मम शरीरं ममेन्द्रियाणि मम मनोऽहं दुःखीत्यादिप्रत्ययानां शरीरेन्द्रियदुःखादिषु भासमाने आत्मीयत्वांश एव आरोपितविषयत्वं न तु शरीरादिस्वरूपेऽपीति त्वन्मतनिष्कर्षः स्फुटीकृतः। ननु मध्वमते साक्षिणो याथार्थ्यनियमात् साक्षिरूपस्य दुःखित्वाद्यनुभवस्याध्यासत्वं दुर्वचमिति चेन्न। ईश्वरपरतन्त्रस्य जीवस्य स्वातन्त्र्यग्रहणे प्रमाणाप्रमाणज्ञानयोरप्रामाण्यप्रामाण्यग्रहे च साक्षिणो याथार्थ्यपरित्यागात्; ननु स्वातन्त्र्यादिग्रहणं न साक्षिरूपं किं तु मनोवृत्तिरूपम्। मानसे दर्शने दोषाःस्युर्नैव साक्षिदर्शन इति। यत्किंचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदिति चानुव्याख्यानोक्तेरिति चेत्। हन्त, तर्हि दुःखित्वाद्यनुभवोऽपि मनोवृत्तिरूपोऽस्तु। त्वत्सिद्धान्तसिद्धाध्यासस्य त्वद्रीत्या तथैव निर्वाह्यत्वात्। नन्वेवं संसर्गस्येव दुःखादेरपि मनोवृत्तिविषयतैव स्यात्। अविशेषात्। साक्षिसिद्धं तदिति सिद्धान्तो व्याकुप्येतेति चेतर्हि साक्षिण एव संसार्गांशेऽध्यासरूपतास्तु। नहि त्वया साक्षिणो याथार्थ्यनियमः सुवचः। असुरसाक्षिणो यथार्थत्वाभावस्य मनुष्यसाक्षिणो मिश्रत्वस्य च स्वीकारात्।

स्यादेतत्। प्रपञ्चमिथ्यात्वनिराकरणप्रस्तावेसत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम्। साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोष इत्यादयः साक्षिणो याथार्थ्यनियमकथनपराः सांख्यमतदूषणप्रस्तावे आत्मनः कामादिस्वामित्वनियमपराश्च माध्वग्रन्थाः परस्परं विरुध्यन्ते। किं च आत्मीयत्वांशेऽपि किं मिथ्यत्वं नाम? न तावदनिर्वचनीयत्वम्। माध्वेन तदनभ्युपगमात्। असत्ख्यातिश्चेत्तर्हि रजतादिभ्रमाणामपि संसर्गांश एवाविशेषात्। तथात्वापत्तावन्यथाख्यातिमतप्रवेशः स्यात् यदाहुः—तस्मादन्यथासन्तमन्यथा प्रतिपद्यते। तन्निरालम्बनं ज्ञानमसदासम्बनं च तदिति। अपि च जीव ईश्वराद्भिद्यते दुःखाश्रयत्वादित्यादि माध्वप्रयोगाः स्वरूपासिद्धाःस्युः। किं च शास्त्रस्य न केवलं नैष्फल्यम्, बाधितार्थकत्वमपि प्रसज्यते। सुखदुःखादिभोक्तृत्वस्यालीकत्वात्। दुःखादेः स्वरूपेण पारमार्थिकतायाश्च अकिंचित्करत्वात्। तथा च

कथं सुधोक्तनिष्कर्षो ग्रहीतव्य इति चेत् आत्मानमुपालभस्व। यस्त्वमित्थंश्रुतिस्मृतिन्यायैः स्वोक्त्या च विरुद्धं जल्पद्भिर्माध्वादिभिश्च चिरन्तनाच्छ्रौतात्पथः प्रच्यावितोऽसि। गुणगृह्यत्वे तु कृतप्रायश्चित्तस्सन् अद्वैतवादपादसेवायै यतस्वेति दिक् ॥ १७ ॥

जीव ईश्वरस्यांशो नवेति सन्देहे श्रुतिविगानादनध्यवसायेन पूर्वःपक्षः। अंशा एव हि मे जीवा अंशी हि परमेश्वरः। स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः" इति **गौपवन**श्रुतौ अंशित्वोक्तेः। नैवांशो नैव सम्बन्धो नापेक्ष्यो जीवः परस्येति **भाल्लवेय**श्रुतावनंशत्वोक्तेश्च। न च वस्तुनि विकल्पो युज्यते। तस्मात्तत्वनिर्णयो दुर्लभ इति प्राप्ते सिद्धान्तमाह—

**अंशो नानाव्यपदेशादन्यथा वापि दाशकितवादित्वमधीयत एके ॥ ४३**

जीवः परमात्मनोंशो भवत्येव। नानाप्रकारेण जीवस्येशसम्बन्धित्वव्यपदेशात्। तत्सम्बन्धित्वमेव हि इह तदंशत्वं विवक्षितम्। अंशो नानाव्यपदेशादिति सूत्रांशे मूलभूता **पाराशर्यायण**श्रुतिरपि। अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते, च, नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति सखेति चेति। किं च अन्यः परोऽन्यो जीव इति **काषायण**श्रुतिः "ब्रह्मदासा ब्रह्मदासी" इति च श्रुत्यन्तरम्। अनेन हि श्रुतिद्वयेन जीवेश्वरयोर्भेदाभेदावुच्यते। तौ च विरुद्धाविल्यगत्या भेदमङ्गीकृत्याभेदस्थाने अंशत्वं स्वीकर्तव्यम्। भेदाभेदोक्त्यन्यथानुपपत्त्या अंशो जीव इत्यस्मिन्नर्थे **आग्निवेश्य**श्रुतिरपि। "अंशो ह्येष परस्य भिन्नं ह्येनमधीयिर" इति। तथा **वाराहे** संपूर्णसूत्रार्थः संगृहीतः। पुत्रभ्रातृपितृत्वेन स्वामित्वेन यतो हरिः। बहुधा गीयते वेदैः जीवोंशस्तस्य तेन तु॥ यतो भेदेन तस्यायमभेदेन च गीयते। अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यत" ॥ इति। श्रुत्यन्तरेणेममर्थं साधयितुं सूत्रान्तरम् ॥

**मन्त्रवर्णात् ॥ ४४ ४५**

पादोऽस्य विश्वा भूतानि इति। पादोंशः। **अपि च स्मर्यते**। ममैवांशे जीवलोके जीवच्छरीरे जीवभूतो जीवाख्यः। नन्वंशत्वे मत्स्यादिसाम्यापातः। अनंशत्वश्रुतिविरोधश्चेत्यत आह—

**प्रकाशादिवन्नैवं परः ॥ ४६**

अंशत्वेऽपि मत्स्यादिरूपः परो नैवंविधः। नहि तेजोंशस्यापि कालाग्नेः खद्योतेनैकरूप्यम्। तथा च नैवांश इति **भाल्लवेय**श्रुतिर्जीवो मत्स्यादिवदभिन्नांशो नेत्येवंपरेति भावः।

**स्मरन्ति च ॥ ४७**

स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते। अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः॥ तदेव नाणुमात्रोऽपि भेदःस्वांशांशिनोः क्वचित्॥ विभिन्नांशोऽल्पशक्तिः स्यात्किंचित्सादृश्यमात्रत" इति **वाराहे**। किंच—

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८

परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयते । य आत्मानमन्तरो यमयति । तमेवं विद्वानमृत इह भवति । इत्यादिना । सदंशत्वेऽपि देहसंबन्धाज्जीवस्योपपद्यते नतु परमस्य 'वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाहं सहस्रधाहं अमितोऽहमनन्तोऽहं नैवेति जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो नमुक्तिः । सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परमानन्दा" इति **चतुर्वेदशिखायाम्** । ज्योतिरादिवदिति । यथा आदित्यो मण्डलाभिमानी वियद्गतप्रकाशाभिमानी तदंशकश्चैकरूपः अनुज्ञादिरहितः अक्ष्यभिमानी तदंशस्तु देहदोषलेपादंश्यधीनप्रवृत्तिमांस्तद्वदित्यर्थः । उक्तं च **वाराहे**—"अंशाश्च देहयोगित्वाज्जीवा बन्धादिसंयुताः । अनुग्राह्याश्चेश्वरेण नतु मत्स्यादिको हरिः ॥ अदेहबन्धयोग्यत्वाद्यथा सूर्यप्रभाऽक्षिणि" इत्यादि ॥

## असन्ततेश्चाव्यतिकरः ॥ ४९

सम्यक्सन्ततिः पूर्णशक्तिता मत्स्यादेः । तदभावोऽसन्ततिः अपूर्णशक्तिता जीवानाम् । अतो व्यत्यासो नेति सूत्रार्थः । तथा च **चतुर्वेदशिखायाम्**—अस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य हवा एतस्य परमं परं च रूपाणि दशरूपाणि शतरूपाणि अमितरूपाणि, तानि ह वा एतानि सर्वाणि रूपाणि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि अथावराः सर्वे एवापूर्णाः सर्वे एव बध्यन्ते अथ मुच्यन्ते च क्वचन केचनेति ।

## आभास एव च ॥ ५०

जीवाः प्रतिबिंबांशाः रूपं रूपमितिश्रुतेः । जीवसमुदायः परमेश्वरस्वरूपम् प्रतिं प्रतिरूपो भूत्वा वर्तते । तद्बिंबरूपमस्य मुक्त्यर्थं साक्षात्कारविषयो भवति । स च परमेश्वरः स्वसामर्थ्येनानन्त (जीव) बिंबरूपो ज्ञायते । अस्यानन्तानि हरिनामकानि रूपाणि व्यूहशस्सन्तीति श्रुत्यर्थः । मत्स्यादयस्तु न प्रतिबिंबाः । अतो नैकरूपतेति भावः । उक्तं च **वाराहे**—

द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।
प्रतिबिंबांशकस्याथ स्वरूपांशक एव च ॥

प्रतिबिंबांशका जीवाः प्रादुर्भावाः परे स्मृताः ।
प्रतिबिंबेष्वल्पसाम्यं स्वरूपाणीतराणि तु ॥" इति ॥

नचोपाध्यभावात् प्रतिबिंबानुपपत्तिः । सोपाधिरनुपाधिश्च प्रतिबिंबो द्विधेष्यते । जीव ईशस्यानुपाधिः इन्द्रचापो यथा रवेरिति श्रुतेः । अनुपाधिरिति स्वरूपातिरिक्तोपाधिरहित इत्यर्थः । यथा चैतत्तथा यावदात्मभवित्वाच्च न दोषस्तद्दर्शनादिति पञ्चदशाधिकरणे व्युत्पादितम् । तस्माज्जीव ईश्वरांशो भवत्येवेति माध्वाधिकरणशरीरम् ।

अत्रेदं वक्तव्यम् । अंशो न वेत्यनध्यवसायस्तावदौपनिषदानामयुक्तः । अंशत्वस्य व्यावहारिकतया तदभावस्य परमार्थतया च सप्रपञ्चनिष्प्रपञ्चश्रुत्योरिव अंशत्वानंशत्वश्रुत्योरप्यविरोधात् । एतेन भेदाभेदश्रुती च व्याख्याते । विषमसत्ताकभेदाभेदयोरविरोधात् । त्वद्रीत्याप्यन्योन्तर आत्मेत्यादाविव भेदव्यवहारोपपत्तेश्च बन्धप्रतिपादकानामपि भ्रमसिद्धबन्धानुवादत्वोपपत्तेः । त्वया नस्थानतोऽपि परस्येत्यधिकरणे कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यत" इति श्रुतेः विश्वतैजसप्राज्ञादिरूपस्य भगवतोऽपि बन्धोऽस्तीत्याशंक्य तस्याः श्रुतेरन्यथैव नयनात् । पुराणेषु रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्यानुवादकमिति तृतीयस्य चतुर्थपादे सर्वथापि त एवोभयलिङ्गादित्यधिकरणेऽनुव्याख्यानन्यायसुधयोरुक्तत्वाच्च । अद्वैते साधको लाघवोपष्टब्धः श्रुतिस्मृत्यादिसमूहो बिंबप्रतिबिंबयोरभेदश्च स्पष्टः प्राचां ग्रन्थे । यत्तूक्तं तत्सम्बन्धित्वमेव तदंशत्वमिति तन्न, देवदत्तीयेष्वपि घटादिषु तदंशत्वव्यवहारादर्शनात् । यच्चेदशेनांशत्वेनाभेदव्यवहार इति **तदतिस्थवीयः।** देवदत्तो घट इति प्रयोगाभावात् । यदाहुः नामार्थयोरभेदस्संसर्ग इति । अत एव पृथगुपदेशात् तद्गुणसारत्वादिति त्वदधिकरणेऽपि तत्त्वमसीति गौणं सामानाधिकरण्यमित्युक्तम् । "नाम्नोर्द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वापि क्वचिद्भवे"दिति वाक्यार्थविदामुक्तिरप्येवमेव सङ्गच्छते । यदि हि त्वदुक्तरीत्या सम्बन्धमात्रमभेदस्थानापन्नम् । तर्हि वैयधिकरण्यस्य दुर्वारतया सामानाधिकरण्येनेत्यंशो विरुध्येत ; न च शब्दादौ व्यभिचारान्नायं नियम इति वाच्यम् । अव्ययातिरिक्तेषूक्तनियमस्वीकारात् शाब्दिकैर्निपातानां द्योतकत्वाभ्युपगमाच्चेत्यादि प्रपञ्चितमस्माभिः**शब्दकौस्तुभे** ॥ १८ ॥

जीवो भगवत्प्रतिबिंबो न वेति संशये नेति प्राप्तम् । प्रतिबिंबत्वाभावबोधिकायाः श्रुतेः सत्वात् । तस्याश्चन्यायोपष्टब्धत्वेन प्राबल्यात् । अस्ति खलु सुरासुरनरतिर्यगादिरूपतया जीवानां भेदः । न चायं बिंबैक्ये सति युज्यते । सिद्धान्तस्तु प्रतिबिंब इति । कथं तद्वैचित्र्यमित्युत्प्रेक्षायामाह—

**अदृष्टानियमात् ॥ ५१**

अनाद्यदृष्टवैचित्र्याद्वैचित्र्यमित्यर्थः ।

ननु रागद्वेषमोहादिदोषैरेव वैचित्र्योपपत्तौ किमदृष्टकारणकल्पनयेत्यत आह—

**अभिसन्ध्यादिष्वपि चैवम् ॥ ५२**

दोषवैचित्र्यमप्यदृष्टवैचित्र्याधीनमेवेत्यर्थः ।

ननु स्वर्गभूम्यादिस्थानवैचित्र्यादेव वैचित्र्यमस्त्वित्यत आह—

**प्रदेशादिति चेन्नान्तर्भावात् ।। ५३**

स्थानवैचित्र्यस्याप्यदृष्टवैचित्र्याधीनत्वात् । एकप्रदेशस्थानामपि वैचित्र्यदर्शनाच्चेति भावः । प्रतिबिंबत्वाभावश्रुतिस्तु स्वरूपातिरिक्तोपाधिशून्यतया अंशोपाधिसापेक्षप्रतिबिंबत्वाभावाभिप्रायेति माध्वाधिकरणशरीरम् ।

अत्रेदं वक्तव्यम् । सच्चिदानन्दरूपत्वाविशेषात् जीवानां वैचित्र्यमसिद्धम् । सुरासुरनरत्वादयो हि देहधर्माः न तु जीवगताः तेषां जीवगतत्वे अभ्युपगम्यमाने तु देहात्मवादप्रवेशः । किंच प्रतिबिंबस्वरूपात्मकवैचित्र्यवादिनस्तत्र मतेऽपि तस्यानादितया तत्र कारणगवेषणमव्युत्पत्ति निबन्धनमेव । उपाधिश्चाविद्याख्यः श्रुतिस्मृत्यादिसिद्ध एवेति निरुपाधिकत्वोक्तिरयुक्तेति दिक् ।।

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे

द्वितीयाध्यायस्य तृतीयः पादः ।।

प्राणा उत्पद्यन्ते नवेति संशये नेति प्राप्तम् । प्राणा एवानादय इति **कापायणश्रुतेः** । नोपादानं हीन्द्रियाणां अतोऽनुत्पत्तिरिष्यते । उपादानकृता सृष्टिः सर्वलोकेषु दृश्यत इति **भविष्यपर्वो**क्तेश्च । सिद्धान्तमाह—

**तथा प्राणाः ।। १**

यथा आकाशादय उत्पद्यन्ते तथा प्राणा अपि । एतस्माज्जायते प्राण इत्यादिश्रुतेः ।

**गौण्यसम्भवात् ।। २**

अनादित्वश्रुतिस्तु गौणी । मुख्यासम्भवात् । नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि च सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते । परेण साम्यसंप्राप्तेः कस्य स्यान्मुख्यनित्यतेति भविष्यत्पर्वोक्तेश्च ।

**प्रतिज्ञानुपरोधाच्च ।।**

इदं सर्वमसृजतेति प्रतिज्ञाप्येवं सङ्गच्छत इति सूत्रार्थः । तस्माद्युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वमिति मध्वाधिकरणम् । अत्र तथान्यदित्यादि त्वदधिकरणविरोध इत्यादिखण्डनं प्राग्वत् ।। मन उत्पद्यते न वेति संशये द्विधा ह्येवेन्द्रियाणि नित्यानि चानित्यानि च । तत्र नित्यं मनोऽनादित्वात् नह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानीति सयुक्तिक**गौपवनश्रुते**र्नोत्पद्यत इति प्राप्ते सिद्धान्तमाह—

**तत्प्राक्श्रुतेश्च ॥ ३**

मन उत्पद्यते। मनः सर्वेन्द्रियाणि चेति श्रुतेः। गौपवनश्रुतिस्तु इन्द्रियान्तरापेक्षया अल्पोपचयाभिप्राया। पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः। तदनुत्पत्तिवचनमल्पोपचयकारणात्। इति वायूक्तेः। तस्मात्प्रलयेपि इन्द्रियवत्सूक्ष्मरूपेण मनोस्ति। सर्गादौ च भगवत उत्पद्यत इति जगत्कारणे समन्वयः सिद्ध इति माध्वाः। खण्डनं प्राग्वत् ॥

वागुत्पद्यते नवेति संशये वाग्वाव नित्या नचोत्पद्यते अस्यां हि श्रुतिरवतिष्ठत इति सयुक्तिक**पौष्यायणश्रुते**र्नेति प्राप्ते सिद्धान्तमाह—

**तत्पूर्वकत्वाद्वाचः ॥ ४**

वागुत्पद्यत एव। मनः पूर्वरूपं वागुत्तररूपमिति श्रुतौ मनोजन्यत्वावगतेः। वाग्वाव नित्येति तूपचारमात्रम्। अस्यां हि वाक्यशेषे उपचारबीजस्य स्फुटीकरणात्। वाचश्च श्रुत्याश्रयत्वं नाम तदुच्चारणसामर्थ्यमेव। अत्रापि खण्डनं प्राग्वत् ॥ प्राणाः सप्त वा द्वादश वेति सन्देहे सप्त प्राणाः प्रभवन्ति तस्मादिति तैत्तरीयश्रुतेः, द्वादश वा एते प्राणा इति **कौण्डिन्य**श्रुतेश्च परस्परविरोधेनाप्रामाण्यान्न समन्वयेन जगत्कारणत्वसिद्धिरिति प्राप्ते सिद्धान्तमाह —

**सप्तगतेर्विशेषितत्वाच्च ॥ ५**

गतेर्ज्ञानस्य सप्त प्राणाः गुहायां निहिताः सप्त सप्तेति विशेषणात्। गुहा हृदयमाशयस्थानं यस्या बुद्धेस्तां प्रति तदर्थं ये प्रतिशरीरम् सप्त सप्त प्राणा निहितास्ते यत्र चरन्तीत्यर्थः। तथा च घ्राणरसनचक्षुः श्रोत्रत्वङ्मनोबुद्धिरूपज्ञानेन्द्रियापेक्षया सप्तत्वोक्तेर्न विरोध इति भावः।

**हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६**

पाणिपादपायुगुह्यवाचस्तु कर्मणि हेतवः। अतो नैवम्। ज्ञानेन्द्रियैस्सह न पठिता इत्यर्थः। संसारस्थितिहेतुत्वात् स्थितं कर्मविदो विदुः। तस्माद्गतिहेतुत्वात् ज्ञानं गतिरिहोच्यते इति वायुप्रोक्तेः तस्मात्संख्याविषयकश्रुत्योरविरोधात् सिद्धं समन्वयेन जगत्कर्तृत्वमिति माध्वाः। खण्डनं प्राग्वत् ॥ प्राणा व्याप्ता अणवो वेति संशये व्याप्ता इति प्राप्तम्। दिवीव चक्षुराततमिति विष्णोर्व्याप्तत्वे दृष्टान्तत्वेन चक्षुर्व्याप्तेरुक्तत्वात्। अणुभिः पश्यत्यणुभिः शृणोति प्राणा वा अणव इति **कौण्डिन्य**श्रुतिस्तु न प्रमाणम्। दूरस्थश्रवणदर्शनस्मरणाद्यनुरोधेन सन्निकर्षस्यावश्यकतया व्याप्तिश्रुतेर्युक्त्युपष्टम्भत्वेन प्राबल्यात्। सिद्धान्तमाह—

**अणवश्च ॥ ७**

अणव एव प्राणाः। न चैवं श्रुतियुक्तिविरोधः। यतस्तेजसा व्याप्ता अपि। तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवतीति

शाण्डिल्यश्रुतेः। चक्षुषश्चक्षुष इत्यर्थ इति माध्वाः। खण्डनं प्राग्वत्। किञ्च त्वदीत्याऽणुत्व-व्यापकत्वयोरविरोधात्संशयानुपपत्तिः ॥ ५ ॥

सर्वप्राणप्रेरको मुख्यप्राण उत्पत्तिमान्न वेति संशये नेति प्राप्तम्। नैव प्राण उदेति नास्तमेतीति श्रुतेः। सिद्धान्तमाह---

## श्रेष्ठश्च ॥ ८

मुख्य प्राण उत्पद्यते। सौक्ष्म्येण ह्वा एषोऽवतिष्ठते स्थूलत्वेनोदेतीत्यादिगौपवन-श्रुतेः। ननूत्पत्तिश्रुतिश्चेष्टाबाह्यवायुविषयास्त्वित्यत आह---

## न वायुक्रिये पृथगुपदेशात् ॥ ९

"चेष्टायां बाह्यवायौ मुख्यप्राणे च गीयते। प्राणशब्दस्त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्तित" इति वचनाद्वायुक्रिययोर्यद्यपि प्राणशब्दोऽस्ति। तथाप्युत्पत्तिश्रुतौ वायुक्रिये न प्राण-शब्दार्थः। स प्राणमसृजत ख वायुर्ज्योतिरापस्तपोमन्त्राः कर्मेति पृथगुपदेशात्। "भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत्। मुख्यः प्राणः परस्माच्च न परः कारणान्वित" इति वायूक्तेश्चेति माध्वाः। खण्डनं प्राग्वत् ॥ ८ ॥

मुख्यप्राणः स्वतन्त्रः परतन्त्रो वेति संशये स्वतन्त्र इति प्राप्तम्। "न प्राणः किञ्चि-दाश्रित" इति आग्निवेश्यश्रुतेः। सिद्धान्तमाह---

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः १०

मुख्यः प्राणः परमेश्वराधीन एव। चक्षुरादिवत्। सर्वं ह्येव तत्परमेऽवतिष्ठते। प्राणश्च प्राणिनश्चेत्यादिगौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वानुशासनात्। नान्योऽतोस्ति द्रष्टा इत्यादिवचनमादिशब्दार्थः। भगवदितरस्य स्वातन्त्र्येण द्रष्टृत्वं नास्तीति हि तस्यार्थः। मुख्यप्राणस्य चक्षुरादिवत् पारतन्त्र्ये तत्स्वातन्त्र्यपराग्निवेश्यश्रुतेः का गतिरित्यत आह

## अकारणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११

अकरणं मुख्यप्राणः चक्षुरादीने तु करणानि। तथा च कर्तृप्रयोज्यत्वाभावमात्रेण तस्य स्वातन्त्र्योक्तिः। तथाहि दर्शयति माण्डव्यश्रुतिः। "तानि ह वा एतानि सर्वाणि करणा-न्यथ प्राण एवाकरणस्तस्मान्मुख्य इत्याचक्षत" इति। खण्डनं प्राग्वत् ॥ ७ ॥

प्राणादयो मुख्यप्राणस्य दासास्तत्स्वरूपाण्येव वेति संशये 'सर्वे एते मुख्यदासा' इति श्रुतेः· मुख्यस्यैव रूपाणि प्राणाद्या इति श्रुतेश्च समानबलत्वाद्विरुद्धत्वाच्चानध्यवसाये प्राप्ते सिद्धान्तमाह---

**पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२**

मुख्यप्राणस्य पञ्चवृत्तयः तद्दासाश्चेति द्विविधाःप्राणादयः सन्ति। अतो भिन्नविषयत्वान्नोक्तश्रुत्योर्विरोधः। तथा च व्यपदिश्यते श्रुतौ—अथ पञ्चवृत्ति तत्प्रवर्तते। प्राणो वाव पञ्चवृत्तिः। प्राणोऽपानो व्यानोदानः समान इति। तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते प्राणाद्वाव प्राणोऽपानादेवापानो व्यानाद्व्यान उदानादुदानः समानादेव समानो यथाह वै मनः पञ्चधा व्यपदिश्यते। "मनोबुद्धिरहंकारश्चित्तं चेतनेति तेभ्यो हि एतेभ्यः पञ्चदासाः प्रजायन्ते। मनसो वाव मनो बुद्धेर्बुद्धिरहंकारादहंकारश्चित्ताच्चित्तं चेतनाया एव चेतनमिति तत्र संकल्पविकल्परूपं मनः निश्चयरूपा बुद्धिः, अस्वरूपे स्वरूपरूपमतिरहंकारः, स्मरणहेतुश्चित्तं चेतसो व्याप्तिश्चेतनेति अशेषगुणपरिपूर्णानि मुख्यस्वरूपाणि पञ्च च तद्दासाः पञ्चा चान्येऽपि प्राणाद्यास्तद्गुणैर्युता" इति च श्रुत्यन्तरम्। अतः श्रुत्यविरोधेन प्राणादिस्वरूपसिद्धेः युक्तो विष्णौ समन्वय इति माध्वाः। खण्डनं प्राग्वत्।

मुख्यप्राणो व्याप्तोऽणुर्वेति संशये व्याप्त इति प्राप्तम् प्राण एवाधस्तात्प्राण उपरिष्टादित्यादिश्रुतेः। सिद्धान्तमाह—

**अणुश्च ॥ १३**

प्राणो वा अणुरिति **सौत्रायण**श्रुतेः। अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिरिति श्रुतेः, व्याप्तिश्रुतिश्च देहबहिर्वर्तिमुख्यवायुविषया। स वा एष प्राणो अणुर्महान्नान्तर्यामी अणुर्बहिर्महानिति **कौण्डिन्य**श्रुतिः। अतः श्रुत्यविरोधेन मुख्यप्राणस्याणुत्वसिद्धेः युक्तो जगत्कारणे समन्वय इति माध्वाः। खण्डनं प्राग्वत्।

चक्षुरादीनि जीवकरणानि उत ब्रह्मकरणानीति संदेहे जीवकरणानीति प्राप्तम्। "जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः। यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु" इति सौत्रायणश्रुतेः। सिद्धान्तमाह—

**ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४**

ज्योतिराद्यधिष्ठानं ब्रह्म तदेव तैः करणैः प्रवर्तयति यः प्राणे तिष्ठन्नित्यादि तदामननात्। ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनोवाक् इति। तथा एतैः कारयतीति **काषायण**श्रुतेश्च। जीवकरणश्रुतेः का गतिरित्यत्राह—

**प्राणवता शब्दात् ॥ १५**

जीवेनैव करणैः कारयति परमात्मा। एष ह्यनेनात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति बुद्ध्या बोधयति तस्मादेवाहुः सृतिरसृतिरिति **भाल्लवेय**श्रुतेः। सृतिः स्वातन्त्र्येण प्रवृत्तियुक्तः। असृतिः तद्विहीनः। 'करणैः कारणं ब्रह्म पुरुषापेक्षयाखिलम्।

श्रोत्रादिभिः कारयति करणानीत्यतो विदुः। न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः। केवलात्मेच्छया तस्मान्मुख्यत्वमि"ति वाराहाच्च। एवमस्वतन्त्रस्यापि जीवस्य पराधीनान्यपि साधनानि तत्कार्यनिर्वाहकत्वात्तत्करणानीत्युच्यन्ते। यथा परकीयकुठारेण वृश्चतोऽपि कुठारस्तदीय इति व्यवह्रियते तद्वदित्युक्त्वा जीवकरणश्रुतेरभिप्रायान्तरमाह—

**तस्य च नित्यत्वात्॥ १६**

जीवकरणसम्बन्धस्यानादित्वात् तत्करणत्वश्रुतिर्युज्यते परकीयबहुकालसम्बन्धिनि तदीयत्वोपचारदर्शनादिति भावः। एतेनानुभवोऽप्यानुमानिकतया व्याख्यात इति माध्वाः। कर्ता शास्त्रार्थवत्त्वादिति त्वदीयाधिकरणखण्डनेनैव ग्रस्तमेतत्॥ १०॥

मुख्यप्राण इन्द्रियं नवेति संशयः। इन्द्रियमिति प्राप्तम्। प्राणा वा इन्द्रियाणि प्राणा हीन्द्रियवन्तीति सयुक्तिकपौत्रायणश्रुतेः सामान्यतः सर्वप्राणानामिन्द्रियत्वोक्तेः। सिद्धान्तमाह—

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥ १७**

प्राणाद्भिन्नान्येवेन्द्रियाणि द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम्। द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट्॥ इति पौत्रायणश्रुतेः। श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम्। मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु। विषयद्रवणात्तेषां इन्द्रियत्वमुदाहृतम्। तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः। इति नृसिंहसंहितोक्तेश्च। इतोऽपि मुख्यप्राणस्य चक्षुरादिभिरविशेषो न मन्तव्य इत्यत आह—

**भेदश्रुतेः॥ १८**

स्थित एव हीदं मुख्यप्राणः करोति कारयति चलति चालयति धत्ते धारयति प्रभुं वा एनमाहुः। अथेन्द्रियाणि न धारयति तानि वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि न कुर्वन्ति न कारयन्ति न चलन्ति न चालयन्ति न दधते न धारयन्ति तानि वा एतानि वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानीति पौत्रायणश्रुतेः। ननु मुख्यप्राणस्यापीश्वरपरवशत्वादिन्द्रियत्वं किं न स्यादित्यत आह—

**वैलक्षण्याच्च॥ १९**

ईश्वरवशापि हीन्द्रियप्रवृत्तिः जीवप्रयत्नसापेक्षा। जाग्रति भावात् सुषुप्तावभावाच्च। मुख्यप्राणस्य तु न जीवप्रयत्नापेक्षा प्रवृत्तिरिति वैलक्षण्यमिति भावः। चशब्देन प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीति श्रुतिं सूचयति। अतः श्रुत्यनुरोधेन मुख्यप्राणस्यानिन्द्रियत्वसिद्धेः युक्तो विष्णौ समन्वय इति माध्वाः। खण्डनं प्राग्वत्।

शरीरं विरिञ्चिसृष्टं परमात्मसृष्टं वेति सन्देहे विरिञ्चिसृष्टमिति प्राप्तम् । विरिञ्चो वा इदं विश्वं विरचयति विदधाति ब्रह्मैव विरिञ्चः । एतस्माद्धीमे रूपनामनी इति **गौपवन**श्रुतेः । यस्माद्विरचयेत्सर्वं विरिञ्च्यस्तेन भाष्यते । एको हि कर्ता जगतो ब्रह्मैव स चतुर्मुखः इति ब्राह्मोक्तेश्च । विरचयतीत्यस्यैव विवरणं विदधातीति । सिद्धान्तमाह—

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २०**

नामरूपात्मकदेहादिप्रपञ्चस्य उत्पत्तिर्विष्णोरेव भवति सर्वाणि रूपाणीति पुरुषसूक्तोक्तेरिति भावः । ननु विरिञ्चस्य कर्तृत्वेपि श्रुतिरुक्ता । सत्यम् । अवान्तरकर्तृत्वपरा सा । सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः । एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः ॥ इति पाद्मोक्तेः । त्रिवृत्क्रिया यतो विष्णोः रूपं च तदपेक्षया । रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः । अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् । हरिरेवेत्यतः कर्ता पितातो भगवान् प्रभुः ॥ इति ब्रह्माण्डोक्तेश्च । अत एव त्रिवृत् कुर्वत इति हेतुगर्भं विशेषणं सूत्रकृतोक्तमिति माध्वाः । समन्वयाद्यधिकरणद्वयुभ्याद्यधिकरणखण्डनेन खण्डितम् ॥ १२ ॥

देहः किमाप्यः पार्थिवस्तैजसः त्रयात्मको वेति सन्देहे आप्य इति प्राप्तम् । आपो वा मांसमस्थि च भवन्ति आपश्शरीरमाप एवेदं शरीरमिति **कौण्डिन्य**श्रुतेः । अम्मयं तु यतो मांसं अतस्तृप्तिश्च मांसतः इति भारतोक्तेश्च । पार्थिवं इत्यपरः पक्षः पृथिवी शरीरमिति श्रुतेः । तैजसं इत्यन्यः तथा श्रवणात् । औष्ण्यदर्शनाच्च । सिद्धान्तमाह—

**मांसादिभौमं यथाशब्दमितरयोश्च ॥ २१**

यत्कठिनं तत् पृथिवी । यद्द्रवं तदापः यदुष्णं तत्तेज इति श्रुतेः । मांसाद्येव भौमं शोणिताद्याप्यं यथाशब्दमङ्गीकर्तव्यम् । मांसादेरपि न केवलपार्थिवत्वं किं तु भूतान्तरकार्यत्वमपि । आपो वेति पूर्वश्रुतिर्न विरुध्यते । पञ्चभूतात्मकं सर्वं तदप्येकविवक्षया । एकभूतात्मकत्वेन व्यवहारस्तु वैदिके । भौममित्येव काठिन्यात् शौक्ल्यादौदकमित्यपि । तेजिष्ठत्वात्तैजसं च यथार्थं वचनं श्रुतौ इति **वायूक्तेः** । कथं तर्हि व्यवहारवैलक्षण्यं तत्राह—

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२**

ब्राह्मणग्रामवदिति भावः । पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता । इतरे हि त्रिभागिन्यः आपस्तेजस्तु भागतः ॥ इति सामान्यतो ज्ञेयः भेदश्च प्रतिपुरुषम् । स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतमिति **ब्रह्मसंहितायाम्** । पार्थिवशरीरे अर्धं पृथिवी । द्वितीयेऽर्धे भागत्रयमिति आपः भागस्तु तेजः । आप्यशरीरे आपोऽर्धं अपरार्धे त्रिभागा पृथिवी । भागमात्रं तेजः । तैजसे त्वर्धं तेजः । इतरार्धे भागत्रयमापः । भागमात्रं पृथिवीति विभागः । अत्र श्रुत्यविरोधेन शरीरस्य पाञ्चभौतिकत्वसिद्धेः युक्तो जगत्कारणे समन्वय इति माध्वाः । इदं च तथान्यदिति

त्वदीयाधिकरणविरुद्धम् । शिवविरिञ्चयोश्च प्रागुक्तरीत्या जगत्कारणत्वं दुर्वारं, अतर्क्ये हि कुतस्तर्कः इति वदतो विरोधोद्धारार्थं यत्नश्चाकिञ्चित्कर इत्यादिखण्डनमूह्यम् ।

भट्टोजिभट्टरचिते ग्रन्थेऽस्मिन् तत्त्वकौस्तुभे ।
द्वितीयाध्यायमध्वोक्तभाष्यभागस्समापितः ॥

इति श्रीमद्विद्वन्मकुटमाणिक्य - श्रीलक्ष्मीधरभट्टसूनु - भट्टोजिभट्टविरचिते
तत्त्वकौस्तुभे द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य
चतुर्थः पादः ॥

---

॥ श्रीरस्तु ॥

श्रीगणाधिपतये नमः ॥

# ॥ अथ तृतीयाध्याये प्रथमः पादः ॥

भगवत्प्रसादस्तावन्मोक्षसाधनम् । स च तदपरोक्षज्ञानजन्यः । न च तदुभयं विधातुं शक्यम् । पुरुषकृत्यसाध्यत्वात् । अतो ज्ञानसाधनं विधेयम । तच्च श्रवणमनननिदिध्यासनरूपा जिज्ञासैव । जिज्ञासायां च भगवद्भक्तस्यैवाधिकारात् । भक्तिश्च माहात्म्यज्ञानेन संभवत्यपि वैराग्येन दृढीभवति । अतः साधनेषु वैराग्यमेवादावपेक्षितम् । तदपि पुरुषप्रयत्नस्य न साक्षाद्विषयः । अतस्तद्विषये गत्यागतेः स्वर्गनरकगर्भवासादिस्वरूपमिह निरूप्यते । तथा च साधनविचारात्मकोऽयमध्यायः । तत्रापि वैराग्यार्थं गत्यादिनिरूपणात्मकः प्रथमः पाद इति माध्वाः । तन्न ॥ मध्वमते भगवद्गुणानां स्वरूपात्मकतया प्रसादस्यानाद्यनन्तत्वेन ज्ञानजन्यत्वायोगात् । "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति"रिति वदता तस्य साध्यत्वस्य दुरुपपादत्वाच्च । अन्यथारूपहानिः साध्येति चेन्न । प्रमादात्मकत्वाद्बन्धस्येति सिद्धान्ततया अन्यथारूपस्यैव दुरुपपादत्वात् । कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे स्फुटीकृतं चेदम् । किं च ज्ञानमेव मोक्षाजनकं न त्वन्यत् । नान्यः पन्था इत्यादिश्रुतेरिति दिक् ।

आद्यसूत्रे मोक्षसाधनं भगवत्प्रासादादि वैराग्यान्तं सूचितम् । तन्मुमुक्षूपादेयम् नवेति संशये नेति प्राप्तम् । भूतसम्बन्धो हि बन्धः । भूतसम्बन्धस्तु संसारो मुक्तिस्तेभ्यो विवेचनमिति श्रीवाराहोक्तेः । तच्च विमोचनं मरणे भवत्येव । "भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् । भूतानां संप्रयोगश्च जनिरित्येव पण्डितै"रिति भारतोक्तेः । अतो वैराग्यादि व्यर्थमिति प्राप्ते सिद्धान्तमाह—

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १**

अपेक्षितमेव मोक्षार्थं साधनम् । आत्मा वा अरे द्रष्टव्य इत्यादौ तद्विधानात् । यत्तूक्तं भूतविमोचनमेव मोक्ष इति तत्तथैव । किं तु मरणे भूतवियोग एवासिद्धः । शरीरान्तरप्रतिपत्तौ भूतसंपरिष्वक्तस्यैव गमनात् । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नात् । तथा श्वेतकेतोः परिहारसामर्थ्ये सति तत्पित्रा पृष्टस्य प्रवाहणस्य "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति प्रतिवचनाच्च । भूतानां विनिवृत्तिरिति भारतवचनं तु भागतो निवृत्तिपरम् "मृतिकाले जहात्येनं प्राणा भूतानि पञ्च वा । भागतो भागतस्त्वेनं अनुगच्छन्ति सर्वश" इति अग्न्यादिगतिश्रुतेरित्यधिकरणे माध्वोदाहृतब्रह्माण्डवचनात् । अतो मरणमात्रेण मोक्षायोगात् उपादेयमेव साधनमिति माध्वाधिकरणशरीरम् । अत्र त्वदभिमतस्य मोक्षस्य वैराग्यादेः तत्साधनतायाश्च दुरुपपादत्वमित्यादिसामान्यखण्डनं योज्यम् ।

किं सर्वभूतानि जीवं परिष्वज्य गच्छन्ति उत आप एवेति संशये आपः पुरुषवचसो भवन्तीति वचनादाप एवेति प्राप्तम् । तथा चैकभूतेन शरीरानारम्भात् मरण एव मोक्षसिद्धेः व्यर्थं वैराग्यादिरिति प्राप्ते सिद्धान्तमाह—

**त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २**

त्रिवृत्करणप्रक्रियया अपां त्र्यात्मकत्वाद्भूतान्तराणामपि गमनं लभ्यते । जलाधिक्यात्तु तद्व्यवहार इति माध्वः । खण्डनं प्राग्वत् ॥

भूतानि जीवेन सहगच्छन्ति नवेति संशये नेति प्राप्तम् । उक्तप्रश्नव्याख्यानयोर्जीवेन सह गमनस्यानुक्तत्वादिति प्राप्ते सिद्धान्तमाह—

**प्राणगतेश्च ॥ ३**

भूतानि जीवेन सह गच्छन्त्येव । तत्सहगन्तृप्राणाविनाभूतत्वात् राजसहगन्त्रमात्याविनाभूतभृत्यवत् । न च प्राणानां सहगतिरसिद्धा । प्राणैर्वाव न वियुज्यत इति श्रुतेः । न च भूतेन्द्रिययोरविनाभावोऽसिद्ध इति वाच्यम् । "यत्र वा भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि च करणानि नैतानि कदाचिद्वियुज्यन्त" इति भाल्लवेयश्रुतेः । खण्डनं प्राग्वत् ।

प्राणः जीवेन सह गच्छति न वेति संशये पूर्वपक्षसिद्धान्तावाह—

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४**

प्राणा जीवेन सह गच्छन्ति यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण इत्यादिश्रुतेरिति चेन्न; भागतोऽग्न्यादिप्राप्तेः । "पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु । अधिदैवं

प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् । पुनः शरीरसंप्राप्तौ तमेवानुविशन्ति चे"ति ब्राह्मे । अतः सिद्धायां प्राणगतौ भूतानामपि तत्सिद्धेर्न मरणमेव मोक्षः । अतः अनुष्ठेयं साधनमिति । खण्डनं प्राग्वत् ।

पुनस्तत्रैव प्रकारान्तरेण पूर्वपक्षसिद्धान्तावाह—

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५**

भूतानि जीवेन सह गच्छन्ति तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति इति द्युरूपे प्रथमाग्नौ श्रद्धाया एव होम्यत्वश्रवणात् । भूतानि जुह्वतीत्यश्रवणादिति चेन्न । एत एव हि प्रकृता आपः श्रद्धाशब्देन गृह्यन्ते । श्रद्धाशब्दो ह्यजहल्लक्षणया श्रद्धया अद्भिश्च युक्तं जीवमाह-तत्कुतः? "इति तु पञ्चम्यामाहुतावापः पुरुषवचस" इत्युपसंहारानुरोधेन उपक्रमार्थकल्पनोपपत्तेरिति माध्वाः । खण्डनं प्राग्वत् ॥ ५ ॥

**अश्रुतत्वादिति चेन्नष्टादिकारिणां प्रतीतेः ॥ ६**

न भूतानां जीवेन सह गमनम् तथा श्रुत्यभावादिति चेन्न । अथैनं यजमानं किं जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरतीति काठरव्यश्रुतौ प्रतीतेरिति माध्वः । खण्डनं प्राग्वत् ॥ ८ ॥

मुमुक्षोर्वैराग्यादिकमावश्यकं नवेति संशये नेति प्राप्तम् । कर्मणैव मोक्षसम्भवात् । श्रूयते हि अपाम सोमममृता अभूम इत्यादि । सिद्धान्तमाह —

**भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ७**

तदमृतत्वम् आत्मविद एव हि मुख्यं तत् । तमेवेत्यादिश्रुतेः । अयं भावः । अपामेत्यादिश्रुतेस्त्रयोऽर्थाः । काम्यसोमयागात् अमृतत्वं नाम स्वर्गसुखमात्रमित्येकः । अकाम्यादपि जिज्ञासुभिरनुष्ठितात् अन्तःकरणशुद्धिवैराग्यादिद्वारा परम्परया मोक्षः अगन्मज्योतिरिरिति वाक्यशेषादिति द्वितीयः । ज्ञानिभिरनुष्ठितादकाम्यात्तु आत्मज्ञानलब्धे मोक्षे अतिशयो भवतीति तृतीयः । सर्वथापि वैराग्यादिकं विना मोक्षासिद्धेः न तत्प्रतिपादकमोक्षासिद्धिरिति मध्वः । खण्डनं प्राग्वत् । प्राग्वदेव संशये वैराग्यमनावश्यकमिति प्राप्तम् । कर्मनिबन्धनो हि बन्धः कर्मणश्च भोगेन क्षये मोक्षस्यायत्नसिद्धत्वात् । न च भोगकाले कर्मान्तरार्जनं स्वर्गादौ कर्माधिकाराभावात् । सिद्धान्तमाह—

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ८**

कृतस्य कर्मणो भोगेन क्षये सति कर्मशेषसहित एव इमं लोकमायाति दृष्टस्मृतिभ्यां, ततः शेषेणामुं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छतीति श्रुतेः । भुक्तशेषानु-

शयवान् इमां प्राप्य भुवं पुनः । कर्म कृत्वा भुवं गच्छेत्पुनरायान्ति नित्यश इति स्मृतेश्चेत्यर्थः । अतो वैराग्यादिकमावश्यकमिति माध्वाः । खण्डनं प्राग्वत् ॥

प्रकृतमागमनं विषयः । तत्किं गतिप्रकारेणैव अन्यथा वेति संशयः । गमनप्रकारेणैवागमनं यथेतमागच्छतीति श्रुतेः । अतः स्वर्गफलस्यातिक्लेशानुषङ्गाभावात् न तत्र वैराग्यादिकमापादयति इति प्राप्ते सिद्धान्तमाह—

**यथेतमनेवञ्च ॥**

गमनप्रकारात्प्रकारान्तरमागमनेऽस्ति धूमादभ्रमभ्रादाकाशमाकाशात् चन्द्रलोकं यथेतमाकाशमाकाशात् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति इति काषयणश्रुतेः । यथेतमिति श्रुतिस्तु अंशविशेषविषया । तस्मादागमनादावतिक्लेशसत्वेन स्वर्गफले विरक्तिर्युक्तेति माध्वाः । खण्डनं तूक्तमेव ॥

प्रकृतं गतागतं विषयः । यज्ञादि कर्मफलं नवेति संशये नेति प्राप्तम् । तद्य इह रमणीयचरणा इति श्रुतौ चरणफलत्वोक्तेः । न च यज्ञादिकमेव चरणशब्दस्यार्थ इति वाच्यम । स यथाकारी यथा चारी तथा भवतीति श्रुतेः । आचार इति स प्रोक्तः कर्माङ्गत्वेन सिद्धिदः । अशुद्धिरस्त्वनाचारः चरणं तूभयं मतमिति स्मृतेश्च । तमिमं पूर्वपक्षमुपन्यस्य सिद्धान्तमाह—

**चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९**

अजहल्लक्षणया यज्ञादेरप्युपलक्षणार्था चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते । अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसंभवन्ति इत्यादि समाख्यावशादिति भावः ।

उक्तमाक्षिप्य समादत्ते—

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १०**

तर्हि रमणीयाः कपूया इत्येव वक्तव्ये चरणशब्दस्यानर्थक्यं स्यादिति चेन्न रमणीयत्वकपूयत्वयोः चरणसापेक्षतया तथोपन्यासात् । स्वमतमाह—

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ११**

धर्मंचरत नाधर्ममित्यादिप्रयोगात्सुकृतदुष्कृते एव चरणशब्दार्थ इति बादरिर्मन्यते । तुशब्दात्स्वसिद्धान्तोऽयमिति सूचितम् । तुशब्दस्तु विशेषेऽप्यात् स्वसिद्धान्तेऽवधारण इति नाममहोदधौ । अतो गतागतस्य कर्मफलत्वात् क्लेशसाधने कर्मणि तत्फले च विरक्तेन भाव्यमिति माध्वाः । खण्डनं प्राग्वत् ॥ एतदधिकरणोक्तरीत्या चरणं पवित्रं विततं पुराणमित्यादावपि चरणशब्दस्य सुकृतादिपरत्वे न्याय्ये सति चक्रधारणपरतया तद्व्याख्यानं कुर्वन्तो माध्वाः परास्ताः ।

प्रत्युत चक्रधारणं निषिद्धमेव गोघ्नादिति श्रुतौ पातकं च चरणेभ्य इत्युक्तेः। नहि तत्रापि प्रकृताधिकरणन्यायः। सुकृतदुष्कृते एवेति तु बादरिरिति सूत्रोक्तस्य सुकृतदुष्कृतरूपमुख्यसिद्धान्तार्थस्य तत्रासङ्गतेः। गोहननादिप्रायपाठेन निषेध्यविशेषपरतौचित्याच्चेति प्रथमपरिच्छेदे प्रपञ्चितम् ॥ १० ॥

प्रकृतं गत्यादिकं किमिष्टादिकारिणामेव उत सर्वेषामज्ञानिनामिति संशये इष्टादिकारिणामेवेति प्राप्तम्। ते हि प्रत्यवायाद्बिभ्यति बिभ्यच्च पततीति दृश्यते लोके। तथा च कर्मण्यप्युदासीनानां ज्ञानं विनापि कृतकृत्यतेति प्राप्ते सिद्धान्तमाह—

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२

तद्य इह शुभकृतो येचाशुभकृतः ते शुभमनुभूयाऽऽवर्तन्ते। पुनः कुर्वन्ति पुनर्गच्छन्तीति भाल्लवेयश्रुतेः। अनिष्टादिकारिणामपि गतागतमस्ति। इह तदधीनकारिणः तद्विरुद्धकारिणश्च इति द्वयेऽपि अनिष्टादिकारिशब्देनोपात्ताः। न केवलं तेषां गतागतमात्रं, किं तु दुःखान्तरमपीत्याह—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ च तद्गतिदर्शनात् ॥ १३

यमशासनानुभवानन्तरं केषांचिदनिष्टादिकारिणां ततो व्युत्थानम्। केषांचित्तु ततोऽपि नीचस्थले नित्यनरके पातो भवति सर्वे वा एते अशुभकृतः संयमने प्रपतन्ति। तत्र ह ये परद्विषः गुरुद्विषः श्रुतिद्विषः तदवमन्तारः शठा मूर्खाः इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैव तत उत्तिष्ठन्ते हि कर्हिचित्। वज्रं वा एतदित्याहुः। अथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति इति काठरव्यश्रुतेरित्यर्थः। नैव ते उत्तिष्ठन्ति इत्यस्योपपादनं वज्रं वा इति स्वस्थितान् वारयन्ति गन्तुं न मुञ्चन्ति इत्यर्थः।

## स्मरन्ति च ॥ १४

गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः। तत्र भुक्त्वा यतन्त्येव ये द्विषन्ति जनार्दनम्। महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ॥ इतरेषां तु पापानां उत्थानं विद्यतेऽपि च। सुखस्यानन्तरं दुःखं दुखस्यानन्तरं सुखम्। इति सर्वत्र नियमः। पञ्चकृष्टेति रौरवादिभ्यः पञ्चभ्योऽपकृष्टे नित्यनरके तु दुःखमेव सदेत्यर्थः। सूत्रे बहुवचनेन तानहं द्विषतः क्रूरानित्यादि संगृह्यते। यत्तूक्तं बिभ्यदेव पततीति तन्न। अबिभ्यतापि भुक्तस्य विषादेर्मारकत्वात्। अतोऽनिष्टादिकारिणामपि महानर्थविरक्तिरावश्यकीति सिद्धमिति माध्वाधिकरणम्। खण्डनं प्राग्वत्। किं च प्रागभाववादिनः तव यावत्प्रागभावसत्वं दुःखादिकार्यं दुर्वारम् प्रागभावस्य प्रतियोगि (जनन) नैयत्यात्। तथा च किं विरक्त्यादिना प्रागभावानां क्षये वा तद्विरहादेव दुःखं न भविष्यति इति सुतरां साधनवैयर्थ्यमिति दिक् ॥ ११ ॥

नरकं नित्यफलकं नवेति संशये नेति प्राप्तम्। यावदिन्द्राश्चतुर्दशेत्यादौ नरकभोगस्य सावधिकत्वोक्तेः खकारनरकं शून्यमित्यादिस्मृतेश्च। एवं च संयमने त्वित्यादिसूत्रोक्तमयुक्तमित्येवं प्राप्ते सिद्धान्तमाह—

**अपि च सप्त॥ १५**

अपिपदेन स्मरन्तीत्यनुकृष्यते। स्मरन्ति खलु सप्त नरकान् रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु। तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ संप्रकीर्तितौ। इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम्॥ एतानि क्रमशो गर्ते नारोहोऽथावरोहणमिति भागवते। तथा च नरकानित्यत्ववचनानां रौरवमहारौरवादिविषयकत्वान्नैवेत उत्तिष्ठन्तीत्यादीनां तु तामिस्रान्धतामिस्रविषयत्वाद्युक्तमेवोक्तं संयमने त्वनुभूयेत्यादि। एवं च भगवद्द्वेषादिफलस्य नरकस्य नित्यत्वादितरपापापेक्षया सुतरां ततो विरज्येतेति सिद्धमिति माध्वाधिकरणम्। खण्डनं तूक्तम्। किं च नरकस्य नित्यत्वमप्रामाणिकम्। द्वौ नित्यावित्यौपचारिकम्। बहुकालानुवृत्तिमात्रतात्पर्यकत्वात्। अमरा इत्यादिवत्। अन्यथा चातुर्मास्यफलस्याक्षय्यत्वापत्तौ ततो विरक्त्यनुपपत्तेः। अद्वैतश्रुतयः प्रपञ्चमिथ्यात्वबोधकप्रमाणानि च पूर्वोक्तानि बहुतराण्यत्रानुसन्धेयानीति दिक्॥ १२॥

नरकं सदुःखं नवेति संशये नेति प्राप्तम्। तथा हि-यदि नरकं सदुःखं स्यात् तर्हि तत्रस्थानां प्रेरकस्सन्नीश्वरोऽपि तत्रास्ते नवा। आद्ये तस्यापि नरकं दुःखं प्रसज्येत। अन्त्ये त्वन्तर्यामित्वं भज्येत। एवं प्राप्ते सिद्धान्तमाह—

**तत्रापि च तद्व्यापारादविरोधः॥ १६**

अन्तर्यामित्वं न विरुध्यते। नरकेऽपि तद्व्यापाराभ्युपगमात् स स्वर्गे भूमौ नरके सोऽन्धतमसि प्रकृतिकृदेक एवानुविष्टो नासौ दुःखभुक् ईश्वरः प्रभुत्वात्सर्वं पश्यति कारयति नासौ दुःखभुग्य एवं वेदेति **पौत्रायणश्रुतेः**। नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते। नीचोच्चतैव दुःखादेः भाग इत्यभिधीयते। नातो नीचोच्चतां याति पश्यत्येव प्रभुत्वत इति भगवद्वचनाच्च। तथा च नरकस्य दुःखतया तत्साधनेभ्यो विरज्यतेति सिद्धमिति माध्वाधिकरणम्। खण्डनं तूक्तम्। किं च मध्वमते नरके वसतः तदभिमतेश्वरस्य जीवापेक्षयाधिकमेव दुःखं दुर्वारम्। तथाहि—जीवोऽणुः क्वचित् नरकेस्ति अयं तु सर्वान्तर्यामित्वात्सर्वेषु वर्तत इति सर्वदुःखभाक्त्वम्। किञ्च दुःखं सर्वं मनसः दुःखपरिणामित्वात् मनस एव नतु जीवस्येति कथं नीचोच्चता जीवस्य। दुःखस्वामित्वं नीचत्वमिति चेत् तर्हि कतिपयदुःखस्वाम्यपेक्षया सकलदुःखस्वामिनोऽन्तर्यामिणः कथं नीचतः उत्कर्षः। अद्वैतमते तु सधर्मकान्तःकरणतादात्म्याध्यासवशात् विषमसत्ताकं दुःखं जीवेस्ति, न त्वीश्वरे औपाधिकश्यामत्वादिवत् व्यवस्थोपगमादित्यन्यत्र विस्तरः॥ १३॥

पितृयाणदेवयानपन्थानौ विषयः । जीवैः स्वातन्त्र्येण गम्यौ नवेति संशयः । प्रथमकोटिः प्राप्ता तेर्चिषमभिसम्भवन्ति । ते धूममभिसंभवन्ति इत्युक्त्वा अथैतयोः पथोर्नैकतरेण चन तानीमानि क्षुद्रमिश्राणि असकृदावर्तीनि भूतानि जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं इत्युक्त्या स्वातन्त्र्यप्रतीतेः । न हि पुरुषप्रयत्नाविषये गच्छन्ति न गच्छन्तीति च व्यवहारो युज्यते । तथा च फल एव स्वातन्त्र्यात् किं वैराग्यादिसाधनेन इति । एवं प्राप्ते सिद्धान्तमाह—

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७**

विद्याकर्मापेक्षया एतद्वचनं तयोरपि प्रकृतत्वात् । विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तम इति **भागवतस्मृतिसमाख्यानाच्च** । न च साधने स्वातन्त्र्याभ्युपगमे फलेपि तत्स्यादिति वाच्यम् । साधने विधिसत्वेपि फलेतदभावेन च वैषम्यात् । विधिशास्त्रावैयर्थ्याय हि तत्रेश्वरदत्तं कियदपि स्वातन्त्र्यं स्वीक्रियत इत्युक्तं प्राक् ॥ अतः फले स्वान्त्र्याभावादपेक्षितं वैराग्यदिसाधनमिति माध्वाः । खण्डनं प्राग्वत् ॥ ४ ॥

अन्धं तमः सुखयुक्तं नवेति संशये सुखयुक्तमिति प्राप्तम् । यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते । अपि नीचगतौ किंचित्किमु मानुषदेहिन इत्यागमेन दुःखस्य सुखव्याप्तत्व-प्रतीतेः । सिद्धान्तमाह—

**न तृतीये तथोपलब्धेः ॥ १८**

अधोगतिषु तृतीये तमसि न सुखमस्ति । अथाविद्वानकर्मा अवाग् त्रिधा हि वाव गच्छति । गच्छति तिर्यग्यातना तम इति । द्वे वाव सुखानुवृत्ते न तमः सुखानुवृतं; केवलं ह्येवात्र दुःखं भवतीति श्रुतौ तथोपलब्धेरित्यर्थः ।

**स्मर्यतेऽपि च लोके ॥ १९**

तिर्यक्षु नरके चैव सुखलेशो विधीयते । नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चनेति भविष्यत्पर्वणि स्मर्यते । अपि च लोकसिद्धमेतत् । अतिप्रिये यथा राजा न दुःखं सहते क्वचित । अल्पप्रिये दुःखमपि तथैव परमेश्वर इति । हिरण्यगर्भप्रत्यक्षमपि तमसि स्थितानां सुखदुःखलेशराहित्ये मानमित्याह—

**दर्शनाच्च ॥ २०**

नारायणप्रसादेन समिद्धज्ञानचक्षुषा । अत्यन्तदुःखसंलीनान्विशदज्ञानवर्जितान् ॥ नित्यमेव तथाभूतान् विमिश्रांश्च गणान् बहून् ॥ निरस्ताशेषदुःखाश्च नित्यानन्दैकभागिनः । अपश्यत्त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुख इति पाद्मे दर्शनोक्तेरित्यर्थः । अर्थापत्तिमप्याह—

**तृतीयशब्दावरोधः संशोकजस्य ॥ २१**

तृतीये तमसि यःशब्दः तेनावरोधः प्राप्तिर्भवति कस्य संशोकस्य मोहस्य तच्छ्रवणेन शोकः, शोकान्मूर्छेत्यर्थः । नन्वत्रापि किं मानमित्याह—

**स्मरणाच्च ॥**

"महातमस्त्रिधा प्रोक्तं ऊर्ध्वं मध्यं तथाधरम् । श्रवणेनैव मूर्छादिरधरस्य यतो भवेत् । तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तमे"ति कौर्मे । अतोऽन्धतमसि सुखलेशाभावाद्भवितव्यम् तत्र तत्साधके च विरक्तेनेति माध्वाः । खण्डनं प्राग्वत् ॥ १५ ॥

कर्मिणां स्वर्गादवतरणकाले धूमो भूत्वाभ्रं भवतीति श्रूयते । तत्र तेषां किं धूमादिदैवतैक्यं उत तत्पदप्राप्तिः किं वा प्रकारान्तरमिति संशये ऐक्यं तत्पदप्राप्तिर्वेति प्राप्तम् । कुतः? सामानाधिकरण्यश्रुतेः । उभयथापि सकृदनुष्ठितयज्ञादेराकल्पं परमसुखसम्भवात् व्यर्थं कर्मणि तत्फले च वैराग्यम् । सिद्धान्तमाह—

**तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२**

धूमादिषु प्रविश्य तद्गतौ भ्रमितिः स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः । नह्यन्यस्य कर्मिणो देवतया ऐक्यं संभवति । नापि तत्पदप्राप्तिर्युक्ता । तस्य नियताधिकारिविद्ययैव गम्यत्वात् । युगपदनेकधर्मिसमवाये अनेकेषामेकपदप्राप्त्ययोगात् । उक्तं च गारुडे "धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु । स्थितिः स्थितौ प्रवेशश्च लघुत्वादिस्तथैव च । नह्यन्यस्यान्यथाभावे न च तत्पदमिष्यते । विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणाम् । ऐकदेश्यात्स्वभावेन वागभेदोऽपि युज्यते । यथा जीवः परं ब्रह्म तथेदं जगदित्यपि" ॥ इति अतो युक्तमेव वैराग्यादिकमिति माध्वाः । खण्डनं प्राग्वत् ।

स्वर्गान्निर्गताः कर्मिणः किं चिरेण गर्भवासं प्राप्नुवन्ति उताचिरेणेति संशये चिरेणेति प्राप्तम् । यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति । धूमो भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति । इत्यादौ बहुस्थानप्राप्तिश्रवणात् । तस्यां च विलम्बौचित्यात् । सिद्धान्तमाह—

**नातिचिरेण विशेषात् ॥ २३**

नातिचिरेणेति सिद्धान्तः । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते इति विशेष श्रुतेः । रमणीयां ब्राह्मणादियोनिमापद्यन्त इति यत्तदभ्याशः कालसामीप्येनेत्यर्थः । नारदीयेप्युक्तम् । "स्वर्लोकादवाक्प्राप्तो वसरात्पूर्वमेव तु । मातुः शरीरमाप्नोति पर्यटन्यत्र तत्र चेति । अतः कर्मिणोऽचिरेणैव गर्भवासादिदुःखप्राप्तिः इति युक्ता विरक्त्यादय इति भावः इति माध्वाः । खण्डनं प्राग्वत् ॥ १७ ॥

कर्मिणः किमागमनसमये दुःखवन्तो नेति संशये दुःखवन्त इति प्राप्तम्। तथा हि —तद्दिह व्रीहियवा इत्यादिना तेषां व्रीह्यादिभावः श्रूयते। तथा च छेदनादिजन्यं दुःखं दुर्वारम्। तच्च यज्ञादि कर्मणः फलमेव। आगमनादेस्तत्फलत्वोक्तेः। एवं च विहितस्यैव यज्ञादेः दुःखानुबन्धित्वेपि विहितत्वाविशेषाद्वैराग्यादेरपि तथात्वापत्तिरिति प्राप्ते सिद्धान्तमाह—

**अन्नाधिष्ठिते पूर्ववदभिलापात् ॥ २४**

अन्नाधिष्ठिते व्रीह्यादिशरीरे अस्य प्रवेशमात्रं न तु भोगः। धूमो भूत्वाभ्रं भवतीत्यादिपूर्ववत्। सोऽवाग्गतः स्थावरान् प्रविशत्यभोगिनैव व्रजन् इति **कौषारव**श्रुतौ स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः। अभुंजस्तु क्रमेणैव देहमाप्नोति कालत इति **वाराहे** चाभिलापात्। उक्तमाक्षिप्य समाधत्ते—

**अशुभमिति चेन्न शब्दात् ॥ २५**

हिंसोपेतत्वात् यज्ञादिकं पापजनकत्वात् दुःखावहमिति चेन्न। वैधत्वेन तदयोगात्। हिंसा त्ववैदिकी या तु तयाऽनर्थो ध्रुवं भवेत्। वेदोक्तया हिंसया तु नैवानर्थः कथं चनेति **वाराहे**। अतो विहितस्य दुःखजनकत्वाभावाद्युक्तं वैराग्यानुष्ठानं मुमुक्षूणामिति माध्वाः। खण्डनं प्राग्वत्॥ कर्मी पितरं प्रविशति नवेति संशये नेति प्राप्तम्। स्वर्गादर्वाग्गतस्यापि मातुरेवोदरं व्रजेदिति वचनात्। सिद्धान्तमाह —

**रेतः सिग्योगोऽथ ॥ २६**

ततो रेतः सिचमेवानुप्रविशति। अथ मातरमथ प्रसूयते सकर्म कुरुते इति **काठरव्य**श्रुतेः। पितरमेव प्रथमं प्रविशति। मातुरेवोदरं व्रजेदित्येवकारस्तु अयोगव्यवच्छेदार्थः। न त्वन्ययोगव्यवच्छेदायेति। अतः पितृप्राप्तेरपि सत्वादतीव विरज्येतेति माध्वाः। खण्डनं प्राग्वत् ॥ १९ ॥

जीवः किं मातृयोनिं प्रविशति नवेति संशये नेति प्राप्तम्। देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गत इत्यादिवचनैर्देहप्राप्तिमात्रप्रतीतेः। तस्याश्च योनिप्रवेशं विना संस्पर्शमात्रेणोपपत्तेः। सिद्धान्तमाह

**योनेः शरीरम् ॥ २७**

पितृशरीरान्मातृयोनिं अनु प्रविश्य तत एव शरीरं प्राप्नोति। दिवःस्थास्नुं गच्छति स्थास्नुभ्यः पितरम्। पितुर्मातरम् मातुः शरीरं शरीरेण जायत इति संमितं अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरेव पितुरेव वा गर्भे वा बहिर्वेति **पौत्रायण**श्रुतेः। स्थावराणि दिवं प्राप्य स्थावरेभ्यश्च पूरुषम्। पुरुषात् स्त्रियमापन्नस्ततो देहं यथाक्रमम्। देहेन जायते जन्तु-

रिति सामान्यतो जनिः। विशेषजननं चापि प्रोच्यमानं निबोध मे। स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा। गर्भो वा बहिरेवाथ क्वचित् स्थानान्तरेषु चेति ब्राह्माच्च संमित औत्सर्गिकमित्यर्थः। स्थास्नुभ्यः शुकादयः पितुर्मान्धातृप्रमुखादयः। मातुरास्तीकप्रभृतयः जरत्कारावनुग्रहात्। अन्तरे स्थानान्तरे, धृष्टद्युम्नादयः। पित्रादिनिरपेक्षाः गर्भे पूर्वसिद्धमेव शरीरं किञ्चिल्लभन्ते। बहिर्द्रुपदादयः पितृसापेक्षाः। उपबृंहणभूतस्य ब्राह्मस्याप्ययमर्थः। अतः पित्रादिप्रवेशस्य औत्सर्गिकत्वाद्दुःखबहुलतां निश्चित्य विरज्येतेति माध्वाः। खण्डनं प्राग्वत् ॥ २० ॥

इति श्रीतत्त्वकौस्तुभे तृतीयपरिच्छेदे तृतीयस्याध्यायस्य

प्रथमः पादः समाप्तः ॥

---

॥ श्रीरस्तु ॥

## अथ द्वितीयः पादः ॥

उपासनाङ्गभूतभक्तिदार्ढ्यार्थं वैराग्यं प्रथमपादे निरूपितम्। भक्तिश्च माहात्म्यविज्ञानपूर्वकःस्नेहः। न च माहात्म्यानुक्तौ तज्ज्ञानं तत्पूर्वकस्नेहो वा संभवति। अतोऽवश्यं भगवन्महिमा वक्तव्यः। स च यद्यपि प्रथमाध्याय एवोक्तः। तथापि तमेव विवेचयितुं समर्थयितुं च द्वितीयः पाद आरभ्यते। ननु माहात्म्यज्ञानं न स्नेहजनकम्। तद्विनापि पुत्रादौ स्नेहदर्शनादिति चेन्न, तृणारणिमणिन्यायेन तत्समाधानात्। यत्तु केषांचित् भगवद्गुणान् शृण्वतामपि भक्त्यनुदयात् अन्वयव्यभिचार इति, तन्न, मत्सरादिप्रतिबन्धेन कार्यानुदयेऽपि कारणस्य स्वरूपयोग्यतानपायात्। नहि प्रतिबन्धकमण्यादिसमवधाने तृणादिकमदहतोऽपि अग्नेर्दाहशक्तिर्विरुध्यते इति माध्वाः।

अत्रेदं वक्तव्यम्। भगवन्महिमा तत्स्वरूपात्मकः स्नेहश्च जीवस्वरूपात्मकः महिमज्ञानमप्येवं, तथा च जीवब्रह्मणोः स्वरूपस्य अनादितया कुतः कार्यकारणभावः। खण्डनान्तरं च प्राग्वत् ॥ १ ॥

स्वप्नो भगवदधीनो नवेति संशये नेति प्राप्तम्। स्वप्नविषयःशुक्तिकारजतादिवदसन् सत्त्वे पूर्वोत्तरकालयोरप्युपलम्भापत्तेः। असतश्च कथं भगवदधीनतेति। एवं प्राप्ते सिद्धान्तमाह—

**सन्ध्ये सृष्टिराह हि ॥ १**

जाग्रत्सुषुप्त्योः सन्धौ भवतीति सन्ध्यम्। सन्ध्ये स्वप्ने रथादीनां सृष्टिरङ्गीक्रियते आह हि श्रुतिः-न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इति।

कर्तारं विना कथं सृष्टिरित्यत आह—

निर्मातारं चैके पुत्रादयश्च ॥ २

एके शाखिनो निर्मातारं कर्तारमीश्वरमाहुः । य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण इति श्रुतेः । पुत्रादयश्च स्वाप्ना हरेरेव जायन्त इति एके वाजिन आहुः । एतस्मादेव पुत्रो जायते एतस्माद्भ्रातैतस्माद्भार्या यदेनं पुरुषमेव स्वप्नेनाभिहन्ति इति गौपवनश्रुतिरिति सूत्रार्थः । उपादानाद्यभावे कथं सृष्टिरत अह—

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३

माया मात्रं मनोगतान् पूर्वानुभूतवस्तुसंस्कारानुपादानीकृत्य निमित्तभूतया स्वेच्छयैवेश्वरेण निर्मितमित्यर्थः । सूत्रार्थे ब्रह्माण्डवचनमप्यस्ति—मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते । यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत् । इति । न च स्वत एव करितुरगादीनपश्यमिति प्रतीतेः का गतिरित्याशंक्योक्तम् यदित्यादि । स्वाप्नपदार्थानां जाग्रत्पदार्थत्वमेव बाध्यते । तेन च जाग्रत्त्वबुद्धिरेव भ्रमः तत्कृता ईश्वरकृतेति वा । स्वप्नरथादीनां बाह्यार्थजन्यत्वाभावे शुक्तिरजतादिवदसत्त्वं स्यादित्याशंक्याह—

सूचकश्च हि श्रुतेराचक्षते च तद्विदः । ४

स्वाप्नरथादिः सन्नेव शुभाशुभसूचकत्वात् । नचासिद्धिः । यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने" इति श्रुतेः । आचक्षते च तद्विदो व्यासादयः । यद्वापि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा । स्वप्नेस्थमथवा राजा तत्तथैव भविष्यतीति । ननु चन्द्रमा इवादित्यो दृश्यत इति भ्रान्तिविषयस्यापि सूचकत्वं श्रूयत इति चेन्न । अन्यथाज्ञातस्य अधिष्ठानस्यैव सूचकत्वाभिधानात् नचैवमत्रोक्तिरस्ति । नचात्राधिष्ठानमस्ति । आत्मनः पृथक्प्रतीतेः । अतः स्वप्नस्य भगवदधीनत्वे सिद्धे महामाहात्म्यं तस्येति युक्ता तत्र भक्तिरिति माध्वाधिकरणशरीरम् ।

इह स्वप्ने सृष्टिः परमार्था इति तावन्माध्वेन स्वीकृतम् । न केवलं स्वप्ने किन्त्वन्यत्रापि । तथा हि—स्वप्नध्यानमनोराज्येषु अनुभूयमानाः सरित्समुद्रगिरिनगरगजतुरगादयो न बहिः सन्तः नापि भ्रान्तिविषयाः किं तु स्वप्नादिद्रष्टुः पुरुषान्तः करणगतवासनोपादानकाः । तत्र स्वप्ने विषयाः ईश्वरेच्छायत्ताः ध्यानमनोरथास्तु पुरुषप्रयत्ननिर्वर्त्या इति माध्वसिद्धान्तरहस्यम् । तदुक्तं न्यायसुधायाम् इहैवाधिकरणे यथा मनोरथे ध्याने च संस्कारयोनीनर्थान् मनसानुभवत्येवं स्वप्नेपि । इयांस्तु विशेषः मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः । स्वप्ने

पुनरीश्वरेच्छाधीनैवेति । सुधायामेव प्रथमसूत्रेऽप्युक्तम् । श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसावलोकनं ध्यानं अतीन्द्रियोपादानकस्यापि द्रव्यस्यैन्द्रियकत्वं त्र्यणुकादेरिवोपपद्यते । नीरूपाद्वायो रूपवतस्तेजसो जन्म वेदान्तिनां प्रसिद्धमेवेति । एवं स्थिते शुक्तिरजतादेरळीकतां वदतो माध्वस्य अर्धजरतीयं स्पष्टमेव । कालत्रयेऽपि नेदं रजतं मिथ्यैव रजतमभात् इत्यादिप्रतीतीनां असदेव गजतुरगादिकं स्वप्ने अभादित्यादिप्रतीतितौल्यात् । तथा च त्वदुक्तस्वप्नादिवच्छुक्तिरजतस्यापि पारमार्थिकतां स्वीकृत्य सत्ख्यातिवादिनो दिगम्बरस्य मतप्रवेशः । रजतवदेव स्वाप्नस्याप्यलीकतामुररीकृत्य असत्ख्यातिवादिनो बौद्धस्य वा शिष्यो भव । वेदभ्रष्टतया पाञ्चरात्राद्यागमप्रविष्टस्य तव दिगम्बरबौद्धाद्यनुसारणौचित्यात् । वेदप्रामाण्यवादिनां स्वाप्नरथादेः शुक्तिरजतादेश्च प्रातीतिकत्वं तुल्यमेव । इन्द्रजालमिव मायामयं स्वप्नमिव मिथ्यादर्शनमित्यादि**मैत्रायणीय**श्रुतेः । तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखं । त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभातीति **भागवताच्च** । रज्जौ सर्पः शुक्तिकायां च रूप्यं नैरः पूरः तन्मृदाख्ये मरीचौ । यद्वत्तद्वद्वितथ एष प्रपञ्चः तस्मान्नान्यं त्वां विनेश प्रपद्ये इति **स्कान्दे** सर्वप्रपञ्चमिथ्यात्वोक्तेश्च । किं च न तत्र रथा इति श्रुतावेव मिथ्यात्वं स्पष्टम । न तत्रेत्यादिना अभावमुक्त्वा तत्रैव सृष्ट्युक्त्या प्रतिपन्नोपाधवभावप्रतियोगित्वस्य लाभात् । वचनपुरुषयोर्व्यवस्थायैवेति अव्ययीभावाख्यनित्यसमासवारणं शब्दकौस्तुभे, नञोऽसमस्तस्य तत्र न नामपदार्थेनान्वयः किं तु क्रिययैवेति शब्दकौस्तुभोक्तनिष्कर्षपक्षेपि स्थित्यपरपर्यायभवनाभावेऽवगते मिथ्यात्वं लभ्यत एव । समनियताभावानामैक्याभ्युपगमेन तत्स्थित्यभावतदभावयोरैक्यात् । नह्यधिष्ठानाभेदाभावपक्षेप्यध्यस्तभेदेनाधिष्ठानं भिद्यते । यत्तु सूचकत्वात्पारमार्थिकतेति तत्तुच्छम् । चन्द्रमा इवेत्यादौ व्यभिचारस्य त्वयैवोदाहृतत्वात् । यत्तु अत्राधिष्ठानस्यैव सूचकतेति त्वयोक्तं तदिहापि तुल्यम् । आत्मन एवाधिष्ठानत्वात् । पृथक्प्रतीतिस्तु विच्छेदस्याप्यध्यस्तत्वात् उपपद्यते । किं च पूर्वसम्बन्धिनियमे हेतुत्वे तुल्य एव नौ । हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथेति खण्डनोक्तरीत्या पारमार्थिकत्वं जनकत्वेऽनुपयुक्तमेव । किमु तज्जनकतावच्छेदकस्वरूपे सूचकत्वे । प्रत्युत त्वद्रीत्या अळीकस्यापि जनकत्वं दुर्वारम् । न सन्ति यदुपेक्षया इत्यादौ त्वया तथैव वाच्यत्वात् । नहि जीवविषयिण्यपेक्षा भगवतोऽस्ति । तथात्वे तन्नाशापत्तेः । तुच्छस्यापि त्वया विषयतां भगवदधीनतां च वदता जनकताया अपि स्वीकार्यत्वादित्युक्तमेवेति दिक् । यच्च स्वप्ने जाग्रत्पदार्थत्वमेव बाध्यत इति तदपि तुच्छम् । रथादिवत् स्वप्नत्वाविशेषेण तस्यापि त्वन्मते बाधायोगात् । असदेव रथादिकं अभादित्यनुभवस्य व्याख्यानानर्हत्वाच्च । यदन्यथात्वं जाग्रत्त्वं इत्यादित्वदुदाहृतवचनं त्वन्यथात्वं जाग्रत्त्वं च बाध्यत इति सुयोज्यम् । उदाहृतप्रामाणिकश्रुत्याद्यनुरोधान्न्यायोपष्टम्भाच्चेति दिक् ॥ २ ॥

स्वप्नस्य तिरोभावो भगवदधीनो नवेति संशये नेति प्राप्तम् । बाह्याज्ञानाद्धि स्वप्नः । ज्ञानाच्चाज्ञाननिवृत्तौ स्वप्ननिवृत्तेरनायाससिद्धत्वात् । एवं प्राप्ते सिद्धान्तमाह—

## पराभिध्यानात्तु तिरोधानं ततो ह्यस्य बन्धविपर्ययौ ॥ ५

स्वप्नादेः तिरोधानं परस्य विष्णोरभिध्यानादेव । ज्ञानाज्ञानयोरपि स एव प्रेरकः । उक्तं च **कौर्मे**—"स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च । तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रकीर्तिता"विति । अतः स्वप्नतिरोभावस्यापि भगवदधीनत्वात्तस्य महामहिमवत्तया तत्र भक्तिर्युक्तेति माध्वाः । खण्डनं प्राग्वत् ॥

जाग्रदवस्था भगवदधीना नवेति संशये नेति प्राप्तम्, कालविशेषादेव तत्सम्भवात् । सिद्धान्तमाह—

## देहयोगाद्वासोऽपि ॥ ६

देहाभिमानेन वासः स्थितिः । जाग्रदवस्थेति यावत् । सापि पराभिध्यानादेव । न तु कालतः । कालो हि निमित्तमात्रम् । नतु स्वतन्त्रः । स एव जाग्रति स्थापयति । स स्वप्ने स प्रभुरित्यादि**कौरव्यश्रुतेः** । अतो युक्ता भक्तिरिति माध्वः । खण्डनं प्राग्वत् ॥ २ ॥

सुषुप्तिः परमात्मनि नाडीषु वेति संशये परमात्मन्येव न नाडीष्विति प्राप्तम् । परमात्मनोऽन्यत्रावस्थाने सुप्तस्य जाग्रत्स्वप्नयोरिव दुःखित्वप्रसङ्गात् । न चेष्टापत्तिः । सुखमात्रस्यानुभवसिद्धत्वात् । एवं प्राप्ते सिद्धान्तमाह—

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७

जाग्रत्स्वप्नाभावस्सुषुप्तिः । नाडीष्वात्मनि च नाडीस्थे परमात्मनि इति यावत् । तच्छ्रुतेः । "आसु तदा नाडीषु सुप्तो भवति" "सता सोम्य तदा सम्पन्नो भवति" इत्युभयविषयकश्रुतेरित्यर्थः । अतो नाडीस्थस्य सुप्तिप्राप्यत्वरूपमाहात्म्यात् युक्ता तत्र भक्तिरिति माध्वाः । खण्डनं प्राग्वत् ॥

सुषुप्तस्य प्रबोधो भगवदधीनो न वेति संशये नेति प्राप्तम् । भेरीशब्दादिनैव तत्सम्भवात् । सिद्धान्तमाह—

## अतः प्रबोधोऽस्मात् ॥ ८

सुप्तस्य प्रबोधोप्यस्माद्भवति । यतस्तस्मिन् सुषुप्तिरतो हेतोः । नहीश्वरेण स्वान्तर्निवेशितः तत्प्रेरणमन्तरेणोद्बोद्धुं शक्नोति इति भावः । शब्दादिकं तु निमित्तमात्रम् । एष एव सुप्तं प्रबोधयति । एतस्माज्जीव उत्तिष्ठतीत्यादि **कौण्डिन्यश्रुतेः** । खण्डनं प्राग्वत् ॥

प्रकृतावस्थाः सर्वेषां सर्वदा भगवदधीनाः किं वा केषांचिदेवेति सन्देहः । केषांचिदेवेति प्राप्तम् । राजादीनां खण्डैश्वर्यदर्शनात् । अतो न सर्वैश्वर्यं हरेरिति प्राप्तम् । सिद्धान्तमाह—

**स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९**

स परमात्मैव सर्वावस्थाप्रेरकः । एष ह्येव साधुकर्म कारयतीति सर्वकर्मणां भगवदधीनत्वश्रुतेः । स्वप्नादिप्राप्तेश्च तदन्तर्भावात् । प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोन्योनास्ति कश्चनेति तदनुसारिस्मृतेश्च । एष स्वप्नान् दर्शयति । एष प्रबोधयतीत्यादिश्रुतेश्च । आत्मानमेव लोकमुपासीतेति परमात्मन एवोपासनाविधानाच्च । अन्यस्यापि प्रेरकत्वे अवधारणानुपपत्तेः । अतः सर्वावस्थाप्रेरके हरौ भक्तिर्युक्तेति माध्वाः । खण्डनं प्राग्वत् ॥

जीवस्य मोहः किमीश्वरे तदन्यत्र वेति सन्देहे ईश्वर एव इति प्राप्तम् । अन्यथा जाग्रत्स्वप्नसङ्कीर्णतापत्तेः । सुषुप्तिसंकरस्त्विष्टः समानधर्मत्वादिति प्राप्ते सिद्धान्तमाह—

**मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १०**

मुग्धे मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य । मोहो हि परमात्मविदूरत्वसामीप्यप्रवेशार्धप्रवेशाः प्रसक्ताः तत्राद्यास्त्रयो न सम्भवन्ति जाग्रदाद्यवस्थाधर्मत्वात्, एवं च परिशेषादर्धप्रवेश एव सिध्यति । उक्तं च **वाराहे**—हृदयस्थात्पराजीवो दूरस्थो जाग्रदिष्यते । समीपस्थस्तथा स्वप्ने स्वपित्यस्मिन् लयं व्रजेत् । यत एवं त्रयोऽवस्थो मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रं प्रतिस्तुतेरिति । ननु मोहस्यावस्थात्रयान्तर्भाव एवास्त्वित्याशंक्योक्तम् । दुःखेति । न तावत्सुषुप्तावन्तर्भावः दुःखानुसन्धानात् । नापि जाग्रत्स्वप्नयोः दुःखाद्यात्मककालाव्यतिरिक्तविषयादर्शनादिति भावः । यद्वा परिशेषप्रकारान्तरप्रदर्शनायैतत् । न मोहेन समग्रप्राप्तिः । दुःखानुसन्धानात् । नाप्यप्राप्तिरेव अन्यार्थादर्शनात् । अतः परिशेषादर्धप्राप्तिरिति । सा चेश्वराधीनेति हरौ भक्तिर्युक्तेति माध्वाः । खण्डनं प्राग्वत् ।

परमात्मा विषयः प्रतिशरीरं जाग्रदादिस्थानेषु च स्थितः किमन्योन्यं भिन्नः उताभिन्न इति सन्देहे । भिन्न इति प्राप्तम् । भिन्नस्थानत्वात् घटवत् । न चाकाशादिवदुपपत्तिरिति वाच्यम् । किमीश्वरोऽवयवी, पाणिपादाद्यवयवैरनेकस्थान उत समग्ररूपो वा? नाद्यः, विश्वादीनां सप्ताङ्ग एकोनविंशतिमुख इत्यादिना प्रत्येकं रूपश्रवणात् । द्वितीये तु दृष्टान्तासङ्गतिः । अतोऽस्ति च विश्वादीनां भेदः । तथा च गुणादितारतम्यमनुग्राह्यानुग्राहकभावादि च दुर्वारमिति निरतिशयैश्वर्याभावान्न तत्र भक्तिर्युक्तेति प्राप्ते सिद्धान्तमाह—

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११**

स्थानापेक्षयापि परमात्मनो न भिन्नं रूपम् । सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षत इति श्रुतेः । लिङ्गशब्दः स्वरूपपरः । लिङ्गं स्वरूपमुद्दिष्टमित्यभिधानात् । नन्वेकस्य समग्ररूपेणानेकस्थानत्वं कथं हरेरन्यत्रादृष्टत्वात् इतिचेन्न । एकरूपः परो विष्णुः सर्वत्रापि न संशयः ।

ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधोच्यते" इति **मात्स्योक्तेः** । सूर्यदृष्टान्तश्च भागवते स्पष्टीकृतः । प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः इति । प्रतिदिशं प्रेरकत्वेनैश्वर्यवशान्नैकधास्थितमर्कं यथैकमेव समाधिं गच्छन्ति तथाभूतानां हृदयं सामग्र्येणैश्वर्यबलादनेकधा व्यवस्थितम् । तं हरिं एकं समधिगतोऽस्मीत्यर्थः ।

उक्तमाक्षिप्य समाधत्ते—

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२

न विश्वादीनामभेदो वाच्यः, "कार्यकारणबद्धौ तौ इष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिद्ध्यतः" इति भेदवचनात् । इह हि विश्वतैजसयोर्द्विविधबन्धवत्त्वेन तुरीयस्य बन्धराहित्येन विरुद्धधर्माध्यासात् जीवब्रह्मणोरिव भेदो लभ्यत इति चेन्न, भगवद्रूपाणां प्रत्येकं परस्परं मूलरूपेण च सहाभेदवचनात् । श्रूयते हि—'एष त आत्माऽन्तर्याम्यमृतः' 'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वं,' अयं वै हरयोयं वै दश च सहस्राणि च बहूनि चानन्तानि चेत्यादि । इह हि पृथिव्यन्तर्याम्येवान्तर्यामी 'यश्चायमस्यां पृथिव्यां पुरुषो यश्चायमध्यात्ममयमेव स इति । अयं मूलरूप्येव बहवो हरय इत्युक्त्वा च स्पष्ट एवाभेद उक्तः ।

## अपि चैवमेके ॥ १३

एके शाखिनः अभेदेनैवानन्दरूपतां स्पष्टमामनन्ति "अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमःशिवः । ओङ्कारो विदितो येन स मुनिर्नेतरो जन इति । अमात्रः भिन्नांशशून्यः । अनन्तमात्रः अभिन्नांशतांशः । द्वैतस्योपशमः मिथ्याज्ञानोपशमकर्ता ओमिति क्रियमाणो व्यवह्रियमाण ओङ्कारः अभिन्नेऽपि भेदव्यपदेशस्तु अचिन्त्यैश्वर्यादुक्तम् आनन्दमयाधिकरणे अनन्योऽप्यन्यशब्देनेत्यादि । **ब्रह्मतर्के च** बद्धो बन्धादिसाक्षित्वात् भिन्नो भिन्नेषु संस्थितेः । निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः इति । निर्दोषोऽपि बद्धः । अद्वयरूपोऽपि भिन्नः कथ्यत ईत्यर्थः । अतो गतेः स्वगतभेदशून्यस्य सर्वत्र पूर्णगुणत्वाद्युक्ता तत्र भक्तिरिति माध्वधिकरणशरीरम् । खण्डनं प्राग्वत् ।

किञ्चैवं विरुद्धधर्माणामभेदकत्वे जीवब्रह्मणोरभेदः सिद्धः । प्रथमाधिकरणस्य खण्डने प्रपञ्चितम् । उक्तं च मध्वमुखमर्दनेप्य**भियुक्तैः** । अपि च भगवानेकोऽनेकः अतनुस्तनुमानपि स्वयमेव नास्त्यैश्वर्यादिरोध इतीदृशं विषमगुणसाङ्कर्यं वद तवाभ्युपगच्छतः कथमितरवद्भेदस्सिद्ध्येत् विरुद्धगुणान्वयादिति । (श्लो) अग्रेवाच्योऽपि कस्ते कथय नय इह स्थापको भिन्नतायाः, जीवेशित्रोर्गुणानां स खलुविषमता किन्तु दत्तोत्तरैव । निर्भेदत्वं तवेष्टं विषमगुणजुषां शक्रपार्थादिकानां अन्यत्वस्योक्तिरन्योऽन्तर ईति बहुशः सम्मता भेदहीने इति । श्रुतेस्तु शब्दमूलत्वादित्यत्रोक्तमपीहाप्यप्यनुसन्धेयमिति दिक् ॥ ८ ॥

भक्तिविषयः विष्णौ युक्ता नवेति संशयः नेति प्राप्तम् । तथाहि—विष्णुः रूपवान्नवा ? नाद्यः चैत्रादिवदनित्यत्वापत्तेः । अरूपमव्ययमित्यादिश्रुतिव्याकोपाच्च । नान्त्यः रुक्मवर्णमादित्यवर्णं ज्योतिरित्यादिश्रुतिविरोधात् सौन्दर्याभावापत्तेश्च । तथा च तस्मिन् भक्त्ययोगात् व्यर्थोऽयं पादः । एवं प्राप्ते सिद्धान्तमाह—

## अरूपमेव हि तत्प्रधानत्वात् ॥ १४

युक्तैव परमात्मनि भक्तिः, अरूपमेव हि ब्रह्म नातोऽस्यानित्यता । अरूपत्वे हेतुमाह—प्रधानत्वादिति । उत्तमत्वात् प्रकृत्यादिप्रवर्तकतया प्राकृतरूपासंभवादिति भावः । नहि तदधीना प्रकृतिःतं बद्धुं शक्नोतीति ॥ हिशब्देन 'अरूपमव्ययं' इत्यादिश्रुतीः सूचयति । भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः । अरूपवानतः प्रोक्तः क्व तदव्यक्ततःपरे इति च मात्स्ये । अव्यक्ततः परे तत्प्रवर्तके । तेनोक्तमेतत् अव्यक्तिकं रूपं क्वेत्यर्थः ।

## प्रकाशादिवच्चावैयर्थ्यम् ॥ १५

यथा चक्षुरादि प्रकाशे विद्यमानेपि सौरप्रकाशादिविरहादप्रकाश इति व्यवहारः तद्वदप्राकृतरूपत्वेपि अरूपत्वश्रुतिः न विरुद्ध्यते । एवं च रुक्मवर्णं आदित्यवर्णं इत्यादिश्रुतीनां वैयर्थ्यं न भवति सौन्दर्यं च न हीयत इत्यर्थः ॥ ननु सर्वं रूपं प्राकृतमेवेत्याशङ्क्याह—

## आह च तन्मात्रम् ॥ १६

ज्ञानानन्दात्मकमेव ब्रह्मणो रूपं श्रुतिराह । एकात्मप्रत्ययसारं आनन्दमात्रं अजरमित्यर्थः । नन्वत्र ज्ञानानन्दाद्यात्मकत्वं ब्रह्मणः श्रूयते न तु रूपमित्याशङ्क्याह—

## दर्शयति चाथो अपि च स्मर्यते ॥ १७

आनन्दरूपममृतं यद्विभाति इति श्रुतिः आनन्दस्य ब्रह्मरूपतां दर्शयति । स्मर्यते च ज्ञानस्य ब्रह्मरूपत्वं "शुद्धस्फटिकसंकाशं वासुदेवं निरञ्जनम् । चिन्तयीत यतिर्नान्यं ज्ञानरूपाद्धरेः इति मात्स्ये । अतो ज्ञानानन्दादिसुन्दरतरविग्रहे हरौ भक्तिर्युक्तेति माध्वाः । खण्डनं प्राग्वत् । किञ्च आनन्दरूपमित्युक्त्या ब्रह्मणो रूपवत्त्वे रसवत्तापि स्यात् आनन्दैकरसमित्यादिवचनेभ्यः स्वरूपातिरिक्तधर्मस्य विशेषस्य च त्वयाप्यस्वीकारात् । स्वरूपस्यास्माभिरपि स्वीकारात् । अपि च लोकवेदाधिकरणविरुद्धमिदम् लोके रूपादयः शब्दाः अन्यत्रैव गृहीतशक्तिकाः कथमानन्दं बोधयेयुः । एवं करचरणादिरूपता मत्स्यादिरूपता च प्रत्याख्येया, "रूपं स्वरूपे सौन्दर्ये" इत्यादिकोशबलेन रूपशब्दस्य धर्मिमात्रपरत्वादिति दिक् ॥ पूर्ववदेव भक्तिर्विष्णौ युक्ता न वेति संशये नेति प्राप्तम् । विष्णौ जीवाभेदात् । न ह्यभेदे स्वस्मिन् स्वस्य भक्तिर्युज्यते । न चाभेदोऽसिद्धः मत्स्यादिवत् तदंशत्वेन तत्सिद्धेः । इमं पूर्वपक्षं निरस्यति—

## अत एव चोपमा सूर्यकादिवत् ॥ १८

अंशत्वेऽपि जीवो न ब्रह्माभिन्नः तत्प्रतिबिम्बत्वात् अंशत्वादिति हेतावप्रतिबिम्बत्वमुपाधिः। न च प्रतिबिम्बत्वमसिद्धम्, रूपं रूपं प्रतिरूपो बभूवेति श्रुतेः। "बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले एवमेवात्मका लोके परात्मसदृशा मता" इत्यादिवचनाच्च, अतस्तदधीनत्वतत्सादृश्याभ्यां जीवस्य ब्रह्मभेदसिद्धेः युक्ता भगवद्भक्तिरिति माध्वाः। तन्न॥ बिम्बप्रतिबिम्बयोरभेदात् कल्पितभेदपरतयैवोक्तवचनानां चरितार्थत्वात्। उक्तं ह्यमृतबिन्दूपनिषदि—एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति काशीखण्डेऽपि—"यद्वत्प्रत्यम्ब्वर्क एकोऽप्यनेकः तस्मान्नान्यं त्वां विनेश प्रपद्ये" इति। अंशो नानाव्यपदेशादित्यधिकरणभंगे स्फुटीकृतमेतत्।

भक्तिः कर्तव्या न वेति सन्देहे नेति प्राप्तम् निष्फलत्वात्। ननु भक्त्या ज्ञानं ततः प्रसादः ततो मोक्ष इत्यस्यैव फलमिति चेन्न। नित्यानन्दादिर्हि मोक्षः तस्य जीवरूपतया नित्यसिद्धत्वात्। तदभिव्यक्तिः साध्येति चेन्न। सुषुप्ताविव स्वत एव तत्सम्भवात्। सिद्धान्तमाह—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९

कर्तव्यैव भक्तिः अभिव्यक्त्यर्थत्वात्। न च सुषुप्तौ भक्तिं विनाप्यभिव्यक्तेः तद्वैयर्थ्यम्। भक्तिं विना सम्यगभिव्यक्तेरभावात् अन्यथा अनादिसंसारप्रवाहानुपपत्तेः। यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां इति श्रुतेश्च। स्वां तनुं जीवस्वरूपमित्यर्थः। स्मर्यते च पाद्मे—महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्णाऽभिधीयते। तस्यैते व्यज्यते सम्यक् जीवरूपं सुखात्मकमिति। अतः प्रयोजनवती भक्तिः कार्येति माध्वाः। अत्र कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे तृतीयाध्यायोपक्रमेचोक्तं खण्डनमनुसन्धेयम्। किं च त्वन्मते भक्तेरनादित्वात् अनादिसंसारानुपपत्तिरेव। अनादित्वं च स्थानविशेषात् प्रकाशादिवत् एवमनुबन्धादिभ्य इति त्वदीयाधिकरणयोः स्फुटीकरिष्यतेऽस्माभिरपि तत्रैव।

अपि च प्रागभाववादिनस्तव यावद्दुःखप्रागभावाः सन्ति तावत् साधनसम्पत्तिरप्यकिञ्चित्करी प्रागभावकोशे क्षीणे तु सुतरामित्युक्तम्। प्रसादो भगवत्स्वरूपात्मकत्वात् न जन्य इत्याद्यपि बोध्यम्॥ ११॥

भक्तिः किं सर्वभक्तानामेकरूपा, तारतम्यवती वेति संशये मुक्तिरूपफलस्यैकरूपत्वात् तत्साधनं भक्तिरप्येकरूपेति प्राप्ते सिद्धान्तमाह—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २०

भक्त्यादेः साधकेषु वृद्धिह्रासभाक्त्वतारतम्यमस्त्येव। एवं वा सति ब्रह्मादीनन्यांश्चेत्युभयं प्रति सामञ्जस्यं हरेर्वैषम्यं सिद्ध्यति। तत्तद्भक्त्यनुसारिफलदातृत्वात्। अन्यथा विषमं

फलं न दद्यात्। ददद्वा विषमो भवेदित्यर्थः। "साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः। ब्रह्मादयः क्रमेणैव यथाऽनन्दे श्रुतौ तथा" इति च ब्राह्मे।

ननु फलतारतम्ये किं मानं अत आह-**दर्शनाच्च** २१

अथात आनन्दस्य मीमांसा भवति इत्यारभ्य ब्रह्मपर्यन्तस्य सुखे विशेषदर्शनादित्यर्थः। 'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदतः' इति स्मृतिं चकारेण समुच्चिनोति। अतो भक्तिः फलोत्कर्षापकर्षप्रयोजकत्वात् युक्ता सेति सिद्धम्, खण्डनं प्राग्वत्।

इह मुक्तावपि अनुवर्तमानतया स्वरूपात्मकाया भक्तेः आनन्दात्मकफलस्य च वस्तुतो जीवाभिन्नत्वेन अनादित्वे च माध्वरीत्या स्थिते तदुत्कर्षात् तदुत्कर्ष इत्यादिवर्णनं मध्वस्य व्युत्पत्तिलेशोऽपि नास्तीति स्फुटयति। जयतीर्थादयोऽपि अन्धस्येवान्धलग्नस्येत्यादिन्यायोदाहरणतापन्नाः। तदुदाहृततारतम्यवचनं तु उपासनासाध्यगौणमुक्तिपरमिति दिक्।

जगत्पालनत्वं हरेर्युक्तं नवेति संशये नेति प्राप्तम्, सृष्टस्य यावत्संहारं स्थितेः स्वत एव सिद्धत्वात्। सिद्धान्तमाह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥ २२

अस्यैव जगत्पालकत्वं हरेः। यतः प्रकृतिसृष्ट्यादिकर्तृत्वस्य तावन्मात्रं निषेधति। ततोऽधिकं पालनं ब्रवीति श्रुतिः। ततश्च सप्तमाष्टके ऋङ्मन्त्रः-नैतावदेनापरोऽन्यदस्तु दक्षा स द्यावापृथिवी विभर्तीति। एका एनेन प्रकृतेश्वरेण एतावत् प्रकृतं सृष्ट्यादिमात्रं न भवति। किन्त्वन्यदप्यस्ति। किं तत्? परस्स उक्षाः भक्ताभीष्टसेचकः द्यावापृथिव्यौ तदुपलक्षितं सकलं जगत बिभर्ति धत्ते पुष्णाति चेत्यर्थः। एतेन स्थितेः स्वतः सिद्धत्वं प्रत्युक्तम्। धारणपोषणयोः सापेक्षत्वात्। अतः पालके हरौ भक्तिर्युक्तेति माध्वाः। खण्डन तु तथान्यत प्रतिषेधादित्यधिकरणविरोधो भक्तिफलस्य दुर्निरूपता च प्रसादस्य भगवत्स्वरूपानतिरेकादित्यादि प्राग्वत॥ भक्तिः कर्तव्या नवेति संशये नेति प्राप्तम् फलाभावात् भगवदापरोक्ष्यं फलमिति चेत् न स्तम्भादिप्रत्यक्षे व्यभिचारेण भक्तेस्तदजनकत्वादेवं प्राप्ते आह—

## तदव्यक्तमाह हि॥ २३

कर्तव्यैव भगवद्भक्तिः तस्याव्यक्ततया पुरुषप्रयत्नमात्रेण स्तंभादिवत् द्रष्टुमशक्यत्वात् तस्याव्यक्तत्वं च अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम्। यद्ध्यात्वा मुच्यते जन्तुः आनन्दश्चाक्षयो भवेत्। इति **कौरव्य**श्रुतिराहेत्यर्थः।

ननु तथाप्याराधनमात्रेण यक्षादिवत् प्रत्यक्षीभविष्यति तत्किं भक्त्येत्यत आह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४

भक्तिरहिताराधनेऽप्यव्यक्तमेव तत् ज्ञानिवाक्यानुमितात् तथैव तत्प्रत्यक्षत्वात् अतिसूक्ष्मत्वलिङ्गकानुमानाच्च। न तमाराधयित्वापि कश्चिद्व्यक्तीभविष्यति। नित्याव्यक्तो यतो देवः परमात्मा सनातन इति **ब्रह्मवैवर्ते**। स्यादेतत् अस्तु मूलरूपेण ब्रह्म नित्याव्यक्तमेव। किञ्चिद्रूपं गृहीत्वा तु स्फुटीभविष्यति। दृष्टं हि अनलजलभुवां भूतानां तन्मात्रलक्षणानुत्पन्नमूलरूपेणाव्यक्तानामपि उत्पन्नरूपेण व्यक्तत्वम्। तथा च किं भक्त्येत्यत आह—

## प्रकाशादिवच्चावैशेष्यम् ॥ २५

अग्न्यादिवदिह सूक्ष्मविशेषो नास्तीत्यर्थः। नासौ सूक्ष्मो न स्थूलः पर एव स भवति तस्मादाहुः परम इति **माण्डव्यश्रुतेः**। स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे। सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः इति **गारुडे**। अव्यक्तव्यक्तभावौ च न क्वचित् परमेश्वरे। सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दन इति च कौर्मे। किं तर्हि भक्त्येत्यत आह—

## प्रकाशश्च कर्मण्यभ्यासात् ॥

कर्मणि विषयभूते तस्मिन्नेव भक्तिसहितात् श्रवणाद्यभ्यासात् प्रकाश आपरोक्ष्यं भवति द्रष्टव्यः श्रोतव्य इति श्रुतेः। ननु तथापि नित्यव्यक्तस्य कथं प्रकाश इत्याशङ्क्याह—

## अतोऽनन्ते तथाहि लिङ्गम् ॥ २६

अतः प्रसादात् प्रकाशः भगवदनन्तशक्तिके भवति। तथाहि लिङ्गं "तस्याभिध्यानादित्यादि। अभिध्यानात् इच्छया प्रसादेन संशयो निवर्तेत इत्युक्तम्। तच्च मोक्षस्य प्रसादात् साध्यत्वं भगवत्प्रसादस्य तद्दर्शनजनकतामाक्षिपति दृष्ट्वैव तं मुच्यत इति श्रुतेः। तथा च प्रसादात् दर्शनं ततो मोक्ष इति भावः। नित्याव्यक्तोऽपि भगवान् ईक्षते निजशक्तितः। तमृते परमात्मानं कः पश्येतामितं प्रभुम्। इति **नारायणाध्यात्मे**। अतो दर्शनार्थं भक्तिः कर्तव्येति माध्वाः खण्डनं प्राग्वत्।

किञ्च सर्वथापि त एवोभयलिङ्गात् इत्यत्र अनुव्याख्यानन्यायसुधयोः पुराणेषु रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैः भ्रान्त्या गृहीतस्य भेदस्यानुवादकमित्युक्तम् तदव्यक्ते विरुध्येत। अवताराणां मूलरूपेण सहात्यन्ताभेदाभ्युपगमात्। अपि च माहात्म्यज्ञानपूर्वकस्नेहविशेषो हि भक्तिः माहात्म्यं च गुणगरिमा गुणाश्च सर्वे ध्यानायैव आध्यानाय प्रयोजनाभावादित्यधिकरणे त्वया तथैव सिद्धान्तयिष्यमाणत्वात् ध्येयं च ब्रह्म नेति **तथान्यदि**त्यधिकरणे वक्ष्यसि। तत्कथं विष्णौ भक्तिरिति माध्वमतं सङ्गच्छताम्। किंचापरोक्षज्ञानविषयता नाम जीवस्वरूमेव, मुक्तावपि ब्रह्मानन्दापरोक्षस्य त्वया स्वीकारात्। तत्र जीवे जन्यधर्मनिरासाच्च। तथा च नित्यव्यक्ततैव स्यात् न

त्वव्यक्तता। अत एव भक्तेरनादित्वं त्वदभिमतं युज्यते। भक्त्यनुरोधात् केनचिद्रूपेण भानेपि विशिष्टाभानात् अव्यक्ततेति चेन्न, त्वन्मते विष्णोः स्वगतभेदशून्यतया केनचिद्रूपेणेत्यस्य दुरुपपादत्वात् स्फुटीभविष्यति चेदमनुपदमेवेति दिक्।

भगवद्भक्तिः कार्या न वेति संशये नेति प्राप्तम्। निर्गुणे भक्त्ययोगात्। आनन्दादीनां स्वरूपत्वाभ्युपगमात्। न ह्यभेदे गुणगुणिभावः संभवति। एवं प्राप्ते सिद्धान्तमाह—

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७**

कर्तव्यैव भगवद्भक्तिः। श्रुतिषु गुणत्वेन गुणित्वेन चेत्युभयथापि व्यपदेशात्। आनन्दं ब्रह्मणो विद्वान् अथैष एव परमात्मानन्द इति। यथा अहिः कुण्डलं कुण्डलि च विशेषबलात् तद्वदभेदेऽपि गुणगुणिभावोपपत्तेः। तुशब्देन श्रुत्येकगम्ये तर्काप्रसरं दर्शयति। दृष्टान्तान्तरमाह—

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८**

यथा आदित्यस्य प्रकाशकत्वं प्रकाशितत्वं च विशेषबलात्तद्वदित्यर्थः। घटादिकं विहाय आदित्योपन्यासे विनिगमनाभावमाशंक्याह—**तेजस्त्वादिति**। दृष्टान्तान्तरं सूत्रयति—

**पूर्ववद्वा ॥ २९**

यथा कालस्य पूर्वेणाभेदेऽपि पूर्वः काल इति विशेषणविशेष्यभावः विशेषणबलात्तथा गुणात्मकस्यापि ब्रह्मणो विशेषणादेव गुणी ब्रह्मेति विशेषणविशेष्यभाव इत्यर्थः। ननु किमनेन विशेषानुसरणक्लेशेन गुणगुणिनोर्भेद एव स्वीक्रियतामत आह—

**प्रतिषेधाच्च ॥ ३०**

एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचनेत्यादि भेदस्य प्रतिषेधादित्यर्थः। अतो गुणिनि हरौ भक्तिसम्भवाद्युक्तं तन्माहात्म्यवर्णनमिति माध्वाः। अत्रेदं वक्तव्यम्। उक्तरीत्या हरेः स्वगतभेदशून्यत्वेऽवस्थिते कथं भक्तेः उत्कर्षापकर्षनिर्वाहः। कथं वा गुणोपसंहारे अधिकारितारतम्याभ्युपगमः। स्वरूपस्य सर्वैरभ्युपगतेः। अधिकारस्य बाधाभावात्। विशेषस्यापि स्वरूपमात्रपरतया तद्बलादित्यस्याप्यपार्थकत्वात्। किं चायं सगुणवादो निर्गुणत्वे पर्यवस्यतीति नास्माकं दूष्यः। प्रत्युतास्मकं व्यावहारिका गुणाः सन्ति। तव तु तेऽपि नेति विपरीतोऽयं सगुणवादः। एवं चाखण्डार्थत्वखण्डनार्थस्त्वदीयानां कण्ठकोलाहलोऽप्यविचारितरमणीय एव। एकप्रातिपदिकार्थपर्यवसानस्य त्वयाभ्युपगमादिति दिक् ॥

भगवद्गुणजातं लौकिकमलौकिकं वेति संशये आनन्दादिशब्दवाच्यत्वाल्लौकिकमेवेति प्राप्ते सिद्धान्तमाह—

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१

अतो लौकिकानन्दादेरपरं विलक्षणमलौकिकमेव भगवद्गुणजातं, कुतः? लौकानन्दादावसम्भावितस्य सेतून्मानादेर्वैलक्षण्यस्यापि व्यपदेशात्। एष सेतुर्विधरणः एष आनन्दः परस्येति हि सेतुत्वमुक्तम्। उन्मानत्वं पूर्णत्वं तच्च यतो वाचो निवर्तन्त इत्युक्तम्। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति सम्बन्धः मात्रा तत्प्रतिबिंबांशता सम्बन्धो बिम्बप्रतिबिंबभावः। अन्यत् ज्ञानं तु जीवनां अन्यत् ज्ञानं परस्य च। नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयत इति भेद उक्तः। अन्यद्विलक्षणम् ॥

अलौकिकत्वे हेत्वन्तरमाह ॥

## दर्शनात् ॥

अन्यानन्दादीनां दर्शनात् मनोवाग्गोचरत्वात्। ब्रह्मानन्दादेश्चादृष्टत्वादलौकिकतेति भावः। अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणं इति कौरव्यश्रुतेः ॥

नन्वेवमप्रसिद्धस्य कथं श्रुतिस्मृतिपुराणेतिहासेष्वानन्दादिशब्दैः व्यवहारोऽत आह—

## बुद्ध्यर्थः पादवत् ॥ ३३

लोकविलक्षणेप्यानन्दादौ अनुकूलवेद्यत्वादिज्ञापनार्थं तत्तत्पदप्रयोगो युज्यते। यथा प्रसिद्धचरणविलक्षणेऽपि भूतजाते ईश्वरांशमात्रबोधार्थं पादोऽस्य विश्वा भूतानीति पादशब्दः। भेदश्रुतिपर्यालोचनया तु भिन्नांशत्वं निर्णीयत इत्यन्यदेतत्। उक्तं च पाद्मे—"अलौकिकोऽपि ज्ञानादिः तच्छब्दैरेव भण्यते। ज्ञापनार्थाय लोकस्य यथा राजेव देवराडि"ति। उक्तं चान्यत्र—"आत्मानन्दो नेदृशानन्दः इत्युक्तेलोकतः परम्। प्रतिभाति न चाभाति यथावद्दर्शनं विना"इति। व्युत्पत्तिस्तु सौवर्णे घटे घटशब्दस्येव किंचित्सादृश्याद्बोध्या। अतोऽलौकिकगुणे हरौ कर्तव्या भक्तिरिति सिद्धमिति माध्वाः। खण्डनं प्राग्वत् ॥ किं च लौकिकेभ्य आनन्देभ्यः मत्स्यकूर्मवराहादिभ्यः करपादमुखोदरादिभ्यश्चात्यन्तविलक्षण एव भगवान् न तु सौवर्णघटवत्सुसदृशः। तत्कथ तत्र व्युत्पत्तिः। अपि च त्वन्मते सादृश्यमपि हरेः स्वरूपात्मकमेव। न तु लौकिकानन्दमत्स्यकरपादादिसाधारणम्। अतः न सादृश्योपाधौ शक्तिग्रह इत्यादि प्रपञ्चितं द्वितीयस्य प्रथमपादे असदितीति चेन्न प्रतिषेधमात्रत्वादिति त्वदीयाधिकरणखण्डने। तस्माद्यत्किंचिदेतत् ॥ १६ ॥

ब्रह्मादीनां जीवानां आनन्दादिः विषयः। भगवदानन्दादिप्रतिबिम्बो नवेति संशयः। नेति प्राप्तम्। अन्यथा बिम्बादैचित्र्येण मिथोवैचित्र्यानुपपत्तिप्रसंगात्। न च बिंबवैचित्र्यमप्यस्तीति वाच्यम्। भगवद्गुणेषु तारतम्यापत्तेः। भगवतः स्वगतभेदशून्यत्वाच्च। एवं प्राप्ते सिद्धान्तमाह—

**स्थानविशेषात्प्रकाशादिवदिति ॥ ३४**

यथा आदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बविशेषः तथा आनन्दादेरपि । ब्रह्मादिगुणवैशेष्यादानन्दः परमस्य च । प्रतिबिंबत्वमायाति मध्योच्चादिविशेषत इति **वाराहे**—

**उपपत्तेश्च ॥ ३५**

"ऐश्वर्यात्परमाद्विष्णोः भक्त्यादीनां अनादितः। ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता" इति पाद्मे। तथापि ब्रह्मादिस्थानगतभक्त्यादिगुणवैचित्र्यात् बिंबभूतभगवद्गतैश्वर्यवशाच्च युक्तं प्रतिबिंबवैचित्र्यं पुरुषोपपाद्यानां भक्त्यादिस्थानगुणानां कथं स्वाभाविकानन्दादिवैचित्र्यहेतुत्वमिति शङ्कां परिहर्तुं भक्त्यादीनां अनादित्वोक्तिः। अतो ब्रह्मादिगुणबिंबालौकिकगुणे हरौ भक्तिर्युक्तेति माध्वाः। खण्डनं प्राग्वत्। किं च आनन्दादिवैचित्र्यं स्वरूपात्मकं अनादि चेति वदन् कथं तत्र भक्त्यादेर्हेतुतां ब्रूषे। अपि च भक्तिरपि तत्र मुक्तावनुवर्तमानस्वरूपात्मकैव। तथा भक्तिवैचित्र्ययोरभेदात्स्वस्य स्वयं हेतुरिति पर्यवसितम्। तदलमनेन मध्वादिवचननिष्कर्षव्यसनेनेत्युपरम्यते ॥ १७ ॥

तदव्यक्तमाह हीत्यधिकरणे उक्तमव्यक्तत्वमिदानीमाक्षिप्य समर्थ्यते। ब्रह्म नाव्यक्तम्। ध्यानकाले चित्ते प्रतीयमानत्वात्। न च ध्यानकाले प्रतीतं न ब्रह्म। ध्यातृबहुत्वेन बहुत्वापत्तेरिति वाच्यम्, स्वरूपभेदाभावेऽपि ब्रह्मरूपाणां नानात्वाभ्युपगमेन इष्टापत्तेः। अन्यथा ध्यानवैयर्थ्याच्च। नहि यस्य कस्य चिद्ध्यानात् ब्रह्म फलं ददातीति युक्तम्। अतिप्रसङ्गात्। एवं प्राप्ते सिद्धान्तमाह—

**तथान्यत्प्रतिषेधात् ॥ ३६**

ध्यानकाले प्रतीतत्वेन ब्रह्म व्यक्तमिति न मन्तव्यम्। ध्यानकाले प्रतीतस्याब्रह्मत्वात्। यथा खलु जीवानन्दादीनां अल्पत्वात्पूर्णस्य ब्रह्मानन्ददेस्ततो भेदस्तथोपासनाकाले प्रतीतस्य व्यक्तत्वादव्यक्तस्य ब्रह्मणस्ततो भेद एव। यन्मनसा न मनुते येनाहुर्मनोमतम् तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते इति श्रुतावुपास्यस्य ब्रह्मत्वप्रतिषेधाच्च। यद्वस्तु कर्मीभूतं जीवो न मनुत इत्यर्थः। उक्तं च **ब्रह्मतर्के**—पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिंबितम्। ब्रह्मैव प्रतिबिंबे यदतस्तेषां फलप्रदम्। तदुपासनं च भवति प्रतिमोपासनं यथा। दृश्यते त्वपरोक्षेण ज्ञानेनैव परंपदम्। उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः" इति। इह हि ध्यानकाले प्रतीतस्याब्रह्मत्वे कथं ब्रह्म फलदं स्यात् इत्यत उक्तं—पश्यन्तीति। तथापि स्थितिमात्रेण कथं फलप्रदम्-अनुपासितत्वादित्यत उक्तम्—तदुपासनं चेति। ब्रह्मैव तत्कुतो नेत्यत आह **दृश्यत इति**। ननु ज्ञान एव तर्हि यत्यतां किमुपासनयेत्यत उक्तं—**उपासनेति**। अतो ध्यानप्रतीतस्याब्रह्मत्वेन तस्याव्यक्तत्वात् कर्तव्यैव तत्र भक्तिरिति माध्वाः—

अत्रेदं वक्तव्यम्। यद्युपास्यं न ब्रह्म तर्हि उपासनविध्यन्तर्गता ब्रह्मशब्दाः अब्रह्मपरा एव स्युः। ब्रह्मण उपासनाविधिविषयत्वेऽनुपास्यत्वायोगात्। नहि सम्भवत्युपासनविधिषूपास्यसमर्पकैः पदैः ब्रह्म उपास्यतया समर्प्यते उपास्यं च न भवतीति। एतच्छङ्कानिरासायैव हि यन्मनसा न मनुत इति मन्त्रस्य सन्निधावाम्नायमानं "यद्वाचानभ्युदितं येनवागभ्युद्यते, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति। तेन हि सर्ववागविषयभूतं ब्रह्मोपासनाविधिप्रकरणेषु सर्वं खल्विदं ब्रह्मेत्यादिवाक्ये श्रुतानामुपास्यसमर्पकाणां ब्रह्मादिपदानां अप्यर्थो न भवतीति प्रदर्शनेनैषां शङ्का निरस्ता भवति। तस्मादवाच्यत्वमिति त्वयाभ्युपगन्तव्यम्। अनुपास्यं च त्वदीयं ब्रह्म सृष्टयादिवाक्यस्थब्रह्मनारायणादिपदानामपि वाच्यं न भवेदिति न तस्य जगत्कर्तृत्वं सिध्येत्। ईक्षत्यधिकरणं च त्वदीयं विरुध्येतेत्युक्तम्। किंचाध्यानाय प्रयोजनाभावादिति त्वदीयाधिकरणे गुणाः सर्वे ध्यानार्था इति त्वत्सिद्धान्तात् सगुणं ध्येयमेव। तच्च न ब्रह्मेति इह ब्रूषे। तथा चाव्यक्तशब्दस्य ब्रह्मणो निर्गुणत्वमेव फलितम्। तत्कथं तत्र भक्तिर्युक्तेति ब्रूषे। कथं वा विरुद्धधर्माध्यासेन जीवात् भेद इति वल्गसि। पुंसत्वादिवदित्यधिकरणे आवृतत्वेनोक्तात् जीवानन्दादव्यक्तब्रह्मणो भेदे मानाभावात् अभेदे तु लाघवोपष्टब्धश्रुत्यादिसत्वाच्च। तदुक्तम्—न ध्येयं ब्रह्म नेदं यदिदमिति गिरा ह्यभ्युपेतं त्वया ऽतो ध्येयार्थानां श्रुतीनां क्वचिदपि च न तद्वाच्यमित्यभ्युपेयम्। नोचेन्न ध्येयमेतत् कथमिति भवति स्यादवार्यैव शङ्का यद्वाचेति श्रुतिश्च क्षिपति तदसनायैव वाच्यत्वमस्य॥ ध्येयार्था एव वाच्याः तव निगमगिरः स्रष्टृतादीन् वदन्त्यः त्वं हि ध्यानैकनिष्ठां गुणगणभणितिं ब्रह्मणे वक्ष्यशेषाम्। तत्तासां ब्रह्मणः-स्यात् प्रतिफलनमिदा कापि वाच्या मते ते यद्वाचेत्येवमाद्यैः कतिपयवचनैः ब्रह्म शुद्धं तु लक्ष्यम्। तस्माद्यत्तेऽनुपास्यं विमलसुखतनु ब्रह्मकूटस्थमिष्टम् शास्त्रेप्यस्मिन् विचार्यं गमितमुपनिषल्लक्ष्यतां मुक्तभोग्यम्। सौसावानन्द एवेत्युचितमसुमतामावृतो यस्त्वयोक्तः तद्भेदे नास्ति मानं किमपि निगमतो लाघवेनैक्यसिद्धेः॥" इति। तस्मात्पूर्वापरविरोधग्रस्तं स्वसिद्धान्तानां प्रतिकूलं च एतावन्माध्वाधिकरणमिति दिक्॥

परमेश्वरः किं सर्वदेशकालगतनिखिलसृष्टयादिकर्ता नवेति संशये नेति प्राप्तम् देशान्तरादावन्यस्यापि स्रष्टृत्वादिसम्भवात्। राजादीनां तथा दर्शनाच्च। एवं प्राप्ते सिद्धान्तमाह—

## अनेन सर्वगतत्वमायामयशब्दादिभ्यः॥ २७

अनेन भगवतैव सर्वसृष्टयादि न त्वन्येन। कुतः? सर्वगतत्वात् तद्धि ब्रह्मणः सर्वसृष्ट्याद्यर्थमेवोच्यते। अनुप्रविश्य नामरूपे व्याकरोदित्युक्तेः। मायामयशब्दात् मायामय शब्दव्याख्यारूपश्रुतेरित्यर्थः। श्रूयते हि **चतुर्वेदशिखायां**—"सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु। स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः॥ अतो मायामयं विष्णुं प्रवदन्ति सनातनमि"ति। आदिशब्देन कर्त्रन्तरकल्पने प्रमाणाभावादि सङ्गृहीतम्। अतो ब्रह्मणि सर्वजगज्जन्मादिकर्तरि

भक्तिः कार्येति सिद्धमिति माध्वाः। खण्डनं तु कर्तुस्सगुणत्वेन ध्येयत्वात्त्वदीयपूर्वाधिकरणरीत्या ब्रह्मत्वानुपपत्तिः इत्यादि पूर्ववत् ॥ १८ ॥

हरिः कर्मफलदाता नवेति संशये नेति प्राप्तम्। आवश्यकत्वात् कर्मण एव फलसम्भवात्। सिद्धान्तमाह—

**फलमत उपपत्तेः ॥ ३८**

अत ईश्वरात् फलं च भवति। चेतनस्य फलदातृत्वोपपत्तेः। न ह्यचेतनस्य तत्सम्भवति।

**श्रुतत्वाच्च ॥ ३९**

विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणमिति श्रुतेः। दातुर्यजमानस्य रातिः फलप्रदमित्यर्थः। उक्तमाक्षिपति—

**धर्मं जैमिनिरत एव ॥ ४०**

कर्मैवावश्यकत्वात्फलप्रदम्। तच्चात ईश्वरादेव भवतीति ईश्वरोऽपि फलदातृत्वेनोपचर्यते रातेर्धातुरित्यादिश्रुतिषु। नचेश्वरस्य कर्मकारणत्वमसिद्धम्। एष ह्येव साधु कर्म कारयतीति श्रुत्या तत्सिद्धेः। नचेदं न्यायोपष्टम्भमात्रेण ब्रूमः। किंतु जैमिनिराचार्योपीत्थं मन्यते। सूत्रे धर्मपदमधर्मस्याप्युपलक्षणम्। समाधत्ते—

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१**

पूर्वोक्तं ब्रह्मैव फलदाने कर्तृ। पुण्येन पुण्यं लोकं नयति पापेन पापमिति ब्रह्मणः कर्तृत्वव्यपदेशात् कर्मणः करणत्वव्यपदेशाच्चेति भगवान् बादरायणो मन्यते। अतः परमेश्वरस्यैव कर्मफलदातृत्वान्निरतिशयमहिम्नि तस्मिन् भक्तिः कर्तव्येति माध्वाः। खण्डनं प्राग्वत् ॥२०॥

इति श्रीतत्त्वकौस्तुभे तृतीयपरिच्छेदे द्वितीयस्याध्यायस्य

द्वितीयः पादः समाप्तः ॥

---

॥ श्रीरस्तु ॥

# अथ तृतीयः पादः ॥

तृतीयाध्यायस्य प्रथमपादे वैराग्यमुक्तम्। द्वितीये भक्तिरुक्ता। इदानीं भक्तिसाध्या ज्ञानसाधनीभूता च उपासनापरपर्याया ब्रह्मजिज्ञासा वर्ण्यते। उपासना च द्विविधा। समस्त-

सच्छास्त्राभ्यासरूपा तावदेका यामाहुः श्रवणमनने इति। ध्यानरूपा त्वपरा। तत्राद्यायाः ध्यानाङ्गत्वात् सैव प्रथमाधिकरणे निरूप्यते। ब्रह्म विषयः। किमेकेनैव सर्वशाखोक्तं श्रवणमननाभ्यां ज्ञातव्यमुत स्वस्वशाखोक्तमिति सन्देहः। स्वस्वशाखोक्तमेवेति प्राप्तम्। प्रतिशाखं मुक्तिवैलक्षण्यात्। सर्वशाखापरिशीलनस्य कृत्यसाध्यत्वाच्च। सिद्धान्तमाह—

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥ १**

अन्तो निश्चयः। अन्तोस्त्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके इति कोशात्। "उभयोरपि दृष्टोऽन्त" इति प्रयोगाच्च। सर्ववेदनिर्णयेन प्रत्येतव्यं ब्रह्म आत्मेत्येवोपासीतेति विधीनां युक्तीनां च सर्वान् प्रत्यविशेषात् नहि काण्वैरित्थं ज्ञेयं माध्यंदिनैः इत्थमित्यादिविशेषः श्रयते। उक्तमाक्षिप्य समाधत्ते—

**भेदान्नेति चेन्नैकस्यामपि॥ २**

'विज्ञानमानन्द ब्रह्म'। सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादि प्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयास्सर्वशाखा इति चेन्न। एकस्यामपि शाखायामात्मेत्योवोपसीत। ओं कं ब्रह्म खं ब्रह्मेत्यादि भेददर्शनात्। यदि तु धर्म्यनुवादेनान्यधर्मविधानादेकमेवोच्यते इति ब्रूषे तर्हि इहापि तुल्यमिति भावः।

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च॥ ३**

अस्ति खलु सर्वशाखा एकैकेनाप्यध्येतव्येति नियमः। स्वाध्यायोऽध्यतव्य इति विधेः सर्वाधिकारिसाधारण्यात्। अन्यथाऽनेनायं स्वाध्यायोऽध्येतव्य इति ब्रूयात्। अध्ययनं च तदुक्तज्ञानार्थमेव। "वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने"ति स्मृतिं हिशब्देन सूचयति। अनेन सर्वेषां सर्वशाखाध्ययनाभावात् सर्वज्ञानमयुक्तमिति परास्तम्। किं च सर्ववेदोक्तकर्मसमाचारे सर्वेषामाधिकाराद्ब्रह्मज्ञानेऽपि तथैव। उक्तं च "सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः। आनन्दो हि परं यस्माच्छाखाभेदो ह्यशक्तिजः" इति "सर्वकर्मकृतौ यस्मादशक्तास्सर्वजन्तवः। शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपत् इति। यानि तु सामगो वटुर्मुण्डः अन्यः शिखीत्यादीनि विरुद्धानि कर्माणि तान्येकशाखागतविरुद्धधर्मवद्विकल्प्यन्ते। नन्वेवं मन्दानां सर्वशाखापरिज्ञानविधुरत्वाद्ध्यानानधिकार एव स्यादित्यत आह—

**सलिलवच्च तन्नियमः॥ ३**

सर्ववेदोक्तप्रकारेण ब्रह्म ज्ञातव्यं इति योऽयं नियम उक्तः स पुरुषशक्तिसापेक्षत्वादुत्सर्गरूपः। यथा सर्वासां अपां समुद्र एवैकायनमिति नियमः प्रतिबन्धाभावसापेक्षस्तद्वत्। स्मर्यते ह्याग्नेये—

**"यथा नदीनां सलिलं शक्ये सागरगं भवेत्।**
**एवं सर्वाणि वाक्यानि पुंशक्त्या ब्रह्मवित्तये॥** इति॥

## दर्शयति च। ४

इति सूत्रान्तरम्॥ सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिध्येत्। तस्मादेवं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुरिति **चतुर्वेदशिखायाम्**। सर्वान् वेदान् सेतिहासान् पुराणांश्च सयुक्तिकान्। सपाञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथेति **ब्रह्मतर्के**। तस्माद्भगवद्ध्यानार्थं सर्ववेदोक्तं विज्ञेयमिति सर्वोपादेयं शास्त्रमिति सिद्धमिति माध्वाः।

अत्रेदं मक्तव्यम्। स्वाध्यायोऽध्येतव्य इति विधिः सर्वशाखाध्ययनमेकस्य विधत्त इति त्वदुक्तं तावत् पूर्वतन्त्राज्ञानविजृम्भितम्। तत्र हि शाखान्तराधिकरणे स्वशाखामात्रविषयकोऽयं विधिः। अत एवाग्निहोत्रविधेः बहुशाखास्थत्वेपि अभ्यासन्यायो नावतरति। तत्तच्छाखाध्यायिनं प्रति तत्तदुत्पत्तिविधेः सार्थकतया एकस्यैवं पुनः श्रुतिःविशेषादनर्थकं हि स्यादिति सौत्रहेतोरनर्थ-कत्वापत्तिरूपस्य तत्राभावादिति निर्णीतम्। उक्तं च तत्र भट्टपादैः अत्र स्वाध्यायशब्देन स्वशाखैका तु गृह्यत इति। युक्तं चैतत्। स्वस्याध्यायः स्वाध्यायः इति विग्रहेण स्वशब्दमहिम्नैव शाखान्तरव्युदासात्। एतेनानेनायं स्वाध्यायोऽध्येतव्य इति ब्रूयादिति जयतीर्थोक्तं प्रत्युक्तम्। यदपि मुण्डः शिखीत्यादेः शाखाभेदेनोक्तस्यापि विकल्प उक्तः। तदपि मन्दम्। "पारंपर्यागतो येषां वेदस्सपरिबृंहणः। तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा" स्वीयशाखोज्झिता येन ब्रह्मतेजोज्झितं परम्। ब्रह्मैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः॥" इति **वसिष्ठोक्तेः**। शाखारण्डस्य पुनरुपनयनपूर्वकं स्वशाखाध्ययनस्य विधानाच्च। तथा च कारिकाकारः इममर्थं पुनरुपनयने विधिविशेषं चाह—वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते। उपनीतिरियं तेषामलंकरणवर्जिते" त्यादिना। तस्मात्स्वाध्यायोऽध्येतव्य इति विधिस्तावत्स्वशाखामात्रविषयः। स्वशाखाध्ययनानन्तरं शाखान्तराध्ययने परमभ्युदय इत्यन्यदेतत्॥ १७॥

परमात्मा किं सर्ववेदोक्तगुणानुपसंहृत्य ध्यातव्यः। अन्यथा वेति सन्देहेऽन्यथेति प्राप्तम्। तथा हि सर्ववेदोक्तप्रकारेण ज्ञायतां नाम। नतु सर्वगुणोपसंहारेण ध्यातव्यः। तथा-विधध्यानस्य कर्तुमशक्यत्वात्। ज्ञानं तु क्रमभावित्वाच्छक्यम्। एवं प्राप्ते सिद्धान्तमाह—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च॥ ५

आनन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां चाभेदादुपसंहारः। तथा च सर्वोप-संहारेणैव परमात्मा ध्यातव्यः। कुतः? यथाविधि प्राप्तत्वात् सन्ध्यावन्दनादेस्तदकरणे प्रत्यवायः। एवं सर्वगुणोपसंहारेण परमात्मध्यानस्य विहितत्वेन तदकरणेऽनर्थप्राप्तेः। उपास्य एकः परतः परो यो वेदैश्च सर्वैः सहसेतिहासैः। सपाञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतेरिति हि **भाल्लवेयश्रुतिः**। सर्वे गुणास्सर्वदैव ह्युपास्यास्तेनैव विद्वान् विधिकृन्नान्यथा स्यात्। इति च श्रुत्यन्तरम्। आग्नेये च—"विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि। यथा कार्याणि सर्वैश्च सर्वाण्येव विशेषतः। एवं सर्वगुणान् सर्वदोषाभावांश्च यत्नतः। योजयित्वैव भगवान् उपास्यो नान्यथा क्वचित्॥" इति।

स्यादेतत् । सोऽरौदीदित्यादिश्रुतौ रोदनादयोऽपि तह्र्युपसंहर्तव्याःस्युः इत्यत उक्तम्-समाने चेति । समाने भगवति योग्यो गुणः पूर्णत्वाविरोधी तद्विषय एवायमुपसंहारः । अयोग्योपासनस्यानर्थफलत्वात् । तथा च **साङ्कर्षणं सूत्रम्**—"अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्या"मिति । उक्तं च **बृहत्तन्त्रे**-गुणैरेव स तूपास्यो नैव दोषैः कथंचन । गुणैरपि न तूपास्यो ये पूर्णत्वविरोधिनः इति । उक्तमाक्षिप्य समाधत्ते—

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६

शब्दात्—आत्मेत्येवोपासीतेति श्रुतेः । अन्यथात्वमनुपसंहारः प्रतीयते । तथा च सर्वगुणोपसंहारो न युक्त इति चेन्न । अविशेषात् । एते गुणा नोपास्य इति विशेषे प्रमाणाभावात् । आत्मेत्येवेत्यवधारणस्यायोगव्यवच्छेदकत्वात् । नचान्ययोगव्यवच्छेदकत्वं कुतो नेति वाच्यम् । सर्वैर्गुणैरेक एवेशिता स उपासितव्यो न तु दोषैः कदाचिदित्यादिश्रुत्यन्तरविरोधादिति भावः । ननु सर्वगुणोपसंहारो न युक्तः कृत्स्नसाध्यत्वादित्याशंक्याधिकारिविशेषं प्रत्येवमेवेति गूढाभिसन्धिः अभ्युपगमेन परिहरति ।

## नवा प्रकरणादिभेदात्परोवरीयस्त्वादिवत् ॥ ७

न चायमुपसंहारः कर्तव्यः । परोवरीयोवैश्वानरादिप्रकरणभेदात्स एष परोवरीयानुद्गीथ इति प्रकरणे हि परोवरीयस्त्वाद्येव उपास्यमुक्तम् । नतु सर्वगुणाः ।

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदमिति नारदेनात्मनः सर्वविद्यात्वेदित्वमुक्त्वा सोऽहं नामविदेवास्मि नात्मविदिति तावदभिसंहितं छान्दोग्ये । सोऽहं सर्वविद्याविदप्यात्मनामविदेव न त्वात्मवित् । तन्निर्णयाभावादित्यर्थः । एवं च सर्वविद्यानां ब्रह्मनामत्वेन तद्गुणाभिधायकत्वाद्गुणाभिधानस्य चोपसंहारार्थत्वात् कर्तव्य एव सर्वगुणोपसंहार इति प्राप्तम् । तदिदमाह-**संज्ञातश्चेति** । इष्टापत्त्या समाधत्ते-**तदुक्तमिति** । उपसंहरणं प्रागेवोक्तमित्यर्थः । तत्र प्रमाणमप्यस्त्येवेत्याह—**अस्ति तु तदपीति** । नाम वा एताः ब्रह्मणस्सर्वविद्यास्तस्मादेकस्सर्वगुणैर्विचिन्त्य इति **कौण्डिन्यश्रुतिः** । उक्तं च **ब्रह्मतर्के**—नामत्वात्सर्वविद्यानां गुणानामुपसंहृतिः । कार्यैव ब्रह्मणि परे नात्र कार्या विचारणा इति । अतस्सर्वगुणोपसंहारस्य कर्तव्यत्वात् सार्थकं सर्वपरिज्ञानमिति **माध्वाधिकरणम्** । इह प्राप्तेश्च समञ्जसम् । इतरे त्वर्थसामान्यात् । पुरुषविद्यायामिव चेतरेषामनाम्नानादित्यादि सूत्राणि लिखित्वा रचिष्यमाणानां माध्वाधिकरणानां प्रकृताधिकरणस्य च निष्कर्षेणेत्थं माध्वमतं पर्यवस्यति-सर्वविद्याम्नातानां कर्मकाण्डगताग्नेयसौरादिसूक्ताम्नातानां च सर्वेषां गुणानामुपसंहारेण उपासना कार्या । नतु विद्याभेदेन गुणानां प्रतिप्रकरणं व्यवस्था । किं तु मानुषाद्या हिरण्यगर्भान्ता मुक्त्यधिकारिणः

फलतारतम्येन मुक्तिभाज इति अधिकारिभेदेनैव। तत्र हिरण्यगर्भः सर्वोत्कृष्टमुक्त्यर्हतया कर्मब्रह्मकाण्डाम्नातासंकुचितसकलगुणोपसंहारयोग्यः। अन्ये तु स्वस्वभावमुक्त्यनुसारिगुणोपसंहारयोग्याः। यद्यप्यस्मदादिभिः मुक्त्यधिकारिभिरुपासनारम्भसमये स्वस्वभावमुक्तिस्वरूपं प्रतिपुरुषमनादियोग्यतानुसारेण व्यवस्थिततारतम्यमजानद्भिः स्वस्वोपासनयोग्या गुणाः निश्चेतुं न शक्यन्ते। अयोग्यगुणोपसंहारश्च अनर्थफलकः। अचेतनासत्येत्यादिसंकर्षणसूत्रात्, अधिकाधिको यत्नः प्रायशो नोपपद्यते। कथंचिदविके यत्ने दोषः कश्चित् समापतेदिति वचनाच्च। तथापि स्वस्वगुरोः अन्यस्माद्वा कुतश्चित्सर्वज्ञात् भाविस्वमुक्तिफलस्वरूपं ज्ञात्वा तदनुसारेण स्वस्वयोग्यगुणानपि तत एवावगम्य तेषामुपसंहारः कार्यः। न च बह्वल्पगुणप्रतिपादकविद्याविशेषपरिग्रहेण मुक्त्यधिकारिणां फलोत्कर्षापकर्षनिर्वाहात् प्रकरणाद्युल्लङ्घनेन गुणोपसंहारो न कार्य इति वाच्यम्। सकलगुणोपासनयोग्यस्य हिरण्यगर्भस्य सकलगुणपरिग्रहायान्येषामपि स्वस्वमुक्त्यनुरूपगुणविशेषपरिग्रहाय च नानाप्रकरणविप्रकीर्णगुणोपसंहारावश्यंभावात्। क्वचिदपि विद्यायां सर्वगुणविशेषाम्नानादर्शनात्। तत्तन्मुक्त्यनुरूपगुणविशेषाम्नाननियमाभावाच्चेति।

अत्रेदं वक्तव्यम्। "उभयव्यपदेशात्त्वहिकुण्डलवदि"ति माध्वाधिकरणरीत्या गुणानां ब्रह्मस्वरूपात्मकत्वाद्भूयोधिकगुणोपसंहारो दुरुपपादः। किं च शब्दान्तरादिभिः पूर्वतन्त्रे व्युत्पादितैरिहोपासनभेदोऽपि दुर्निवारः। तथा च तत्र तत्र व्यवस्थितानां गुणानामुपसंहारोऽप्ययुक्त इति एव। नह्येकाग्निमुपासीनस्यायुरादिकमपेक्षितमिति आयुराशास्ते सुप्रजास्त्वमाशास्त इत्यादिसूक्तवाकमन्त्रार्पितायुरादिफलकं दर्शपूर्णमासाङ्गं प्रस्तरप्रहरणं पुरुषापेक्षामात्रेणौपासनादिकर्मसूपसंहार्यं भविष्यति। अत एव श्रीशङ्करभगवत्पादैः इहेत्थं सिद्धान्तितम्। दहरविद्या—शाण्डिल्यविद्या-वैश्वानरविद्या-षोडशकलविद्या-उपकोसलविद्या पर्यङ्कविद्यादिसंज्ञाभेदेन प्रसिद्धाः परब्रह्मविद्या यथायथं शब्दान्तरादिभिः प्रमाणैः परस्परभिन्ना एव। भिन्नत्वादेव तत्तद्विद्याम्नाता उपास्यगुणा वाजपेयाश्वमेधादिकर्मणामङ्गकलापवद्यथाप्रकरणं व्यवस्थिता इति न तासु परस्परगुणोपसंहारः। किन्त्वेकैकस्यां विद्यायां नानाशाखाम्नातगुणोपसंहारमात्रम्। सर्वासामपि तासामुपास्यगुणतारतम्येन उपासनाकालतारतम्येन सहकारियज्ञादिकर्मतारतम्येन च फलभोगतारतम्यमिति देवयानमार्गप्राप्यसगुणब्रह्मलोकावासिरपरमुक्तिरूपा फलमिति। इदमेव च न्याय्यत्वात् सुधीभिरादर्तव्यम्। एवं चिरंतनीं श्रीशङ्करभगवत्पादोपदिष्टां सरणिं विहाय वराकमाध्वीमनुसरन्तस्तु शोचनीया उपेक्षणीयाश्चेति। एवंस्थिते नवीनमाध्वस्य ग्रन्थो गर्भस्रावेणैव गतः। नहीत्थं कर्ममीमांसायां व्युत्पादितैः शब्दान्तरादिभिः जीवब्रह्मणोर्भेदः सिध्यति। अस्ति ह्येष एव जीवं प्रबोधयति। एतस्माज्जीव उत्तिष्ठतीति विरुद्धार्थधातुनिष्पन्नाख्यातरूपं शब्दान्तरम्। नित्यो जीवः नित्यः पर इत्यभिज्ञायमानपुनः श्रुतिरूपोऽभ्यासः। द्वासुपर्णेत्यादिसंख्या। अनश्नन्नित्यादिर्भेदको गुणः यतो वाच इति प्रकरणान्तरं जीवेशाविति नामधेयभेदश्चेति। इत्थं जल्पन्नवीनमाध्वो माध्वमतमपि प्रायेण न वेत्ति। भाट्टादीनि तु न तराम्। तथा हि— मध्वेन तावदुपासनायां सकलगुणोपसंहारं जल्पता शब्दान्तरादीनां भेदकत्वमेवेत्युक्तम्। तेषां भेदकत्वाभ्युपगमे

विद्याभेदाकत्वाभ्युगमे विद्याभेदस्यानिवार्यतया गुणोपसंहारानुपपत्तेः समनन्तरमेवोक्तत्वात् । किंच एष ह्येव जीवं प्रबोधयति एतस्माज्जीव उत्तिष्ठतीति विरुद्धार्थधातुनिष्पन्नाख्यातरूपस्य शब्दान्तरस्य भावनाभेदकत्वमस्तु नाम। जीवब्रह्मभेदकता तु कुतः? उक्तं हि जैमिनिना—शब्दान्तरे कर्मभेदः कृतानुबन्धित्वादिति । भट्टपादैरप्युक्तम् । "धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम् । उत्पत्त्येकानुरक्ता हि नान्येनाप्यनुरज्यत" इति । अथोद्बोधकत्वावच्छिन्नस्य उद्बोध्यत्वावच्छेदो विरुध्यत इति विरुद्धधर्ममूलं भेदं ब्रूषे तदपि तुच्छम्। ब्रह्मणि विरुद्धधर्मसमावेशस्य त्वया बहुशः स्वीकारादित्युक्तम् प्रथमाधिकरणखण्डने। संख्याया गुणस्य च भेदकत्वं यस्मिन् पञ्चपञ्चजनाः अणोरणीयानित्यादौ त्वयैव त्यक्तम्। प्रकरणभेदोऽपि न भेदक । भारतादिषु रामकृष्णचरित्रप्रतिपादकप्रकरणभेदेऽप्यभेदानपायात्। सृष्टिसंहारादिप्रतिपादकप्रकरणभेदेऽपि त्वया सृष्टिसंहारादिक्रियाणां अभेदस्याङ्गीकृतत्वाच्च । एतेन जीवेशाविति नामभेदस्यापि भेदकत्वं प्रत्याख्यतम् ।

अपि च कर्ममीमांसकैः इत्थं शब्दान्तरादिषट्कं मुख्यभेदे प्रमाणतया नोपन्यस्तम्। न हि तैः शब्दान्तरादिकं प्रदर्श्य उपपाद्यमानस्तदभेदं प्रदर्श्यापोद्यमानश्च कर्मभेदः शास्त्रभेदो वा अन्योन्याभावादिरूपो मुख्यभेदः। सप्तदश प्राजापत्यान् पशूनालभत इत्यत्र दधिमधुघृतमापो धानाः करम्भास्तण्डुलास्तत्संसृष्टं प्राजापत्यमित्यत्र ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामित्यत्र च प्राजापत्यपशूनां प्राजापत्यदध्यादीनां ऐन्द्रदधिपयसोश्च प्रधानयौगपद्येन प्रजापत्याद्युद्देशेन तत्तद्द्रव्यविषयकसंकल्परूपाणां यागानामेकैकत्वेऽपि सप्तदश प्राजापत्ययागाः सप्त दध्यादियागाः द्वौ दधिपयोयागाविति भेदोपपादनात्। सोमेन यजेतेत्यत्र इन्द्रवाय्वाद्युद्देशेन तत्तत्पात्रस्थितसोमसंकल्परूपाणां यागानां भिन्नत्वेऽपि अग्निहोत्रं जुहुयादित्यत्राहवनीयादिषु हविः प्रक्षेपरूपाणां होमानां भिन्नत्वेऽपि भेदनिरासात्। सप्तदशप्राजापत्यानिति वाक्यरूपस्य शास्त्रस्यैकत्वेऽपि भेदोपपादनात्। व्रीहिभिर्यजेत व्रीहीनवहन्ति इत्यादिवाक्यरूपाणां शास्त्राणां भिन्नत्वेऽपि भेदनिरासाच्च । तस्मादनुष्ठानविशेषोपयोग्यपूर्वभेदाद्युपाधिः काल्पनिको भेदः शब्दान्तराद्यवसेय इत्येव भाट्टानां गुरूणां च संमतम्। उक्तं हि क्रियाणां आश्रितत्वात् द्रव्यान्तरविभागः स्यादित्यधिकरणे तन्त्ररत्ने—अथापि नाम सर्वत्रैलोक्यवर्तिन्येकैव कर्मव्यक्तिरनुबन्धमात्रं तु भिद्यते यावदेकापूर्वानुबन्धनमेकेन शास्त्रेण विषयीकृतं तावदेवैकं कर्म तदन्यत्तु भिद्यत इति भेदाभेदव्यवहारसिद्धिरिति। उक्तं च वरदराजीये-शब्दान्तराधिकरणे—भिन्नापूर्वानुबन्धप्रतिपादनयोग्यताज्ञानं यत्तदेव शास्त्रभेदव्यवहारज्ञानमित्युच्यते इति । तत्रैव संख्याधिकरणेऽप्युक्तम्—न च सप्तदश प्राजापत्यानिति वाक्यस्यैकत्वान्न शास्त्रभेदः तत्र निरपेक्षभिन्नलौकिकार्थत्वमेव हि तत्। तच्चेहाप्यस्तीति। एवं मुख्यभेदाभावेऽपि काल्पनिकभेदमात्रेण शब्दान्तरादेश्चारिताथ्यार्ज्जीवब्रह्मणोरपि काल्पनिकभेदे इष्टापत्तिरेव। तदुक्तमभियुक्तै—शब्दान्तरादिकथनं त्विह भेदसिद्ध्यै हासास्पदम् सदसि दर्भपवित्ररीत्या । तत् पूर्वतन्त्र इव काल्पनिकेऽपि भेदे तेषां घटेत किमिहापि न चारितार्थ्यम् ॥ १ ॥ निर्मर्यादप्रवृत्ते तव तु हतमते सोऽपि भेदो न सिध्येत्, यस्त्वं नानाधिकारश्रुतपरगुणसङ्क्षर्यमिच्छस्युपास्तौ। अङ्गानां खल्वभेदेऽप्यपि च भगवता सन्ति शब्दान्तराद्याः, तत्स्यान्-

मत्स्यादिरीत्या निखिलजनिमतां वासुदेवांशभावः ॥" इति । या तु उपास्य एक इत्यादिः भाल्ल-वेयश्रुतिरुदाहृता सापि नास्माकं प्रतिकूला । उपसंहारं विनापि सर्वगुणानां यथायथमुपास्यत्वात् । सर्वे गुणा इति श्रुत्यन्तरमपि तत्तदुपासकोपसंहार्यगुणपरम् । आग्नेयमप्येवमेव । कर्मदृष्टान्तानु-गुण्यात् । न हि सर्वकर्माणि सर्वैः कार्याणीति संकोचं विना सुयोज्यम् । सन्न्यासिनामपि गृहस्थ-धर्माणां अनुष्ठेयतापत्तेरिति दिक् ॥ २ ॥

उपसंहारानुपसंहारौ द्वितीयाधिकरणे उक्तौ । तौ युज्येते न वेति संशये नेति प्राप्तम् । विरोधात् । एवं प्राप्ते सिद्धान्तमाह—

**प्राप्तेश्च समञ्जसम् ॥ ९**

युक्तावेवोपसंहारानुपसंहारौ । पुरुषभेदेनाविरोधात् । न च विनिगमनाविरहः । युगपत्प्रतीत्यादियोग्यताविशेषस्यैव विनिगमकत्वात् । तथा च श्रुतिः—"यस्य यावद्गुणाः स्पष्टाः प्रतिभासन्त्युपासने । युवत्स्वभुजौ यद्वद्ध्यायेत्तावत एव स" । इति । स्मर्यते च **भविष्य-पर्वणि**—"गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः । अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु" इति । कैश्चिदिति आनन्दादिगुणैरित्यर्थः । खण्डनं तूक्तम् ॥ प्रकृतो बहुगुणोपसंहारो विषयः । कर्तव्यो नवेति सन्देहः । नेति प्राप्तम् । अल्पोपसंहारेणैव फलसिद्धौ क्लेशबाहुल्ये प्रवृत्त्ययोगात् । एवं प्राप्ते सिद्धान्तमाह—

**सर्वाभेदादन्यत्रेमे ॥ १०**

युक्त एव ब्रह्मादीनां बहुगुणोपसंहारः । बहुगुणोपसंहारेण तेषां फलातिशयस्वीकारात् । सर्वगुणयुक्तत्वेन उपासनादिमे ब्रह्मादयः अन्यत्रैव फलेऽधिकारिणो भवन्ति । उक्तं च पाद्मे—"संपूर्णोपासनाद्ब्रह्मा संपूर्णानन्दभाग्भवेत् । इतरेऽपि यथायोग्यं सम्यङ्मुक्तौ भवन्ति हि ॥" इति । खण्डन प्राग्वत् ॥

भगवद्गुणा विषयः किं सर्वमुमुक्षूपास्या इयन्त एवेति परिच्छिन्ना न वा । नेति प्राप्तं विनिगमकाभावात् । सिद्धान्तमाह—

**आनन्दादयः प्रधानस्य ॥ ११**

प्रधानस्य मोक्षरूपफलस्यार्थे सर्वैर्मुमुक्षुभिः सर्वथोपास्या गुणाः आनन्दादयश्चत्वारो न त्वधिकाः । "सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता । सर्वेषां च मुमुक्षूणां फलसाम्यादपे-क्षिते"ति **ब्रह्मतर्के** । सत्वं निर्दोषत्वम् । अतस्सर्वोपास्यगुणनिर्णयाद्युक्तमुपासनमिति माध्वाः । खण्डनं प्राग्वत् ॥ ७ ॥

प्रियशिरस्त्वादयः सर्वमुमुक्षूपास्या नवेति संशये सर्वोपास्या इति प्राप्तम् । तेषा-मानन्दादिविशेषत्वादानन्दादीनां सर्वोपास्यत्वस्य पूर्वाधिकरण एव निर्णीतत्वात् । सिद्धान्तमाह—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२

प्रियशिरस्त्वादिगुणोपासना न सर्वैः प्राप्यते फलभेदार्थमुपचयापचययोः भावात् । नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः । विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णतेति **वाराहे** । खण्डनं प्राग्वत् ॥ ८ ॥

आनन्दादिभ्यश्चतुर्भ्योऽधिकगुणाः विरिञ्चेतरदेवादिभिरुपास्या नवेति संशये नेति प्राप्तम् । सर्वमुमुक्षूणां चतुर्गुणोपासनयोग्यताया निर्णीतत्वात् । सिद्धान्तमाह—

## इतरे त्वर्थसामान्यात् ॥ १३

चतुर्भ्यः सर्वेभ्यश्चेतरे मध्यमगुणा देवादिभिरुपसंहर्तव्या एव । न च योग्यताया अनिर्णयः । तत्तत्प्राप्यफलानुरोधेन निर्णयात् फलोपासनयोः साम्यात् । न च वाच्यं भविष्यत्फला-निर्णयेन उपास्तियोग्यतायाः सुतरामनिर्णय इति । तेषां भाव्युत्कर्षं ज्ञात्वा ब्रह्मणोऽन्यस्य वा सर्वस्य गुरोः तदनुसारि गुणनियमोपदेशोपपत्तेः । तथा च श्रुतिः यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ सद्गुणानीशितुश्च । ब्रह्म दिशत्यथ तांस्ते विचिन्त्य तद्भाव प्राप्नुवन्त्यात्म-शक्त्येति । खण्डनं प्राग्वत् ॥

प्रागुक्तौ गुणोपसंहारानुपसंहारौ कार्यौ नवेति संशये नेति प्राप्तम् । प्रमाणाभावात् । ननूपसंहारे विधिरुपन्यस्त इति चेत् अनुपसंहारेऽपि मोक्षस्य उक्ततया व्यर्थस्य विधेरन-वधेयत्वात् । गुणविधानस्योपसंहारार्थकत्वे सर्वगुणानामेकत्रैवोक्तिप्रसङ्गाच्च । यदप्युक्तं प्रकरण-भेदादनुपसंहार इति । तदपि न । प्रकरणेष्वेतावदुपास्यमित्यनुक्तत्वात् । अतः सर्वगुणोपसंहारानु-पसंहारयोरयोगात् नोपासनं युक्तमिति प्राप्ते उपसंहारे प्रमाणं तावदाह—

## आध्यानाय प्रयोजनाभावात् ॥ १४

कर्तव्यस्तावदुपसंहारः सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वात् । आध्या-नार्थं हि सर्वे गुणा उच्यन्ते । प्रयोजनान्तराभावात् । ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणम् । ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽन्यतो हरेः । नान्यत्प्रयोजनं ज्ञानात् ध्यानात् कर्मकृते-रपि । श्रवणाच्चापि पाठाद्वा विद्याभिः किञ्चिदिष्यते इति हि **परमसंहितायाम्** । विद्याभिः ब्रह्म-कर्मविद्याभिः । इह श्रवणपाठौ ध्यानोपयोगितयोक्तौ न तु मुख्यतया । एवं ज्ञानमपि मुख्यं फलम् । न तु ध्यानमेवेत्यवधेयम् । उक्तं हि **बृहत्तन्त्रे**—"गुणास्सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः । नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् । ज्ञानध्यानसमायोगात् गुणानां सर्वशः फलम् । मुख्यं फलं न चान्येन फलं मुख्यं कंचिद्भवेदिति । अन्येन ज्ञानमात्रेण । यद्यपि श्रवणादेः जनलोकादिप्राप्त्यादि फलं भवत्येव । तथापि तन्न मुख्यं फलं; किं तु गौणमिति भावः । न चोपसंहारो निष्फलः । विप्रकीर्णगुणानुपसंहृत्योपासनस्य मुक्तिरूपफले उत्कर्षाभ्युप-गमात् । यावत्सेवा परेतत्त्वे तावत्सुखविशेषतेति **स्मृतेः** । अत एव विशेषफलस्य दौर्लभ्याय नानास्थानेषूक्तिरप्युपपद्यते ।

इत्थमुपसंहारे प्रमाणमुक्त्वा अनुपसंहारे तदाह—

**आत्मशब्दाच्च ॥ १५**

आत्मेत्यवोपासीतेति गुणान्तरव्यावृत्तिपूर्वकमात्मशब्दस्योपासनविधानादनुपसंहारोऽपि सिध्यतीत्यर्थः। ननु द्वितीयाधिकरणे अन्यथात्वं च शब्दादिति चेन्नाविशेषादिति सूत्रे एवकारस्यायोगव्यवच्छेदार्थकत्वमुक्तम्। इह त्वन्ययोगव्यवच्छेदार्थकत्वमिति कथमेकस्यानेकपरतेति चेन्न। निखिलं कर्मकाण्डं कर्मब्रह्मोभयार्थमित्यादिसिद्धान्तयतामस्माकमनेकपरताया इष्टत्वात्। ननु तथापि इहोपसंहारानुपसंहारौ इह विरुद्धत्वादर्थद्वयं विरुद्धमिति चेन्न। प्राप्तेश्च समञ्जसमिति न्यायेनाविरोधात्। तस्मादुपसंहारानुपसंहारौ अपि प्रामाणिकाविति माध्वाधिकरणम्। इह प्रकृताधिकरणस्य आत्मगृहीतिरितरवदित्युत्तराधिकरणानां पर्यालोचनयेत्थं मध्वमत पर्यवस्यति। ब्रह्मोपासनायामधिकारिणः तावदुपास्यगुणभेदेन त्रिविधाः सत्यज्ञानानन्दादिभिः अल्पैः गुणैः मर्त्याः, सम्भूतिवृव्याप्त्यादिभिः सहितैर्भूयोभिर्गुणैरिन्द्रादिदेवताः अखिलैर्गुणैश्चतुर्मुखादयः। देवेषु मर्त्येषु च स्वस्वाभाविकमुक्त्यर्थोपासनीयगुणविशेषोपसंहारानुपसंहाराभ्यां गुणभूयस्त्वाल्पत्वावान्तरगुणभेदैस्त्विति बह्वयोऽधिकारिणः। सर्वान् प्रति तद्योग्यगुणविशिष्टब्रह्मोपासनाभेदानां विधायकमात्मेत्येवोपासीतेति वाक्यम्। तत्र देवेषु मर्त्येषु च यस्य यावद्गुणोपासने योग्यता तं प्रति तावद्गुणविशिष्टं ब्रह्म आत्मशब्दोऽभिधत्ते। एवः तदयोग्यगुणव्यवच्छेदक इति।

**अत्रेदं वक्तव्यम्।** श्लेषप्राणे कवित्वे प्रमिततरतया श्लाघनीये च सूत्रे नानाधर्माविकारश्रुतिसमधिगतानेकसाध्ये च मन्त्रे। एकार्थत्वव्यवस्थात्यजनमनुमतं सर्वमीमांसकानामन्यत्रापीच्छया तद्यदि तव भवति तदा ब्रह्मवाक्येष्वपि स्यात् ॥ न चेष्टापत्तिः विष्णुलिङ्गानां देवतान्तरलिङ्गानां च बलाबलविचारपूर्वकं विष्णुपरत्वमवधारयतां त्वदीयप्रथमाध्यायाधिकरणानामुच्छेदप्रसङ्ग इति दिक् ॥ ४ ॥

प्रकृता भगवद्गुणा विषयः। किमानन्दादयश्चत्वारोऽपि सर्वमुमुक्षूपास्याः उतात्मतत्वमेवेति सन्देहः। आत्मतत्वमेवेति प्राप्तम्। आत्मेत्येवोपासीतेति सावधारणश्रुतेः। सिद्धान्तमाह—

**आत्मगृहीतिरितरवदुत्तरात् ॥ १६**

अत्रानन्दादयश्चत्वारोऽप्युपास्या एव। यतः श्रौतेनात्मशब्देन स्वामित्वमात्रं न गृह्यते किं त्वानन्दादयोऽपि। सत्यज्ञानादिवाक्यात्। तथा चोत्तरत्र श्रुतिः। अत्र ह्येते सर्वे एकीभन्ति इति। अत्रात्मत्वे सर्वेप्यानन्दादयो गुणा अन्तर्भवन्तीत्यर्थः। तथा चानन्दादयः प्रधानस्येति पूर्वोक्तं न विरुध्यत इति माध्वाः। खण्डनं प्राग्वत् ॥ ९ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७

सर्वगुणानामन्वय आत्मशब्दे। अत्र ह्येते इति श्रुतेः। आव्याप्तेरात्मशब्दस्तु परमस्य प्रयुज्यत इति वचनाच्च। आप्लृ व्याप्तेरिति हि सर्वगुणाभिधायकत्वं लभ्यत इति चेत्स्या-देवेत्थं तत्। इयांस्तु विशेषः। ब्रह्मादीन् प्रत्येवात्मशब्दः सर्वगुणान् वक्ति नान्यत्प्रति। एतच्च प्रागेवोपपादितं खण्डितं च ॥ १० ॥

गुणा लौकिका ध्येया अलौकिका वेति संशये अलौकिका इति प्राप्तम्। अलौकिका-नामननुभूतत्वेन ध्यानायोगात्। एवं प्राप्ते सिद्धान्तमाह—

## कार्याख्यानादपूर्वम् ॥ १८

अलौकिकास्तस्य गुणा ह्युपास्याः अलौकिकं मुक्तिकार्यं यतोऽस्येति। मोक्षस्यालौकिक-त्वाख्यानात् फलानुसारिध्यानौचित्याच्चालौकिका एव गुणा ध्यातव्याः। अलौकिकानामपि इन्द्रादिवत् उपदेशोपपत्तेरिति माध्वाः। खण्डनं प्राग्वत् ॥ ११ ॥

गुणोपासनं विषयः स्वानुसारिफलप्रदं नवेति संशये नेति प्राप्तम्। ब्रह्माणीब्रह्मणो-रुपासनस्य तदभावात्। तयोर्हि फलं समविषमं स्थानैक्यस्य गुणतारतम्यस्य च सद्भावात्। नचोपासनं समविषमं संभवति विरोधात्। अतो यथोपासनं फलाभावादितरेत्वर्थसामान्यादित्युक्त-मयुक्तमिति प्राप्ते सिद्धान्तमाह—

## समान एवं चाभेदात् ॥ १९

ब्रह्माण्याः सामान्यतः क्रियोपसंहारोऽस्ति हिरण्यगर्भवदिति। नतु तद्वत् त्रिविक्रमत्वादि-कदाचिदभिव्यक्तक्रिययोपसंहारः पृथक्त्वेनास्ति किंतु नित्यादिक्रान्त्यादिसामान्यक्रियान्तर्भावणैव योग्यस्यैवोपास्यत्वात्। ब्रह्माण्याश्च तदयोग्यत्वात्। तथा चोपासनस्यापि समविषमत्वात् स्वानु-सारिफलं युक्तमेव।

ननु ब्रह्मापि त्रिविक्रमादिक्रियां कथमुपास्ताम्। अनित्यत्वेन ध्यानकाले अविद्यमानायाः तस्याः ध्यानायोगादित्याशंक्याह—

## सम्बन्धादेवमन्यत्रापि ॥ २०

सम्बन्धस्तादात्म्यम् अत्यन्ताभेद इति यावत्। गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यत इत्युक्तेस्त्रिविक्रमादीनां परमात्मस्वरूपात्मकत्वेन नित्यत्वात्तेष्वपि उपसंहर्तव्यत्वं युज्यत इत्यर्थः। गुणास्त्रिविक्रमत्वाद्याः संहर्तव्या न संशयः। विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिक" इति बृहतन्त्रे। तस्मादितरे त्वर्थसामान्यादित्युक्तं युक्तमेवेति माध्वाः। खण्डनं पूर्ववत्॥ आत्मे-त्येवोपासीतेत्यात्मशब्दोक्ता गुणाः सर्वोपास्या नवेति सन्देहे नेति प्राप्तम्। आत्मशब्दस्य सर्वगुणाभि-धायकत्वात्। ननूत्तमाधिकारिणः प्रत्येवासौ सर्वगुणानभिधत्ते नेतरान् प्रतीत्युक्तमिति चेत् सत्यं तथाप्यस्यैतावन्त एव बोधनीया इति प्रातिस्विकनियमस्य दुरुपपादत्वात्। एवं प्राप्ते सिद्धान्तमाह—

**नवा विशेषात् ॥ २१**

नवात्मशब्देन सर्वगुणगृहीतिः अधिकारिविशेषात् । तथा चायोग्यगुणप्रतीतिर्जाताज्जातकल्पा । यस्य यावन्तो गुणा आत्मशब्देन युगपत्प्रतीयन्ते तेन तावन्तो ध्यातव्या इति व्यवस्थोपगमादित्यर्थः ।

**॥ दर्शयति च ॥ २२**

सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां सदेवेति **भाल्लवेय**श्रुतिः स्वयोग्यान् बहून् ब्रवीति युगपत्प्रकाशयतीत्यर्थिका । इममर्थं दर्शयतीति सूत्रार्थः । तस्मादात्मशब्दोक्ता गुणाः सर्वोपास्या इति माध्वाः । खण्डनं प्राग्वत् ॥ १७ ॥

उक्षानु द्यावापृथिवी बिभर्ति । एष हि सर्वेषु लोकेषु भातीत्यादिश्रुतेः प्रकृतभगवद्गुणान्तर्गते सम्भृतिद्युव्याप्ती विषयः सर्वमुमुक्षूपास्ये न वेति संशये उपास्ये इति प्राप्तम् । सर्वेषां मुमुक्षुत्वसाम्यात् । मोक्षे च स्वधर्मभरणस्य प्रकाशव्याप्तेश्च सर्वापेक्षितत्वात् । फलं चोपासनानुसार्येव भवति । यादृशो भावितस्त्वीदृशो जीवोऽभवदित्यादेः । तस्मात् चतुर्गुणोपास्तिनियमो न युक्त इति प्राप्ते सिद्धान्तमाह—

**सम्भृति द्युव्याप्यपि चातः ॥ २३**

अपिशब्दो नञं समाकर्षति । संभृतिद्युव्याप्ती न सर्वोपास्ये किं तु देवाद्युपास्ये । एवं चात इति चकार एवकारार्थो व्यत्यासेन योज्यः । अतश्चेति । अत एव योग्यताविशेषादित्यर्थः । देवादीनामुपास्यास्तु सम्भृतिव्याप्त्यादयो गुणाः । आनन्दाद्यास्तु सर्वेषामन्यथानर्थकृद्भवेत् इति **ब्रह्मतर्के** । अतः सर्वेषां सम्भृत्यादिगुणोपासनाभावान्नोक्तनियम इति माध्वाः । खण्डनं प्राग्वत् ॥ १४ ॥

गुणोपसंहारः कर्तव्यो नवेति संशये नेति प्राप्तम् । व्यर्थत्वात् । न च स्वयोग्यगुणोपसंहारार्थं स इति वाच्यम् । बहुगुणविशिष्टैकविद्ययापि तत्सम्भवात् । तथा च यस्यां विद्यायां बहवो गुणाः श्रूयन्ते सा उत्तमानां इतरा त्वितरेषां भविष्यति किमुपसंहारेण । एवं प्राप्ते सिद्धान्तमाह—

**पुरुषविद्यायामपि चेतरेषां अनाम्नानात् ॥ २४**

कर्तव्यः एव स गुणोपसंहारः । आम्नातसर्वगुणोपास्तियोग्यानामधिकारिणां सत्त्वात् । सर्वगुणानां च क्वाप्येकस्यां विद्यायामनुक्तत्वात् । सर्वविद्योत्तमा हि पुरुषसूक्तविद्या । न च तत्रापि सर्वे गुणाः पठ्यन्ते । उक्तं च **ब्रह्मतर्के**—"सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः । तत्रापि नव सर्वेऽपि तस्मात्कार्यैव संहृति"रिति । न चैवं चतुर्मुखस्य गुणोपसंहारसिद्धावपि तदन्येषां महददल्पगुणाभिधायकविद्याभिरेवोपासनसम्भवादुपसंहारो व्यर्थ एवेति वाच्यम् । संख्यासाम्य-

सम्भवेप्येकस्यामेव विद्यायां स्वापेक्षितगुणोक्तिनियमाभावादतो युज्यत एव गुणोपसंहार इति माध्वाः । खण्डनं प्राग्वत् ॥ १५ ॥

अग्ने त्वं च यातुधानस्य भिन्धि तं प्रत्यञ्चमर्चिषा विद्धि अर्वन् परा शृणीहि तपसा यातुधानानित्यादौ श्रुता भेदनादयो गुणा विषयः सर्वोपास्या नवेति संशये सर्वोपास्या इति प्राप्तम् । दुष्टनिग्रहफलत्वात् । तस्य च सर्वापेक्षितत्वात् । सिद्धान्तमाह—

**वेधाद्यर्थभेदात्** ॥ २५ ॥

वेधादि न सर्वोपास्यं तदुपासनफलभूतायां हिंसायां यत्यादियोग्यफलविलक्षणत्वात् । उक्तं च **बृहत्तन्त्रे** भिन्धिवृद्धिशृणोति इति फलभेदेन सर्वशः । यत्यादीनां तेष्वयोगान्नाधिकारैकता भवेत् । अयोग्योपासनादीयुरनर्थं चानर्थनाशनमिति । शृणीहि जहि भिन्धि इत्याद्येवंरूपेषु उपासनेषु सर्वशो नाधिकारसाम्यं भवेदयोगात् अयोग्यत्वात् । खण्डनं प्राग्वत् ॥ १६ ॥

उपासना मुक्तेन क्रियते नवेति संशये नेति प्राप्तम् । फलाभावाद्विधिबद्धत्वे संसारितापत्तेश्च । सिद्धान्तमाह—

**हानौ तूपासनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्** ॥ २६ ॥

मोक्षेप्युपासनं क्रियत एव । नच विधिबद्धत्वापत्तिः । विनापि विधिं स्वेच्छया उपासनाभ्युपगमात् । श्रूयते वा नियतब्रह्मयज्ञानन्तरमपि कुशैराच्छादनेन स्वेच्छयैव मन्त्रसामाध्ययनं तद्वत् । ननूपासनं चेदस्ति तर्हि तत् अविधित एव किं न स्यादित्यत आह– **शब्दशेषत्वा**दिति । मुक्तस्योपासनं न विधिनिबन्धनं सर्वोपासनाविधीनां मोक्षवाक्यशेषत्वान्मोक्षफलकब्रह्मज्ञानार्थं ये विधयः प्रवृत्तास्ते कथं मुक्तविषयाः स्युरित्यर्थः । मुक्तानामुपासकत्वे प्रमाणमाह–**तदुक्तमिति** । एतत्सामगायन्नास्त इति **श्रु**ताविति भावः । तच्चोपासनं स्वेच्छमित्यपि स्मृतावुक्तं मुक्तावपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः । नियमानन्तरं विप्राः कुशाद्यैरप्यधीयत इति **ब्रह्मतर्के** । कृष्णो मुक्तैरिज्यते वीतमोहैरिति भारते । तथा च मुक्तानां यजनादिकर्माप्यस्ति किमुतोपासनम् ॥ स्यादेतत् । मुक्तस्योपासनं विधिनिबन्धनमेवास्तु । उपासनाविधीनां मोक्षार्थत्वस्येव मोक्षकालोद्भवानिष्टपरिहारार्थताया अपि सम्भवात् । मास्तु वा विध्यधीनं तथापि स्वेच्छयेति कुतः ? अनिष्टपरिहारार्थत्वोपपत्तेः । नहि निष्फले प्रवृत्तिं पश्याम इत्याह—

**साम्पराये तर्तव्याभावात्तथाह्यन्ये** ॥ २७

मुक्तास्योपासनं स्वेच्छयैव न त्वनिष्टपरिहारार्थं तीर्णत्वेन तस्य तर्तव्यानिष्टस्यैवाभावात् । फलाभावेऽपि क्रियेश्वरवदुपपद्यते । तथाह्यन्ये शखिनः पठन्ति—तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति हृदयस्य सर्वहृद्गतस्य विष्णोः शेषभूतो भवतीत्यर्थः । वायुप्रोक्ते

च—स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परात्मनः। ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परंगताः। तीर्णतर्तव्य-भागाश्च स्वेच्छयोपासते परमिति। स्थितप्रज्ञत्वमपरोक्षज्ञानित्वम् ज्ञानेनापरोक्षेण। अतो मुक्तावपि उपासनाप्रवृत्तेः निरुपाधिकं तत्संसारे कर्तव्यमिति माध्वाः। तन्न। मोक्षे अन्तःकरण-धर्मस्य उपासनक्रियादेरसंभवात्। जीवस्वरूपात्मकं तदिति चेन्न, तस्यानादितया इच्छया करोतीति त्वदुक्तिव्याघातात्। मुक्तावप्यनुवृत्तेः निरुपाधिकमुपासनं संसारेपि कर्तव्यमिति त्वदुक्तनिगमन-विरोधाच्च। हृदयस्येत्यत्र रूढ्यर्थपरित्यागश्चायुक्तः। कामः संकल्प इत्यादिश्रुतौ शोकहर्षभयक्रो-धेत्यादिस्मृतौ च मनोधर्मत्वस्यैव स्पष्टतया हृदयस्य शोकमित्येवान्वयस्य न्याय्यत्वात्। शेषभूत इत्यध्याहारे मानाभावाच्च। तरितव्येति च वक्तव्ये सूत्रे आर्षप्रयोगसद्भावेऽपि मध्वादिग्रन्थे तर्तव्येति प्रयोगश्चाव्युत्पत्तिमूलक इति दिक्॥

मुक्ताः उपासनवत् कर्मापि नियमेन कुर्वन्ति नवेति संशये नियमेन कुर्वन्ति इति प्राप्तम्। कर्मणोऽपि भगवत्पूजारूपत्वात्तेषां कर्मकरणे शक्तत्वाच्च। शक्तौ सत्यामपि हि कर्म न कुर्युश्चेद-विशेषादुपासनमपि न कुर्युः। एवं प्राप्ते सिद्धान्तमाह—

## छन्दत उभयाविरोधात्॥ २८

मुक्ताः कर्मकरणे शक्ता अपि स्वेच्छानुसारेण कदाचित्कुर्वन्ति। कदाचिन्न विधि-बन्धाभावात्। अकरणे प्रत्यवायाभावाच्च। एतदेवोपपादयति—

## गतेरर्थवत्त्वमुभयथापि विरोधः॥ २९

बन्धप्रत्यवाययोरभावे हि मोक्षस्य परपुरुषार्थम्। अन्यथा हि संसारसाम्यं स्यात्। नचैवं मुक्तानां कर्मणीवोपासनेप्यनियमः स्यादिति वाच्यम्। स्मृतिविरोधात्। उक्तं हि ब्रह्माण्डे कदाचित्कर्म कुर्वन्ति कदाचिन्नैव कुर्वते। नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम्। तीर्णतर्तव्यभागा ये प्राप्तानन्दाः परत्मनः। प्रत्यवायस्य बन्धस्याप्यभावात्स्वेच्छया भवेदिति कर्माचरणमिति शेषः। युक्तं चैतदित्याह—

## उपपन्नस्तल्लक्षणार्थोपपत्तेर्लोकवत्॥ ३०

कदाचित्कुर्वन्ति नवेत्येवं भावो मुक्तानामुपपन्नः परंपरया कर्मफलस्य मोक्षस्य प्राप्तत्वात्। फलप्राप्त्यनन्तरं साधनोपादाननियमे बीजाभावात्। लोके हि विधिबलाद्विष्णुक्रमादिकं कृत्वा समाप्तकर्मा स्वेच्छया करोति नवेति संशये नेति दृष्टम्। अतो मुक्तस्य कर्मनियामकाभावादुपासनस्य च नियतत्वात्संसारे उपासनमाधिक्येन कर्तव्यमिति माध्वाः। खण्डनं प्राग्वत्॥

मोक्षः सर्वज्ञानिप्राप्यो नवेति संशये नेति प्राप्तम्। ज्ञानिष्वपि केषांचित् मुक्त्ययोग्यत्व-सम्भवात्। अयोग्यस्य च सहकारिसहस्रेणापि कार्यजननायोगात्। सिद्धान्तमाह—

**अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॥ ३१**

ज्ञाने जातेऽपि केषांचिदेव मोक्षः। केषांचित्तु नेत्येवंरूपो नियमो नास्ति। कुतः- **सर्वेषामविरोधात्** न च यथा सर्वेषां न सर्वगुणोपसंहार एवं मोक्षोऽपि नेति वाच्यम्। सर्वेषां सर्वोपसंहाराभ्युपगमे, सर्वे गुणा ब्रह्मणैवोपास्या नान्यैर्देवैः किंमु सर्वैर्मनुष्यैरिति श्रुतिविरोधवत् सर्वज्ञानिनां मोक्षाभ्युपगमे विरोधाभावात्। एवं बाधकाभावमुक्त्वा साधकमाह—**शब्दानुमानाभ्यामिति।** **न** कश्चिद्ब्रह्मवित् मृतिमनुभवति मुक्तो ह्येव भवति। तस्मादाहुः सृतिरेतीति **कौण्डिन्यश्रुतेः।** विप्रतिपन्ना ज्ञानिनः नियतमोक्षाः ज्ञानित्वात्। संप्रतिपन्नवदित्यनुमानाच्चेत्यर्थः। अतो ज्ञानिनां मोक्षस्य नियतत्वं निश्शङ्कमुपासनं कर्तव्यमिति माध्वाः। खण्डनं प्राग्वत् ॥

उपासका आधिकारे नियमविशेषवन्तः नवेति संशये नेति प्राप्तम्। अधिकारविशेषे मानाभावात्। न च मुक्तितारतम्यं तत्र मानं तस्योपासनातारतम्यमात्रेणाप्युपपत्तेः। असिद्धिश्च मुक्तानां तारतम्ये द्वेषेर्ष्यादिदोषप्रसङ्गात्। आनन्दतारतम्यश्रुतेः संसारिविषयतया गतार्थत्वात्। एवं प्राप्ते सिद्धान्तमाह—

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२**

अधिकारिणां यथाधिकारमुपासने व्यवस्थाऽस्त्येव। यथायथाधिकारो विशिष्यते एवं मुक्तावानन्दोऽपि विशिष्यते। मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्यो ऋषीणां ऋषिभ्यो देवानां देवेभ्य इन्द्रस्य इन्द्राद्रुद्रस्य रुद्राद्ब्रह्मणः एष एव हि शतानन्द इति हि **चतुर्वेदशिखायाम्। अध्यात्मे च**—ज्ञानं चोपासनं चैव मुक्तावानन्द एव च। यथाधिकारं देवानां भवत्येवोत्तरोत्तरमिति ॥

ननु मुक्तौ तारतम्ये परस्परविरोधापत्तिरित्यत आह—

**अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३**

मुक्तानामसमत्वेऽपि न विरोधः। तेषां ब्रह्मवित्त्वेन निर्दोषत्वात्। विषयलम्पटत्वादिदोषप्रयुक्तो हि विरोधः। नतु साम्यादिमात्रात्। अविरोधे दृष्टान्तः—औपसदवत्। यवत्। तदुक्तं चतुर्वेदश्रुतौ। नानाविधा देवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः दोषाभावात् गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां मुक्तेरिति। अत एवानन्दतारतम्यश्रुतेरमुक्तिविषयत्वं प्रत्युक्तम्। तथा च स्मृतिः—नरादिब्रह्मपर्यन्तं विमुक्तानां शतोच्छ्रयः। अप्यानन्दे मिथोप्युक्तस्त्वयैर्यूणां श्रुतौ पृथगिति। तस्मादुपासका अधिकारविशेषनियमवन्त इति सिद्धमिति माध्वाः। खण्डनं प्राग्वत् ॥ २० ॥

भगवदुपासकाः प्रकृतास्त एव छान्दोग्ये नामादिप्राणपर्यन्तं तारतम्येनोक्ताः। प्राणादुत्तमो नोक्तः। अत एवोपासकाः प्राणावसाना नवेति संशये नेति प्राप्तम्। प्राणस्योत्तमाधिकारी युक्तः अधिकारित्वान्नामादिवत् इत्यनुमानात्, सिद्धान्तमाह—

**इयदामननात्** ॥ ३४

इयदेव अधिकारिणां प्राणावसानत्वमेव । प्राणो वाव सर्वेभ्यो भूयान् । न प्राणाद् भूयान् । प्राणो ह्येव भूयान् तस्माद्भूयान्नचेति **कौरव्यश्रुतेः** । पूर्वपक्ष्युक्तमनुमानं दूषयति—

**अन्तरा भूतग्रामवदिति चेत्तदुक्तम्** ॥ ३५

भूतसमूहे नामादावेकस्मादेक उत्तमो दृष्टः । तद्वत् प्राणादपि परमात्मानमन्तरा विद्यत इति चेन्न प्राणादुत्तमाभावे हि प्रमाणमुक्तम् । अन्यत्र तु वाग्वाव नाम्नो भूयसीत्याद्युत्तमसद्भावे प्रमाणमस्ति नतु तदभावे । तथा चानुमानं बाधितमित्यर्थः ॥

**अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्** ॥ ३६

प्राणस्य सर्वोत्तमत्वेन परमात्मना सह भेदो न स्यादिति चेन्न । सर्वेभ्यः प्राणस्य प्राणाच्च विष्णोरुत्तमत्वं हि छान्दोग्ये उपदिष्टं; तदनुरोधेन **कौरव्यश्रुतौ** सर्वशब्दस्य विष्णुव्यतिरिक्तसर्वपरतया सङ्कोचनीयत्वादित्यर्थः । खण्डनं प्राग्वत् ॥

विष्णुः प्राणादुत्तमो नवेति संशये नेति प्राप्तम् । छान्दोग्ये प्राणस्यैव सर्वोत्तमत्वेनोक्तत्वात् । ननु प्राणानन्तरमपि एष तु वा अतिवदति यः सत्येनातिवदतीति सत्यपदोदितस्य विष्णोराधिक्यमुक्तम् तत्रेति चेन्न । सत्यपदेन प्राणस्यैवोक्तेः अन्यथा वागादिष्विव प्रकरणान्तरत्वग्राहके प्रश्नप्रतिवचने स्याताम् । अस्ति भगवःप्राणाद्भूय इति च । सत्यं वाव प्राणाद्भूय इति । न च तथा श्रूयते । अतो विष्णोः प्राणादुत्तमत्वाभावात् न सर्वोपास्यतेति प्राप्ते सिद्धान्तमाह—

**व्यतिहारो विंशिषन्ति हीतरवत्** ॥ ३७

व्यतिहारोऽध्याहारः । प्रश्नादेर्विंशिषन्ति खलु । एष तु वा अतिवदतीति तुशब्देन, यथा इतरेषु विशेषणं तथेहापि । अयं भावः—स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवतीति अतिशयितवस्तुवादित्वरूपमतिवादिनः उक्त्वा एष तु वा इत्यादिना सत्याख्यवस्तुवादिनमतिवादिनं वदन् प्राणातिवादिनस्तुशब्देन व्यच्छिनत्ति । अतः प्रश्नाद्यध्याहारेण सत्यस्य प्राणादुत्तमत्वं युक्तमेवेति । उक्तं च **बृहत्तन्त्रे**—"उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् । तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः" इति । अतो विष्णोः प्राणोत्तमत्वात् युक्तम् तदुपासनमिति माध्वाः । खण्डनं तु ध्येयस्य ब्रह्मत्वं त्वद्रीत्यैव विरुद्धमित्यादि प्राग्वत् ॥

प्राणादप्युत्तमोऽस्तीत्युक्तम् । स किं विष्णुरेवोतान्येऽपीति संशये अन्येऽपीति प्राप्तम् । सत्यादप्युपरि विज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मनामुक्तत्वात् । एवं प्राप्ते आह—

**सैव हि सत्यादयः** ॥ ३८

न प्राणादधिका इति युक्तम् । यस्मात्सत्यादयोऽहंकारान्ताः सा ईश्वराख्या परदेवतैव नतु ततो भिन्ना । उक्तं च **ब्रह्मतर्के**—"नामादिप्राणपर्यन्ताद्योधिसत्यादिरूपवान् ।

तस्मै नमो भगवते विष्णवे सर्वजिष्णव" इति । "सत्याद्या अहमात्मान्ता यद्गुणाः समुदीरिताः । तस्मै नमो भगवते यस्मादेव विमुच्यत" इति च अध्यात्मे । तस्माद्युक्तं विष्णोः सर्वोत्तमत्वमिति माध्वः ।

अत्रेदं वक्तव्यम् । समन्वयाधिकरणद्युभ्वाद्यधिकरणभङ्गोक्तरीत्या शिवविरिञ्चावपि इह सत्यशब्देन सुग्रहौ । तथा च पूर्वपक्ष एवेह सुदृढः । नानार्थतायास्त्वन्मतेऽलङ्कारत्वात् । तथा हि (श्लो.) कर्मब्रह्मोभयार्थं सकलमपि खलु व्याकरोः कर्मकाण्डम् ब्रह्मस्वार्थोभयार्थानुपनिषदुदितानप्यतद्वाचिशब्दान् । अन्यांश्चोमादिवागाद्युभयविधपरान् वाङ्मनः प्राणमुख्यान् केन स्याद्वाक्यमर्थत्रयपरममितार्थं च वह्न्यादिसूक्तम् । श्लेषप्राणे कवित्वे प्रमिततरतया श्लाघनीये च सूत्रे नानाकर्मोपयोगश्रुतिसमधिगतानेकबोध्ये च मन्त्रे । एकार्थत्वव्यवस्थात्यजनमनुमतं सर्वमीमांसकानामन्यत्रापीच्छया तद्यदि तव भवति ब्रह्मवाक्येष्वपि स्यात् । इति । इह कर्मेत्यादिना प्रथमचरणेन ज्योतिरुपक्रमादिति माध्वाधिकरणस्यार्थ उपनिबद्धः । प्राणोवा आशाया भूयानिति प्रकरणे प्राणशब्दो द्युभ्वाधिकरणे ब्रह्मपरतया व्यतिहाराधिकरणे मुख्यप्राणपरतया मध्वभाष्ये व्याकृतः । उक्तार्थद्वयपरमिदं प्रकरणमिति च टीकायामुक्तम् । एवंजातीयकान्यन्यान्यपि भूयांस्युदाहरणानि अभिप्रेत्याह—ब्रह्मस्वार्थेति । वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसीत्यादिवाक्ये वाङ्मनः प्राणशब्दानां उत्तरोत्तरस्मिन् लीयमानोमारुद्रहिरण्यगर्भपरत्वं वागिन्द्रियादिपरत्वं च वाङ्मनसि दर्शनादित्याद्यधिकरणे मध्वेनोक्तम् । तदेतदाह—अन्यांश्चेति । स्तुतयेऽनुमतिर्वेत्यधिकरणस्यार्थः केनेत्यादिनोक्तः । अमितार्थं चेत्यादिना तु अङ्गावबद्धाधिकरणार्थ उक्तः ।

स्यादेतत् । स एवाधस्तादित्यादिना सावधारणं सर्वगतत्वमुक्तम् । तदनुरोधादिहैकमेव प्रतिपाद्यम् । अन्यथा अवधारणासंगतेः । अत एवाहङ्कारात्मानावपि भूम्नः स्वरूपमेव इति चेन्न, बोध्यविशेषं प्रति शिवविष्ण्वादीनामेकैकस्यावधारणोपपत्तेः । यथाहुः—यो यस्योपास्तियोग्यः स्फुरति नियमतस्तस्य कर्ता स एवेत्यर्थं तं वा तदैक्यश्रुतिरनुवदतु श्रोतृधीभेदभिन्ने । कूर्मो यस्याल्पभूयोधिकगुणकपरोपास्तियोग्यत्वभाजामात्मेत्येवेत्युपासाविधिरवधृतिमानित्थमर्थं ब्रुवाणः इति । ननु आत्मशब्दाच्चेति सूत्रे यद्यपि बोद्धृभेदेन अर्थभेदः स्वीकृतः तथापि विरुद्धानेकार्थस्वीकारोऽनुचित एव अप्रामाण्यावहत्वादिति चेत्, सत्यं, नात्यनुचितः किं तु त्वया स्वीकृत इत्येव । यथाहुः—पूर्णत्वं ते निमित्तं निरवधिगमनं भूमशब्दस्य वृत्तौ वैकुण्ठे तद्गुणानां तदपि किल ततस्तारतम्येन वेद्यम् । इत्थं वस्तुस्वभावं क्वचिदपि गणयन् बोध्यधीवृत्तिभेदात् भेदः स्यादस्तिवादी यदि तव भवति व्यंसकः कात्र चिन्तेति यस्याधिकारिणो यावत् दर्शने योग्यता तं प्रति तावन्तमेव सातिशयं ब्रह्मानन्दैकदेशं निरतिशयतया भूमशब्दः प्रतिपादयतीति हि त्वन्मतम् । भूमा संप्रसादादध्युपदेशात् भूम्नः क्रतुवज्ज्यायस्त्वं ब्रह्मदृष्टिरुत्कर्षात् नानाशब्दादिभेदात् इत्यादित्वदधिकरणनिष्कर्षेण फलितम् । तथा च सातिशयतया अनुभूयमानं ब्रह्मानन्दैकदेशं भूमत्वेन वेदो बोधयतीति ब्रुवन् भवान् कथं वेदाप्रामाण्याद्बिभीयादित्यर्थः । खण्डनं प्राग्वत् ॥

श्रीरधिकारिणी नवेति संशये अधिकारिणीति प्राप्तम्। साधुत्वे सति संसारित्वात्। न च संसारित्वमसिद्धम्। सीतारुक्मिण्यादिरूपायास्तस्या जन्ममरणादेः प्रसिद्धत्वात्। एवं प्राप्ते सिद्धान्तमाह—

**कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९**

न प्रकृतिरधिकारिणी नित्यमुक्तत्वात्। न च जननमरणादिना संसारित्वसिद्धिः। जननादेरवतारमात्रत्वात्। मूलरूपेण भगवत्समीपे स्थिताया एव तस्याः स्वेच्छामात्रेणावतीर्णत्वात्। न च स्वातन्त्र्यापत्तिः। ईश्वरेच्छानुसारित्वाभ्युपगमात्। तथा च **वत्सश्रुतिः**। सर्वायतना सर्वकाला सर्वेच्छा न बद्धा बन्धिका सैषा प्रकृतिरविकृतिरिति सर्वमिच्छाधीनं यस्याः सा सर्वेच्छा अविकृतिरित्युच्यते न प्रकृतिं व्यावर्तयति।

ननु रमाया असंसारित्वे कृतकृत्यत्वेन भगवदुपासनाऽभावःस्यान्न चासौ युक्तः। 'यदर्चितं ब्रह्मभवादिभिः सर्वैः श्रिया च देव्या मुनिभिश्च सात्वतै"रित्यादिप्रमाणविरोधादत आह—

**आदरादलोपः ॥ ४०**

बन्धाभावेऽपि भक्तिविशेषादेव उपासनाद्यलोपः तस्या आदरो भजनं भक्तिर्बहुमानं च सेवनमित्यभिधानं यथा श्रीर्नित्युमुक्तापि प्राप्तकामापि सर्वदा उपास्ते नित्यशो विष्णुं एवं भक्तो हरेर्भवेदिति **बृहत्तन्त्रे**। नित्यमुक्तत्वे कारणमाह—

**उपस्थिते तद्वचनात् ॥ ४१**

रमाया नित्यमुक्तत्वं युज्यते। अनादिकाले भगवन्तमुपतिष्ठमानायास्तस्याः अतिशयिततत्प्रसादाख्यकारणसद्भावात्। न चात्र मानाभावः। द्वावेतावनादिनित्यौ अनादिनित्ययुक्तौ नित्यमुक्तौ अनादिनौ योयं परमो या च प्रकृतिरित्यादि **गोपवनश्रुति**वचनादित्यर्थः। कृता पूर्णा अतः प्रकृतेरधिकारित्वाभावाद्युक्तं प्राणावसानत्वमधिकारिणामिति सिद्धमिति माध्वाः। खण्डनं प्राग्वत्॥ किंच अनादिप्रकृतिकारणप्रश्नः तदुत्तरं चेत्यादि फल्गुत्वादुपेक्ष्यमेव ॥ २४ ॥

उपासनं समस्तं कर्तव्यं व्यस्तं वेति संशये व्यस्तमिति प्राप्तम्। तथाहि—उपासनं तावत् दर्शनार्थं दर्शनं च श्रवणमनननिदिध्यासनेष्वन्यतमेनैव भविष्यति तत्किं मिळितेन? सिद्धान्तमाह—

**तन्निर्धारणार्थं अनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४२**

युक्तमेव समस्तोपासनं च तथाहि—परोक्षं ज्ञानं श्रवणस्य फलं, अयमेव वेदार्थो नान्य इति निर्णयस्तु मननस्य तदुभयं च ब्रह्मदर्शनात् पृथग्भूतमेव प्रतिबन्धाभावसम्पादकं च। अज्ञान-

संशयविपर्यया: खलु भगवद्दर्शनस्य प्रतिबन्धका: । तत्र श्रवणं तत्त्वज्ञानमुत्पादयदज्ञानं निवर्तयति मननं च वेदार्थनिर्णयं कुर्वत्संशयविपर्ययौ निवर्तयति । ध्यानं तु दर्शनहेतुरिति समस्तोपासनं विना नाभिमतसिद्धिः । उक्तं च **ब्रह्मतर्के** श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनमिति । खण्डनं तु माध्वमते भगवत्प्रसादस्य स्वरूपात्मकत्वात्तद्द्वारकफलं दुरुपपाद-मित्यादि प्राग्वत् ॥ २५ ॥

प्रकृतं श्रवणादि विषय: किं यथा कथं चिदनुष्ठितं ज्ञानसाधनमुत गुरुप्रसादपूर्वक-प्रदानमिति सन्देह: । यथाकथंचिदनुष्ठितमिति प्राप्तम् । द्रष्टव्य: श्रोतव्य इत्यादिविध्यर्थस्य ताव-तैव निर्वाहात् । सिद्धान्तमाह—

**प्रदानवदेव तदुक्तम्** ॥ ४३

न श्रवणादिमात्रं ज्ञानसाधनं किं तु प्रसादपूर्वकगुरुप्रदानयुक्त एव इतिकर्तव्यता श्रवणादे: गुरुप्रदानं आचर्यवान् पुरुषो वेदेति श्रुते: । अत एव गुरुशापस्य ज्ञानादिह्रासहेतुत्व-मपि स्वीक्रियते । उक्तं च ज्ञानिनो गुरुशापेपि नामुक्ति: संसृते: क्वचित् । आनन्दह्रासदोषेण सैव मुक्ति: विदुष्यपि । ये ज्ञानविषया: शापा मुक्तिगाश्चाधिकारिणि । कादाचित्कास्ते भवन्ति नैव ते सार्वकालिका: । तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि । भगवन्नियतत्वात्तु शापादि-र्नात्र कारणमिति शापस्यापि ज्ञानमुक्त्योर्ह्रासमात्रप्रयोजकत्वम् । न तु तद्विघटकत्वम् । ज्ञान-मोक्षयोरीश्वरकल्पितत्वादिति भाव: । तस्माद्गुरुप्रसादस्यावश्यकत्वाद्युक्तमिति माध्वा: । खण्डनं प्राग्वत् । किं च ह्रासादिववसां परममुक्तिपरत्ववर्णनमयुक्तमेव तेषां गौणमुक्तिविषयत्वादिति दिक् ॥ २६ ॥

प्रकृतं गुरुप्रसादपूर्वकं श्रवणादि विषय: किं तन्मध्ये गुरुप्रसादो बलवान्—उत श्रवणादिरूप: शिष्यप्रयत्न: किंवा द्वयमपि सममिति विशये शिष्यप्रयत्न एव बलीयानिति प्राप्तम् । इतिकर्तव्यतापेक्षया साधनस्याभ्यर्हितत्वात् । अस्तु वा द्वयो: साम्य पुरुषव्यापारत्वाविशेषात् । गुरुशिष्ययो: पुरुषत्वाविशेषात् । अतो गुरुप्रसादस्याप्रबलत्वान्नावश्यकतेति प्राप्ते सिद्धान्तमाह—

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि** ॥ ४४

गुरुप्रसादपूर्वकमेव प्रदानं ज्ञानसाधने बलवत् । न त्वधमं नापि समं तत्प्राबल्ये लिङ्गबाहुल्यदर्शनात् । उपनिषत्सु हि बहुशो गुरुप्रार्थनादिकं दृश्यते । न चैवं तावतैव कृत-कृत्यत्वं मन्तव्यं श्रोतव्य इत्यादे: श्रवणस्याप्यावश्यकत्वात् । उक्तं **च वाराहे**—गुरुप्रसादो बलवान् न तस्माद्बलवत्तरम् । तथापि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये । इत्यादि । न चेतिकर्तव्य-तात्वेन दौर्बल्यं, यज्ञीयहिंसादौ इतिकर्तव्यताया एव प्राबल्यदर्शनात् । अतो गुरुप्रसादपूर्वक-प्रदानस्य प्राबल्यात्तदवश्यापेक्षितमिति सिद्धं इति माध्वा: । अत्र बलाबलचिन्तैवायुक्ता । विरोधा-

भावात्। सिद्धान्तश्चायुक्तः। लिङ्गभूयस्त्वस्य श्रवणेऽपि तुल्यत्वात्। आवश्यकत्वाविशेषाच्च। इह जयतीर्थस्य शब्दाशुद्धिःमीमांसानभिज्ञत्वं चेक्षत्यधिकरणस्य शब्दादेवेत्यधिकरणस्य च भङ्गे प्रपञ्चितमिति दिक्॥ गुरुः किं पूर्वप्राप्त एवेति नियमः उत तं त्यक्त्वाऽन्योऽपि ग्राह्य इति संशये नियम इति प्राप्तम्। कष्टपरित्यागे कारणाभावात्। गुरुमन्त्रपरित्यागे रौरवं नरकं व्रजेदिति निषेधाच्च। एवं प्राप्ते सिद्धान्तमाह—

**पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत्॥ ४५**

पूर्वेण गुरुणा सहोत्तरस्य विकल्पः। उत्तरश्च पूर्वेण समोऽधिको वा। यदि समग्रानुग्रहं कुर्यात्तर्हि स्वीकार्यः। नाधमः। विकल्पे दृष्टान्तः क्रियामानसवत् मानसक्रियावदित्यर्थः। यथा समयोर्ध्यानयोर्विकल्पस्तथेति यावत्। पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि। गृह्णीयादविचारेण विकल्पः समयोर्भवेत्। समग्रानुग्रहाभावात् सत्यकामः स्वयंगुरुं ऋषभानुज्ञया चैव प्राप तस्माद्धि युज्यते इति **बृहत्तन्त्रे**। समग्रानुग्रहः कश्चित्स्वयमेव समो यदि। कुर्यात्पुनश्च गृह्णीयादविरोधेन कामतः। ध्यानयोः समयोर्यद्वद्विकल्पः कामतो भवेत्। एवंगुरोर्द्वितीयस्य विकल्पो ग्रहणेपि चेति **महासंहितायाम्**। यदि पूर्वस्मादुत्तमो विचारेण स्वीकार्यः तर्हि सत्यकामेन कथमृषभादयो न गृहीता इत्यत उक्तम् **समग्रेति**। न यस्य कस्यचिदुत्तमत्वमात्रेण ग्रहणं, किं तु समग्रानुग्रहकर्तुरेव ऋषभाद्याश्च न तथेति भावः। साम्ये पूर्वानुज्ञापेक्षितेति भावेनाह—**अविरोधेनेति**। पूर्वानुज्ञयेत्यर्थः। पूर्वपक्षोदाहृतनिषेधवचनं तु अधमस्वीकारविषयं व्यर्थस्वीकारविषयं अनुज्ञाभावविषयं वेति बोध्यम्। हेत्वन्तरेण समोत्तमगुरुस्वीकारं समर्थयितुं सूत्रान्तरम्—

**अतिदेशाच्च॥ ४६**

पूर्वगुरुणैव समोत्तमगुरुस्वीकारायातिदेशः कृतः। ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणुहि तत्त्वामवतु यथाब्रह्मोपचारेर्यथा मामुपचरेर्ये चान्ये चास्मद्विधाः श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणुहि ते त्वामवन्तु इति **पौष्याणश्रुतिः**। श्रेयसः श्रेयांसः। अनन्तसर्वज्ञगुरुस्वीकारस्य उपपन्नत्वाद्भाविफलानुसारिणोपासनं युज्यत इति माध्वाः। खण्डनं तूक्तम्। इह पूर्वतन इति तत्त्वप्रकाशिकायां पश्चात्तन इति मध्वभाष्ये अपशब्दः पूर्वशब्दस्यानव्ययतया पश्चाच्छब्दस्य च दक्षिणापश्चादित्यपवादकल्यव्विषयतया टयुट्युलोरयोगादिति दिक्॥ २८॥

श्रवणादिकं कर्तव्यं नवेति संशये नेति प्राप्तम् वैयर्थ्यात् न च ज्ञानार्थं तत्। कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिना कर्मण एव मोक्षजनकत्वोक्तेर्ज्ञानस्यापि व्यर्थत्वात्। सिद्धान्तमाह—

**विद्ययैव तु निर्धारणात्॥ ४७**

तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति निर्धारणाद्विद्ययैव मोक्षः। तदथ च श्रवणादिक कर्तव्यमेव।

## दर्शनाच्च ॥ ४८

न केवलं विद्यया किन्त्वपरोक्षज्ञानेनैव। सर्वान् परो मायया यं सनीते दृष्ट्वैव तं मुच्यते नापरेणेति **कौशिकश्रुतेः** । तथा च साक्षात्कारादिति श्रुतेरिति च द्वेधा सूत्रव्याख्यानं बोध्यम् । खण्डनं तु मध्वमते ज्ञानफलं दुरुपपादम् । प्रमादात्मकत्वाद्बन्धस्येत्यादि प्राग्वत् ॥ २९ ॥

मोक्षो ज्ञानसाध्यः कर्मसाध्यो वेति संशये कर्मसाध्य एवेति प्राप्तम् । कर्मणैवेति वचनस्य भगवद्वाक्यत्वेन तमेवेत्यादिश्रुत्यपेक्षया प्राबल्यात् । सिद्धान्तमाह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९

मोक्षो ज्ञानसाध्य एव । न चैवं प्रमाणान्तरबाधः । ज्ञानसाधनताग्राहकश्रुत्यादीनां बलीयस्त्वात् । तथाहि—तमेवेत्याद्याः श्रुतयोऽत्र प्रमाणम् । कर्मणा बध्यते जन्तुरिति वचनं च कर्मणैव हि इत्यनेन पूर्वपक्षोदाहृतेन समबलं भगवद्वाक्यत्वाविशेषात् । प्रत्युत न्यायोपष्टम्भादिदमेव प्रबलं उत्पत्तिविनाशवत्फलवत्तया अवधृतस्य कर्मणो नित्यपुरुषार्थजनकत्वायोगात् । तस्मात्कर्मणैवेति कर्मणा मोक्षे अतिशयो भवतीत्येवंपरम् । अतो ज्ञानस्यैव मोक्षसाधनत्वमिति माध्वाधिकरणशरीरम् ।

अत्रेदं वक्तव्यम् । पूर्वपक्षस्तावद्दुर्बलः । संसिद्धिपदस्य ज्ञानपरतयाऽनुपपत्तिः । सिद्धान्तश्चासङ्गतः । मोक्षस्यानादितया त्वन्मते ज्ञानसाध्यत्वायोगात् । तत्त्वे वा कर्मणो जनकताया दुर्वारत्वापत्तेः । न ह्यकारणोत्कर्षं अकार्यमनुविधत्ते इति न्यायात् । तथा चेहैव त्वयोक्त मोक्षस्यानादित्वं भज्येतेति दिक् ॥

ज्ञानं भगवद्भक्त्यादिसापेक्षं न वेति संशये नेति प्राप्तम् । गुरुप्रसादमात्रेण ज्ञानसम्भवात् । सम्यग्लक्षणसम्पन्नो यद्दद्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवति तत्सर्वं नात्र संशय इति वचनात् । न चैवमुपासनमपि मास्त्विति वाच्यम् । ज्ञानस्य तदन्वयव्यतिरेकदर्शनात् । न च भक्तिं विना उपासनमेव न भवतीति वाच्यम् । द्वेषेणापि ध्यानसम्भवात् । स्मर्यते हि द्वेषाच्चैद्यादयो नृपा इति । अतो गुरुप्रसादसहितोपासनेनैव ज्ञानोपपत्तेर्व्यर्थं भक्त्यादि । तथाचातीतपादोऽनुपपन्न एवेति । एवं प्राप्ते सिद्धान्तमाह—

## अनुबन्धादिभ्यः ॥ ५०

यद्यपि गुरुप्रसादः प्रबलः तथापि भक्त्यादिना विना स एव न सिध्यति तद्व्यतिरेकेण साध्यसिद्धेश्च द्वेषमूलकध्यानस्यानर्थहेतुतया श्रुतिस्मृत्यादिसिद्धत्वात् । द्वेषान्मुक्तिवर्णनं तु भगवतः कृपालुत्वातिशयतात्पर्यम् । उक्तं चानुव्याख्याने—यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकं प्रोक्तस्यान्यस्य कृत्यर्थं वदत्येवं पुराणगमिति । अनुबन्धस्तु भक्तिःस्यात् बन्धःस्नेह उदाहृत इत्यभिधानात्

तस्मादपेक्षिता भक्त्यादयः। उक्तं च **नारायणतन्त्रे**—सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः। यद्गुरुस्सुप्रसन्नस्सन् दद्यात् तत् तं नान्यथा भवेत् ॥ तथाप्यनादिसंसिद्धभक्त्यादिगुणयोगतः। लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेदिति। भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नता। दया-शमदमादिश्च ते नचैते गुणाः पुनः। तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेदिति च ॥ तथापीति भक्त्याद्यपेक्षितमिति शेषः। तर्हि भक्त्यादिकं व्यर्थमित्यत आह—**तस्मादिति**। यदनादिसिद्ध-मव्यक्तं भक्त्यादि तेन गुरुप्रसादितेन, गुरुप्रसादितेन च भक्त्याद्यभिव्यक्तिः। अभिव्यक्तभक्त्या दिना च ज्ञानमित्यर्थः। एतदेव स्पष्टयति—**भक्तिरिति**। अतो भगवद्भक्त्यादेः ज्ञानार्थमपेक्षि-तत्वात् ज्ञानं भक्त्यादिसापेक्षमिति सिद्धमिति माध्वाः।

अत्रेदं वक्तव्यम्। अनादिसिद्धेनाव्यक्तेन भक्त्यादिना गुरुप्रसाद इत्यनुपपन्नम्। अनादिसिद्धत्वादेव तस्याननुष्ठेयत्वात्। गुरुप्रसादेन भक्त्याद्यभिव्यक्तिरित्यप्यसत्। अभिव्यक्तेरपि त्वन्मते मोक्षकालानुवृत्तितया स्वरूपात्मकत्वात्। त्वया तदा जीवे जन्यधर्मानभ्युपगमाच्च। अनुव्याख्याने च मरेत्यपशब्दः शदेः शित इति सूत्राच्छित इत्यनुवर्तमाने म्रियतेर्लुङ्लिङोश्चेति सूत्रेणात्मनेपदविधानात्। तौदादिकत्वेन शवनुत्पत्तेश्चेति दिक् ॥

भगवद्दर्शनं सर्वेषां एकप्रकारमुतानेकप्रकारमिति संशये एकप्रकारमेवेति प्राप्तम्। "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति भक्त्यादिजन्यस्य संपूर्णज्ञानस्यैव मोक्षसाधनताश्रवणात्। सिद्धान्तमाह—

**प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॥ ५०**

दृष्टिर्भगवद्दर्शनम्। अनेकप्रकारकं उपासनादिसाधनवैलक्षण्यादिति भावः। तच्चोक्तं **कमठश्रुतौ** अन्तर्दृष्टयो वहिर्दृष्टयोवतारिदृष्टयस्सर्वदृष्टय इति देवा वाव सर्वदृष्टयः तेषु चोत्तरोत्तरमा-ब्रह्मणोऽन्येषु यथायोग्यं यद्ब्राह्मा चार्या आचक्षत इति। अध्यात्मे च—दृष्ट्वैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा। न दर्शनेनान्तरेणान्ये देवाः सर्वत्र दर्शनात्। तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गत इति। श्रुत्यर्थस्तु सर्वदृष्टयः व्याप्तदर्शिनः अन्येषु अवतारादिदर्शिषु योग्यतैव कथं ज्ञायता-मत आह—तथाहीति। अज्ञाने विशेषसद्भावात् युक्तं मोक्षे तारतम्यमिति माध्वाः। तन्न; विष्णुः सकलः स्वगतभेदशून्य इति त्वत्सिद्धान्तात्। विशेषशब्दस्य स्वरूपमात्रपर्यवसायित्वात्। कमठश्रुत्यादेश्च कल्पितत्वादिति दिक्।

भगवद्दर्शनं विषयः किं यत्किंचिद्रूपविषयं मुक्तिसाधनं उत बिंबरूपविषयकमेवेति संशये यत्किंचिद्रूपविषयकमेवेति प्राप्तम् ब्रह्मविदाप्नोति परमित्युक्तेः साधारणत्वात् सिद्धान्तमाह—

**न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ५१**

न भगवद्रूपाणां सामान्यतो दर्शनेन मुक्तिः किंतु मृत्युविशेषात् एवं भगवद्रूपाणां साम्येपि रूपविशेषज्ञानमेव मोक्षसाधनमिति भावः। तथा च श्रुतिः—समोक्षेऽपि भगवान् स्वस्वबिंबदर्शन-

एवैनं मोचयतीति सामान्यदर्शनाल्लोका मुक्तियोग्यात्मदर्शनादिति **नारायणतन्त्रे** । मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यतेति । दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केन चिदिति चाध्यात्मे । लोका इति महदादयः । तत्प्राप्तिर्न तु मुक्तिरिति भावः । अतो बिंबदर्शनस्यैव मुक्तिहेतुत्वाद्बिंबमेवावश्य-मुपास्यमिति सिद्धमिति माध्वाधिकरणम् । खण्डनं प्राग्वत् । किं च बिंबमुपास्यमित्यसङ्गतम् । तथान्यत्प्रतिषेधादिति त्वदधिकरणविरोधात् । ननु उपास्यस्य बिंबादन्यत्वमस्तु स्वप्नमनोरथध्यानादौ पदार्थोत्पत्तिरिति माध्वसिद्धान्तात् । तथापि तदुपासनमेव बिंबोपासनं । तदुपासनं च भवति प्रतिमोपासनं यथेति वचनस्य प्रागेवोदाहृतत्वात् । सादृश्यद्वारकपरंपरासम्बन्ध एव नियामक इति तदभिप्रायादिति चेत् । स्यादेवम् यदि स्वप्नादौ सृष्टिः स्थापयितुं शक्येत न च संभवतीत्युक्तम् । अपि च ज्ञेयध्येययोः सम्बन्धः कृत्यः । बिम्बाधाराणां तेन सहात्यन्ताभेदतया तत्स्वरूपात्मकस्य सादृश्यस्येतरत्रायोगात् । किं च ध्यान इव श्रवणमननयोरपि पदार्थान्तरापत्तिरिति दिक् ।

ज्ञानं किं भक्तिमात्रेण भवति उत परमात्मप्रसादादिति संशये भक्त्यैवेति प्राप्तम् । भक्तिरेवैनं नयति भक्तिवशः पुरुषो भक्तिरेव भूयसीति **माठरश्रुतेः** । एवं प्राप्ते आह—

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२

न भक्त्यैव तत्सिद्धिः । किं तु परमात्मप्रसादात् । भक्तिस्तु करणं एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामेति श्रुतेः । एतैः प्रवचनाद्युपायैः यो दर्शनार्थं यतते तस्यार्थे तैः प्रसन्नः परमात्मा ब्रह्मधाम वायुं विशति तत्राविर्भवतीत्यर्थः । **मायावैभवे चोक्तम्**— भक्तिरथः परमो विष्णुः तयैवैनं वशं नयेत् । तयैव दर्शनंयातः प्रदद्यान्मुक्तिमेतया ॥ स्नेहानुबन्धो यस्मिन् बहुमानपुरस्सरः । भक्तिरित्युच्यते सैव करणं परमेशितुरिति ॥

तथा च भक्तेरावश्यकत्वेन करणस्यापि कर्तृव्यपदेशः । हन्ता रामशरवत् इति माध्वाधिकरणम् । खण्डनं प्राग्वत् । भगवतः स्वातन्त्र्यस्य द्वितीये समर्थितत्वात् गतार्थता चेति दिक् ॥ २ ॥

उपासनं योग्यतासापेक्षं नवेति संशये नेति प्राप्तम् । योग्यता हि भवन्ती अनादिरेव भवेत् । न च तद्युक्तम् । इन्द्रादिजीवांशानामर्जुनादिजीवांशानामुत्पत्तिमत्त्वेन तद्धर्मस्यानादित्वा-योगात् । न चांशिनोऽनादितया अंशस्यापि तथात्वमिति वाच्यम् । अंशांशिनोः पृथक्त्वात् । अन्यथा सेव्यसेवकभावादिकं न स्यात् । एवं प्राप्ते आह—

## एक आत्मनः शरीरे भावात् ॥ ५३

अंशोंशी चेत्येक एव । अंशिकर्मनिर्मितशरीर एवांशस्य भावात् । न च भेदे तद्युक्तम् । ननूक्त विरुद्धधर्माध्यासात् भेद इति तत्राह—

**व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५४**

यथांशांशिगतस्य मानदुःखादेर्व्यतिरेकस्तथांशांशिनोः विभेद एवेति न वाच्यम् । अंशगतज्ञानादेरंशिनानुसन्धीयमानत्वात् । अंशिगतस्यांशेन सर्वस्याननुसन्धानमीश्वराचिन्त्यशक्त्या युक्तम् । उक्तं **परमसंहितायां**— अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा । पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणेति । अतोऽस्येव सर्वेषामुपासनादावनादियोग्यतापेक्षेति युक्ता तद्व्यवस्थेति माध्वाधिकरणम् ।

अत्रेदं वक्तव्यम् । अणोरिन्द्राख्यस्य अर्जुनाख्यस्य च युगपत्स्वर्गभूम्यादिविरुद्ध-देशावस्थानादिकं युक्तिसहं नेति तावत्तवापि संमतम् । यतो भगवद्भक्तिमेव शरणीकरोषि । एवं च तथैव सर्वसमाधाने जीवब्रह्मणोरप्यभेदं श्रुतिस्मृत्यादिसिद्धंकिमिति न रोचयेः । तत्रहि विरुद्धधर्माध्यासं भेदे हेतुं **करोषि** । तथा चांशांशितामापन्नेषु पार्थशक्रादिषु स्फुटव्यभिचारेण हेतुना जीवब्रह्मभेदं साधयतो महती तार्किकता । किं च तस्यैव कर्मणा पुनरैक्यं प्रपद्यन्ते इति रिक्तं वचः । ऐक्यस्य स्वरूपात्मकत्वे अनादितया तत्र कर्मणेति करणस्यानन्वयादिति दिक् ॥

भगवदुपासनं विषयः किं केवलं कर्तव्यं किं वा यथायोग्याङ्गदेवतोपासनयुक्तमिति संशये केवलमिति पूर्वःपक्षः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ । पूजयेन्नान्यदेवता इत्यादेः । सिद्धान्तमाह—

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५**

ब्रह्माद्यङ्गदेवताबद्धोपासनादि प्रतिशाखं प्रतिदेवं च नोपसंहर्तव्यम् । यावदाम्नातं तावता तुसाहित्यमस्त्येवेत्यर्थः । उक्तं च **ब्रह्मतर्के**—समत्वादुत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् । उप-संहार्यमित्याहुः वेदसिद्धान्तवेदिन इति । उपसंहारे विशेषमाह—

**मन्त्रादिवद्वाऽविरोधः ॥ ५६**

यथा अग्न्याद्यधमदेवताविषयमन्त्रविद्यादिकं ब्रह्माद्युत्तमदेवताविषयत्वेन विधीयते । उत्तमानां प्रतिपाद्यत्वात् । एवमधमगुणानां उत्तमेषूपसंहारो युक्त एव । न तु विपरीतम् । उक्तं च **बृहत्तन्त्रे**—उपासनाङ्गदेवानां परमाङ्गतया भवेत् । उपसंहृतिशेषेषु फलानामन्यथा न तु । पुरुषाणां विशेषाद्वा यथायोगं भविष्यतीति । **परमाङ्गतयेति** । पूजयेन्नान्यदेवता इत्यादि तु प्राधान्येन पूजयेदित्येवंपरमिति भावः । फलानां विशेषे अतिशयितफलार्थमित्यर्थः । पुरुष-विशेषः उत्तमाधिकारित्वं यथायोगं योग्यानुसारेण । अतो यथायोग्यं गुणानुपसंहृत्याङ्गदेवता अप्युपास्याः । उपसंहारश्च स्वाधमदेवतागुणानामुत्तमाखु न विपरीतमिति माध्वाधिकरणशरीरम् । खण्डनं तु अग्न्याद्युपासनस्य मोक्षजनकत्वे मानाभावः । तमेवैकं इति श्रुतिविरोधः । उपसंहारश्च निर्मूलः । मोक्षे तारतम्यं वायुकम् । वह्न्यादिसूक्तानां इन्द्राद्यनेकपरत्वं चासङ्गतम् । नह्यत्र

ऐन्द्रया गार्हपत्यमित्यादिवत् अन्यपरतया स्फुटप्रतीतस्यान्यत्र विनियोजकं श्रुत्यादिषट्कमध्ये किंचिदस्ति । त्वदुदाहृतब्रह्मतर्कादिवचसां त्वन्मात्रसंमतत्वात् । न्यायविरुद्धत्वाच्चेति दिक् ॥ २६ ॥

यो वै भूमेत्यादौ श्रुतोभूमगुणोविषयः । सर्वोपास्यो नवेति संशये नेति प्राप्तम् । वैयर्थ्यात् । आनन्दादिकं हि सर्वाधिकारिणामिष्टत्वादुपास्यम् । भूमत्वं तु निरतिशयत्वापरपर्यायं न कस्यापीष्टम् । न च भूमत्वस्यानन्दत्वादिविशेषणत्वात्सर्वोपास्यत्वं युक्तम् । विशेषणत्वेऽपि प्रियशिरस्त्वादीनां फलानुपयोगित्वेन अनुपास्यतया भूमत्वस्यापि तथोचितत्वात् । अतो भूमत्वस्य सर्वोपास्यत्वाभावाल्लौकिकतयोपासनमिति प्राप्ते सिद्धान्तमाह—

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७

सर्वैरप्युपास्यो भूमगुणः । सर्वगुणेषु तस्य ज्यायस्त्वात् यथा खलु दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यात् । अन्यथा वैफल्यात् ज्यायस्त्वं ततश्च सर्वैः कर्तव्यम् । तथा च भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनोपासन एवेष्टसिद्धेः । तथा च **गौपवनश्रुतिः** । भूमैवदेवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते । तस्माद्भूमा गुणतो विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्ट इति । देवः सर्वैर्भूमत्वेनोपास्यः कुतः भूमा गुणतो गुणराशितो यतः क्रतुवद्विशिष्टः यस्माद्भूमैवोपासितः फलं विधत्ते नैवाभूमा तस्मादित्यर्थः । अतस्सर्वैरानन्दाद्याः पूर्णत्वेनैवोपास्या इति न लौकिकतयोपासनमिति माध्वाधिकरणम् । अत्र क्रतुवदिति सूत्रांशस्य विवरणार्थं दीक्षाप्रायणीयेत्यादि यन्माध्वादिभिरुक्तं तन्मीमांसानध्ययनविजृम्भितमिति शब्दादेव प्रमित इति माध्वाधिकरणखण्डने प्रपञ्चितम् ॥ २७ ॥

प्रकृतो भूमगुण एव विषयः । अधिकारिणामुपासने तारतम्येन प्रतीयते एकप्रकारेण वेति सन्देहः । एकप्रकारेणेति प्राप्तम् । भूमत्वे विशेषकल्पनायोगात् । नहि केषांचित् सम्यक् पूर्णानन्द इति केषांचित् किञ्चित्पूर्णानन्द इत्युपासनं युक्तं तथात्वे मिथ्योपासनप्रसङ्गात्सिद्धान्तमाह—

## नाना शब्दादिभेदात् ॥ ५८

भूमत्वमुपासने अधिकारिणां नानाप्रकारेणैव प्रतीयते शब्दादीनां प्रमाणानां अधिकारिभेदादनेकधा एकैकार्थप्रतीतिजनकत्वात् । नानोपसनाच्च फलतारतम्यमुपपद्यते । उक्तं च **ब्रह्मतर्के**—शब्दोऽनुमा तथैवाक्षो योग्यताभेदतस्सदा । ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥ अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते । अतःफलस्य नानात्वं नानैवोपासनं यतः । इति । नच भूमत्वे विशेषानुपपत्तिः । अतीतवत्सराणां क्षणानां चानन्त्येऽपि विशेषदर्शनात् अन्यनिषेधान्नान्यथोपासनम् । अतो भूमत्वदृष्टावधिकारिणां विशेषसद्भावाद्युक्तं तारतम्यमिति माध्वाधिकरणम् । तन्न । वेदाप्रामाण्यप्रसङ्गात् । तथाहि—प्रकृताधिकरणस्य भूमा संप्रसादादध्युपदेशात् । भूम्नः क्रतुवज्ज्यस्त्वं ब्रह्मदृष्टिरित्यादित्वदधिकरणानां च निष्कर्षेण त्वन्मतमित्थं फलति ।

यो वै भूमा तत्सुखमितिश्रुतौ भूमशब्दस्तावत्सर्वेषां मते ब्रह्मपरः। मध्वमते त्वयं विशेषः। बहोर्लोपो भू च बहोरिति भावे निष्पन्नोपि भूमशब्दो योवै भूमा तदमृतमित्यादिषु बहुधा प्रयोगाद्धर्मिणि रूढः। तस्य ब्रह्मणि प्रवृत्तिनिमित्तं तु अवधिविशेषगुणनिरपेक्षत्वं पूर्णत्वं न त्वस्मादेव अयं पूर्ण इति प्रतियोगिविशेषापेक्षं प्रकरणोपपदादिसंकोचाभावात्। नामवागाद्युत्तरोत्तरोत्कृष्टनिरूपणे चरमकक्ष्यापन्नत्वान्नाल्पे सुखमस्तीति निरुपपदेनाल्पपदेन सर्वस्याप्यल्पत्वप्रतियोगित्वेन निर्देशाच्च। तत्तु निरवधिकं पूर्णत्वं न धर्मिण एव परममहत्वरूपं, किं तु तत्तद्गुणानामानन्दादीनां निरतिशयरूपं वाग्वाव नाम्नो भूयसीत्यादौ वैफल्यरहितेषु वाक्संकल्पध्यानादिष्वपि तत्तत्प्रकरणे भूमशब्दसमानार्थभूयश्शब्ददर्शनेन अत्रापि तदैकरूप्याय गुणतो वैफल्यस्यैव तथात्वौचित्यात्। तच्च पूर्णत्वं सर्वेषामधिकारिणां नैकप्रकारेण श्रवणमननध्यानसाक्षात्कारेषु प्रतीयते। किं तु तत्तद्योग्यतानुसारिणा तारतम्येन। नच पूर्णत्वे तारतम्यासम्भवः। आनन्त्येनैव तदुपपत्तेरिति। तत्रेदमुच्यते— इयत्तापरिच्छेदराहित्यमात्ररूपे आनन्त्ये तारतम्यमस्तु नाम। निरतिशयसर्वोत्तमत्वसर्वोत्कृष्टत्वापरपर्यायतया तेष्वधिकरणेषु त्वयोद्घोषिते भूमब्रह्मशब्दयोः प्रवृत्तिनिमित्ततया त्वदभिमते ब्रह्मानन्दादीनां पूर्णत्वेतु न तत्संभवति। निरतिशयत्वादिस्वरूपव्याघातात्। नहि तारतम्यशालिनः ते निरतिशयाः सर्वोत्तमा इति च युज्यते। तेषु यस्य यदपेक्षया निकर्षस्तस्य तेन सातिशयत्वस्योत्तमत्वस्य चावर्जनीयत्वात्। तस्मात् परब्रह्मानन्दैकदेशान् सातिशयत्वेनाभूम्नएव भूमरूपतया तत्तदधिकारिणं प्रति भूमशब्दः प्रतिपादयतीति त्वया वक्तव्यम्। ननु सातिशयत्वोक्तिस्तु सातिशयत्वेन मयि ब्रह्मानन्दैकदेशानां वा भूमरूपत्वमस्तु वागादीनां भूयस्त्ववत्। भूमशब्दस्य निरतिशयवाचकतास्तु अशेषविशेषसहितब्रह्मानन्ददर्शनयोग्याधिकारिविशेषकल्पनमपेक्ष्येति कल्प्यत इति चेन्न। त्वन्मते तथाभूताधिकारिण एवासिद्धेः। हिरण्यगर्भपर्यन्ताः सर्वेप्यधिकारिणो मुक्त्यनन्तरमपि ब्रह्मानन्दस्यैव द्रष्टारः। नित्यमुक्ता श्रीरपि तथैवेति मोक्षनिरूपणप्रस्तावे अनुव्याख्यानन्यायसुधयोरुक्तत्वात् त्वदीयान् प्रति ब्रह्मानन्दैकदेशबोधकस्य भूमशब्दस्य तन्निरतिशयत्वबोधकाभावे त्वदीयग्रन्थेषु निरतिशयत्वापरपर्यायं भूमत्वमित्यादिव्यवहारायोगाच्च। तस्माद्यस्याधिकारिणो यावद्दर्शने योग्यता तं प्रति तावन्तमेव सातिशयं ब्रह्मानन्दैकदेशं निरतिशयतया भूमशब्दः प्रतिपादयतीत्यकानेनापि त्वया स्वीकरणीयम्। तथा चासदर्थबोधकतया स्पष्टमेव मध्वमते अप्रामाण्यं यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेत्यादावप्येवमिति प्रागेवोक्तम्। किं च गुणानां स्वरूपात्मकत्वात् विशेषशब्दस्यापि तन्मात्रपर्यवसायित्वात् असम्बद्धमेवेदं मध्वमतमिति दिक्॥२८॥

स्वबिम्बातिरिक्तरूपावयवोपासनं मुमुक्षुणा कार्यं नवेति संशये नेति प्राप्तम्, फलाभावात्। मोक्षस्य तद्विनापि सिद्धेः। एवं प्राप्ते आह—

**विकल्पो विशिष्टफलत्वात्॥ ५९**

स्वयोग्योपासनानन्तरं नृसिंहाद्युपासने विकल्पः विशिष्टफलापेक्षायां कर्तव्यं नान्यथेति। उक्तं च ब्रह्मतर्के - मुक्त्यर्थमात्मतत्त्वं हि कार्यमेव ह्युपासनम्। नृसिंहादिकमन्यच्च

दुरितादिनिवृत्तये । उपासते यथायोगं नवा फलविभेदत इति । नृसिंहादिकमन्यच्चेति समानाधिकरणम् । अतोऽन्योपासनस्यापि विशिष्टफलार्थिभिः कर्तव्यत्वान्न तापनीयादिविद्यावैयर्थ्यमिति माध्वाः । खण्डनं प्राग्वत् । अवताराणां स्वरूपेणात्यन्ताभेदात् विशेषशब्दस्यापि स्वरूपमात्रपर्यवसानादिति दिक् ॥ २९ ॥

काम्योपासनमावश्यकं न वेति संशये आवश्यकमिति प्राप्तम् । अर्थादिकं हि तत्फलं तच्च ज्ञानेप्युपयुज्यते इति । एवं प्राप्ते सिद्धान्तमाह—

**काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॥ ६०**

काम्यानामपि विकल्प एव सच व्यवस्थितः अमुमुक्षुभिः कार्यं मुमुक्षुभिर्नेति। मुमुक्षूणां कामाख्यहेत्वभावात् प्रबलहेत्वभावाच्च । नह्यर्थादिकं विना ज्ञानाभावः नवार्थे सति ज्ञाननियम इति सूत्रार्थः । उक्तं च **बृहत्तन्त्रे**—यस्य यस्य हि कामो यस्तस्य तस्य ह्युपासनम् । तादृशानां गुणानां च समाहारं प्रकल्पयेत् । अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् । तुष्ट्यर्थमीश्वरस्यैव न चोपासापि दुष्यतीति ॥ यस्य यस्य पुंसो यो वित्तादिकामः असावसौ (ततस्तस्य) तत्तत्कामप्रदरूपस्योपासनं प्रकल्पयेत् । तादृशानां तत्तत्कामप्रदानां गुणानां तत्रोपसंहारं च प्रकल्पयेत् । कुर्यादमुमुक्षुभिः इत्यर्थः । तस्मात्काम्योपासनमावश्यकमिति माध्वाः । अत्रेश्वरस्य तुष्ट्यर्थमिति एतन्माध्वेन दुरुपपादं, भगवत्तुष्टेस्तत्स्वरूपात्मकत्वेन अनादित्वादिति दिक् ॥ ४० ॥

ब्रह्मादिदेवतोपासनं विषयः । भगवदङ्गाश्रितत्वेन मुमुक्षुणा कर्तव्यं न वेति संशये नेति प्राप्तम् । मानाभावात् । सिद्धान्तमाह—

**अङ्गेषु यथाश्रयभावः ॥ ६१**

सूर्यादिदेवानां 'चक्षोः सूर्यो अजायते'त्यादिना यथा यथा भगवदङ्गाश्रयत्वमुक्तं तथोपासनं कार्यमेव । अन्यथा तदुक्तिवैयर्थ्यात् । न च तत्रोत्पत्तिमात्रं श्रुतं न तु स्थितिरपीति वाच्यम् । यत्र जन्म तत्र स्थितिः इत्युत्सर्गात् । तदाश्रिताश्च ते सर्वे इति वचनाच्च । न केवलमुक्तिवैयर्थ्यप्रसङ्गमात्रकल्प्यमेतत् । किं तु विधिबलादपीत्याह—

**॥ शिष्टेश्च ॥ ६२**

शिष्टिः शिक्षाविधिरिति यावत्। यस्मिन् यस्मिन् योहि चाङ्गे निविष्टः परमस्य **चिन्त्यः स** तथा तथैव इति **पौत्रायण**श्रुतेरित्यर्थः ।

**॥ समाहारात् ॥ ६३**

अङ्गैः परावेहि देवा विसृष्टाः तत्तद्गुणान् परमे संहरेत । तांश्चापि तत्रैव विचिन्त्य देवा स्थानं मुमुक्षुः परमं व्रजेतेति **काषायण**श्रुतौ समाहारवचनात् । अत्र च देवा एवाधि-

कारिणः। ध्यायेदेतेष्वङ्गदेवताः परस्य विशिष्टा हि गुणा मुक्तौ देवानां भवन्तीति श्रुत्यन्तरात्। हेत्वन्तरेणैव तत्समर्थयते—

**गुणसाधारण्यश्रुतेश्च ॥ ६४**

कर्तव्यमेवैतदुपासनं सूर्याद्याश्रयचक्षुष्यवस्थितं भगवद्गुणत्वात्। साधारण्यात्सर्वे-गुणाः परस्य समाहार्यास्तत्वदशो मुमुक्षोरिति माण्डव्यश्रुतेश्चेत्यर्थः। अतो देवानामङ्गाश्रितत्वेनो-पास्यत्वात्सार्थक्यमेव तद्विद्यानामिति सिद्धमिति माध्वाः। खण्डनं प्राग्वत्। चक्षुरादीनां स्वरूप-मात्रत्वादित्यादि ॥ ४१ ॥

प्रकृतं देवानां भगवदङ्गश्रयत्वेनोपासनं विषयः। कर्तव्यं नवेति सन्देहे नेति प्राप्तम् तथोपासनस्य सर्वशाखास्वनुक्तत्वात् गूढाभिसन्धिरेतत्समाधत्ते—

**नवा तत्सहभावाश्रुतेः ॥ ६५**

भगवदङ्गेष्वङ्गदेवतोपसंहारेणोपासनं न कर्तव्यपिति यदुक्तं तत्सत्यमेव, तथोपास-नस्य सर्वशाखागतोपासनेन सहाश्रवणादित्यर्थः। अयं भावः- अकर्तव्यत्वे इष्टापत्तिः मनुष्य-कर्तव्यत्वानभ्युपगमात्। न च केनाप्यकर्तव्यता क्वचित्तदुक्तेर्वैयर्थ्यापत्तिः। एतमेवार्थं श्रुत्या समर्थयते—

**दर्शनाच्च ॥ ६६**

सत्यो ज्ञानपरानन्दरूपः आत्मेत्येवं नित्यमेवोपासनं स्यात्। नान्यत्किंचित्समुपासीत धीरः सर्वैर्गुणैः देवगणा उपासते इति **कमठ**श्रुतेरित्यर्थः। अतो देवानां भगवदङ्गाश्रितत्वेनोपासनं युक्तमेवेति माध्वाः। खण्डनं प्राग्वत् ॥

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे
तृतीयस्याध्यायस्य तृतीयः पादः ॥

---

॥ श्रीरस्तु ॥

श्रीगणाधिपतये नमः ॥

# अथ चतुर्थः पादः ॥

ब्रह्मदर्शनं विषयः किं मोक्षमात्रसाधनं उत फलान्तरस्यापीति सन्देहे मोक्षमात्रस्येति प्राप्तम्। ज्ञानिनो मोक्षेतरपदार्थेभ्यो विरक्तत्वेन तदिच्छाया एवाभावात्। सिद्धान्तमाह—

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १**

अतः ब्रह्मदर्शनात् सर्वपुरुषार्थावाप्तिरिति बादरायणो मन्यते। यं यं लोकं मनसा संविभाति विशुद्धकामः कामयते यांश्च कामान्। तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम इति शब्दात्। संविभाति इच्छति। जयते प्राप्नोति। न च परीक्ष्यलोकानिति श्रुतेः प्रजहाति यदा कामानित्यादिस्मृतेश्च ज्ञानिनां मोक्षेतरपुरुषार्थेच्छाभावादयुक्तमिदमिति वाच्यम्। श्रुत्यादीनां प्रायेण ज्ञानिनां अन्येच्छाभावपरत्वात्। यस्य तु सौभरिकर्दमादिवद्भवति इच्छा तस्य ज्ञानादेव सर्वपुरुषार्थप्राप्तिरित्यस्माभिरभ्युपगमात्। इममर्थमाक्षिपति—

**शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २**

अस्तु ज्ञानं मोक्षसाधनम्। स्वर्गादिकं तु कर्मणैव। नचैवं यं यं लोकमिति श्रुतिविरोधः। ज्ञानस्यापि कर्मशेषत्वेन स्वर्गाद्युपयोगाभ्युपगमात्। स्वर्गसाधनकर्मशेषेऽपि धनादौ स्वर्गं धनादेहतो वा गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चिदित्यादिप्रयोगदर्शनात् इति **जैमिनि**राचार्यो मन्यते। अत्र ज्ञानस्य कर्मशेषत्वं नाम कर्मणैवोपपद्यमाने स्वर्गे आधिक्यमात्रापादकत्वं ज्ञानस्यैव प्राधान्ये बाधकमाह—

**आचारदर्शनात् ॥ ३**

देवास्तावत् ज्ञानिनः नैव देवपदं प्राप्ताः ब्रह्मदर्शनवर्जिता इति वचनात्तेषां च कर्मानुष्ठानं दृश्यते। यज्ञेन यज्ञमयजन्त देवा इत्यादौ। ज्ञानस्यैव सकलपुरुषार्थसाधनत्वे तु नैतद्घटत इति भावः। ज्ञानस्य कर्मशेषत्वे प्रमाणमाह—

**तच्छ्रुतेः ॥ ४**

यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति शेषश्रुतेरित्यर्थः। उपनिषदा स्वयोग्यया वीर्यवत्तरं अधिकबलसाधनम् ॥

**समन्वारम्भणात् ॥ ५**

कर्मैव देहं दैविकं मानुषं वाप्यन्वारम्भेन्नापरस्तत्र हेतुः। भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत् इति **माठरश्रुतिः**। अत्र हि कर्मणः प्राधान्यमेव प्रतीयते न तु ज्ञानेन सह साम्यं शेषत्वं वा कर्मैवेत्येवकारात्। नापर इति ज्ञानं कर्मशेषतयैव उपयुज्यते नतु तत्समकक्षतेति भावः। तदेतच्छ्रुतिसिद्धं कर्मणः प्राधान्यं सूत्रे संशब्देन दर्शितम्।

स्यादेतम् ॥ ज्ञानं न कर्मशेषः। ज्ञानिकृतकर्मणः फलाभावात्। फलाभावेप्या-चारस्तु मुक्तवल्लीलयेत्याशंक्याह—

**तद्वतो विधानात् ॥ ६**

न ज्ञानिनां लीलया कर्म। ज्ञानीव कर्माणि सदोदितानि कुर्यादकामः सततं भवेदिति **माठर**श्रुतौ ज्ञानिनां कर्मविधानात्। विहिताचारस्य लीलात्वाभावादिति भावः।

न केवलं विहितत्वं अपि त्वकरणे प्रत्यवायोऽपि श्रूयत इत्याह—

**नियमाच्च ॥ ७**

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर इति श्रुतेरित्यर्थः। एवं कर्मकरणे त्वयि कर्म न लिप्यते इतोऽन्यथा करणे नरे ज्ञानिन्यपि त्वयि पापकर्म न लिप्यत इति नास्तीत्यर्थः।

एवं जैमिनिमतमुपन्यस्य स्वमतं समर्थयते—

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८**

यदुक्तं प्राक् ज्ञानादेव सर्वपुरुषार्थप्राप्तिरिति तदेवं तथैव, न तु ज्ञानं कर्मशेष इत्यर्थः। न चैवं ज्ञानिनामाचारवैयर्थ्यं विद्याद्यनुपपत्तिश्चेति वाच्यम्, ज्ञानादेव जायमाने पुरुषार्थे-कर्मणोऽतिशयापादकत्वेन ज्ञानशेषत्वात्। कुत एतत्? अधिकोपदेशात् ज्ञानादेव स्वर्गो ज्ञाना-देवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यन्ते यथा यथा कर्म कुरुते तथा तथाधिको भवतीति **कौरव्य**श्रुतेः। युधिष्ठिरादीनां राजसूययागादिना फलाधिक्यदर्शनाच्चेति भगवतो बादरायणस्य मतम्।

नन्वस्तु कर्मणः शेषत्वं किंतु तत् ज्ञानफलेऽतिशयफलाधायकत्वेनेति कुतः? ज्ञान एवातिशयाधानसम्भवादित्याशंक्याह—

**तुल्यं तु दर्शनम् ॥ ९**

कर्मकरणाकरणयोः ब्रह्मदर्शनस्य तौल्यान्न तत्र विशेष इति भावः। एवं च ज्ञानस्य सर्वपुरुषार्थसाधनत्वादत्यन्तापेक्षितं तदिति माध्वाधिकरणम्। खण्डनं तु दर्शनस्य साम्यात्तत्फले स्वर्गादौ वैषम्यं दुरुपपादं; कर्मभिस्तदिति चेत् आगतं तर्हि कर्मणोपि जनकत्वं नह्यकार्योत्कर्षम-कारणोत्कर्षमनुविधत्ते इति न्यायादित्यादि यथासम्भवमूह्यम् ॥

ब्रह्मदर्शनं सर्वाधिकारिकं नवेति संशये सर्वाधिकारिकमिति प्राप्तम्। फलार्थी समर्थो विद्वान् साधनेऽधिक्रियते। तत्रास्त्येव सर्वेषां ज्ञानफले मोक्षे अर्थिता निर्दुःखानन्दात्म-कत्वात्तस्य। अस्ति च सर्वेषां श्रवणादौ सामर्थ्यं तदुपयोगिनी विद्वत्ता चेति। एवं प्राप्ते सिद्धान्तमाह—

## असार्वत्रिकी ॥ १०

दर्शनाधिकारिता सार्वत्रिकी च न भवतीत्यर्थः ॥

नन्वर्थित्वादेः सर्वत्र सत्त्वात्कथमेतदत आह—

## विभागः शतवत् ॥ ११

नव कोट्यो हि देवानां तेषां मध्ये शतस्य तु। समाधिकारो वेदोक्तो ब्रह्मणि द्वे शताधिके। यथा तथैवासंख्येयाः प्रजाः तासु कियान् जनः। ज्ञानाधिकारी संप्रोक्तो विष्णुपादैक-संश्रयः। इति वचनात्सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थः।

अयं भावः। यथा खलु देवत्वसाम्येऽपि नवकोटीनां न साधारण्येन सोमाधिकारः किं तु परापरब्रह्मद्वयाधिकशतस्येति विभाग एव तथा सर्वेषां पुरुषार्थापेक्षासाम्येपि न ज्ञानाधिकारः किन्तु विषयविभागोऽस्तीति। कस्य तर्ह्यधिकारस्तत्राह—

## अध्ययनमात्रवतः ॥ १२

अवैष्णवस्य वेदेपि ह्यधिकारो न विद्यते। गुरुभक्तिविहीनस्य शमादिरहितस्य च। न च वर्णावरस्यापि तस्मादध्ययनान्वितः। ब्रह्मज्ञानी तु वेदोक्ते ह्यधिकारी सतां मत इति **ब्रह्मतर्क**वचनात् यथाशक्त्यखिलवेदाध्ययनरूपविशेषणान्तरयुक्तस्यैवाधिकार इति भावः। तथा च **कौषारव**श्रुतिः—पठेद्वेदानथार्थानधीयीतार्थं विचार्य ब्रह्मपतेदिति। अतो ज्ञाने सर्वेषामधि-काराभावादतिशयितं तदिति सिद्धमिति माध्वाः। अत्रेदं वक्तव्यम्। फलीभूते ज्ञाने विध्य-सम्भवाच्छ्रवणादौ स वाच्यः। तत्र चाधिकारी अध्ययनवानेव आयातीति नापूर्वमिह प्रतिपाद्य-मानमस्ति ॥ २ ॥

प्रकृतो ज्ञानाधिकारः सर्वेषामेकरूपः। उत तारतम्येनेति संशये अविशेषादेकरूप एवेति प्राप्ते सिद्धान्तमाह—

## नाविशेषात् ॥ १३

न सामान्येनाधिकारो देवादीनाम। अथ पुमर्थसाधनार्थो धर्मो ज्ञानमित्युत्तरोत्तरं तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरेणोत्तरमिति **कौण्डिन्य**श्रुतेः। पुमर्थो मोक्षः। अर्थस्य धर्मज्ञानद्वारा मोक्षसाधनत्वं धर्मस्य ज्ञानद्वारा, ज्ञानस्य साक्षादिति भावः। अतोऽधिकारितार-तम्यात् ज्ञानतारतम्यमिति माध्वाः। खण्डनं तु ज्ञाने तारतम्यविषयीभूतगुणाल्पत्वबहुत्वकृतं त्वयोच्यते तच्च गुणानां ब्रह्मणा सहात्यन्ताभेदाभ्युपगमात् दुरुपपादमित्यादि ॥ २ ॥

ज्ञानवान् विषयः विधिनिषेधाधिकारी न वेति संशये नेति प्राप्तम् । बृहदारण्यके- तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनंचमौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेति श्रुतौ ज्ञानिनो यथेष्टप्रवृत्ति-विधानात् । यो ब्राह्मणो ब्रह्मप्राप्तियोग्यः असौ पाण्डित्यं आगमजन्यज्ञानं निर्विद्य लब्ध्वा युक्तिज-ज्ञानमापादयेत् । तदुभयलाभानन्तरं ध्यानी भवति । तेनापरोक्षज्ञानं प्राप्नोति । अथ जीवन्मुक्त उच्यते । स च सता वा असता वा केनापि प्रकारेण वर्तेतेति यथेष्टाचरणं श्रुत्या प्रतीयते । अतः सदसत्प्रवृत्तिभ्यः ज्ञानिनो विशेषाभावादाद्याधिकरणोक्तमयुक्तमिति । एवं प्राप्ते सिद्धान्तमाह—

### स्तुतयेऽनुमतिर्वा ॥ १४

नायं यथेष्टाचरणविधिः । किं तु ज्ञानस्तुत्यर्थमिदम् । यथा किंचिद्भृत्यं प्रति तत्प्रीतये कथ्यते यथेच्छं कुर्विति । अथ वा अनुज्ञामात्रमेतत् न विधिरिति भावः । युज्यते च सदसत्प्रवृत्तिभ्यां विशेषः ।

### कामकारेण चैके ॥ १५

कामचाराः कामभक्षाः कामबादाः कामेनैवेमं जीवमुत्सृज्याथ परात्परमीयुरनारम्भणमिति चैके पठन्ति ।

### उपमर्दं च ॥ १६

उपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुयान्तीति चतुरश्रुतौ । न चैवं ज्ञानिनामिव जिज्ञासूनामपि कामचारः शंक्य इत्याह—

### ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७

य इमं परमं गुह्यं ऊर्ध्वरेतस्सु भाषयेत् । न तथा विद्यते भूयान् यं प्राप्यान्येपि भूयसः ॥ इति माठरश्रुतिरूपे शब्दे ऊर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशविधानात् । भूयसो भूयांसः तदेवं केन स्यादित्यस्य विधित्वमङ्गीकृत्यार्थ उक्तः । जैमिनिमतेनार्थान्तरमाह—

### परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८

नायं श्रुत्या कामचारो विहितः । नाप्ययं सदसत्प्रवृत्तिविषयः किं तु सदाचारस्यैव नियमेनाचरणमेव श्रुत्यर्थः । केन स्यादिति कामचारोक्तिस्तु विधिबन्धवर्जितत्वेन स्वेच्छयैवा-चरणादिति जैमिनिर्मन्यते । नन्विह विहितस्येव निषिद्धस्यापि ग्रहणं किं न स्यादिति चेत् न, किं निषिद्धं ज्ञानिना कर्तव्यमिति विधिबलादेव तद्‌ब्रूषे, निषेधाभावाद्वा, नाद्य इत्याह—अचोदना

**चेति**। तादृशो विधिरप्रसिद्ध एवेति भावः। न द्वितीय इत्याह—**अपवदति हीति**। ब्राह्मणो न हन्तव्य इत्यादि निषेधस्याविशेषात् ज्ञानिष्वपि प्रवृत्तेरिति भावः॥ तदेवं केन स्यादिति वाक्यस्य जैमिनिमतानुसारेण सदाचारविधित्वमुक्त्वा स्तुतयेऽनुमतिर्वेत्यत्र उक्तमेव द्रढयति—

## अनुष्ठेयं बादरायणः साम्यश्रुतेः॥ १९

अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते। केन स्याद्येन स्यात्तेन ईदृश एवेति साम्यश्रुतेः। यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते। इति भगवद्वचनाच्च। तदेवं केन स्यादिति वाक्यस्य यथेष्टाचार-विषयत्वाभावमभ्युपेत्यार्थद्वयमुक्तम्। इदानीं तद्विषयत्वमभिप्रेत्याह—

## विधिर्वा धारणवत्॥ २०

यथेष्टाचरण एवायम्। न चैवं ज्ञानिनामिव अज्ञानिनामपि तथा प्रसङ्गः। यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषां, एवं स्वेच्छाचारोऽपि ज्ञानिनां विहितः न त्वन्येषामिति प्रमाणानुरोधेन व्यवस्थासम्भवात्। इमे च त्रयोऽर्था व्यवस्थिताः। त्रेधा हि ज्ञानिनो विधिनियताः अनियताः स्वेच्छानियता इति। विधिनियता मनुष्या अनियता हि देवाः। ब्रह्मैव स्वेच्छाविधिनियत इति **गौपवनश्रुतेरिति** माध्वाधिकरणम्।

अत्रेदं वक्तव्यम्। केन स्यादिति बृहदारण्यकवाक्यं ज्ञानिनो विहितनिषिद्धसाधारण्येन निर्यन्त्रणयथेष्टचेष्टाचरणाङ्गविधिपरमिति विहितमध्य एव केषांचिदाचरणं केषांचित्परित्याग इत्येतदनुज्ञापरमिति सर्वमपि विहितमेव कर्म विधिबन्धं विना स्वेच्छया कार्यमित्येवंपरमिति चार्थत्रय-शालि, अर्थत्रयस्य हिरण्यगर्भतदितरदेवनामनुष्यविषयत्वेनाविरोध इति तावदिह त्वदधिकरणे स्थितम्। तच्चासङ्गतम्। त्वदीययोः शास्त्रयोनित्वसमन्वयाधिकरणयोः भङ्गप्रसङ्गात्। यतो वा इमानीत्यादेरपि शिवविष्ण्वादिभक्तान् प्रति तत्तद्बोधकत्वसंभवेन विष्णोरेव शास्त्रयोनित्वमिति तत्रैव समन्वय इत्यस्य दुरुपपादत्वात्। ननु केन स्याद्वाक्यस्य यद्यप्यर्थत्रयं स्वीकृतं तथापि तत्प्रामाणिकं त्रेधाहीत्यादि **गौपवनश्रुति**सत्वादिति चेन्न। इहापि समन्वयाधिकरणद्युभ्वाद्यधिकरणयोर्भङ्गे उक्तया रीत्या शिवविरिञ्चयोर्जगत्कर्तृत्वं बोधयतां वचनानामेव मानत्वेन साम्यात्। यदि तु तानि वचनानि यतो वेत्यादेः शिवादिपरतायां न प्रमाणमिति ब्रूषे तर्हि त्वदुदाहृतगोपवनश्रुतिरपि स्वयं-विषयविभागं वक्तुं, केन स्याद्वाक्यार्थत्रयपरत्वे तूदासीनैवेति तुल्यम्। तदुक्तं "श्लेषप्राणे कवित्वे प्रमितपरतया श्लाघनीये च सूत्रे नानाकर्मोपयोगश्रुतिसमधिगतानेकबोध्ये च मन्त्रे। एकार्थत्वव्यव-स्थात्यजनमनुमतं सर्वमीमांसकानामन्यत्रापीच्छया तद्यदि तव भवति ब्रह्मवाक्येष्वपि स्यात्॥" "कर्मब्रह्मोभयार्थं खलु सकलमपि व्याकरोः कर्मकाण्डम् ब्रह्मस्वार्थोभयार्थानुपनिषदुदितानप्यतद्वाचि-शब्दान्। अन्यांश्चोमादिवागाद्युभयविधपरान् वाङ्मनःप्राणमुख्यान् केन स्याद्वाक्यमर्थत्रयपरममितार्थं च वह्न्यादिसूक्तमिति"॥

अत्र कर्मकाण्डमित्यन्तेन ज्योतिरुपक्रमादित्यधिकरणं दर्शितम्। 'प्राणो वा आशाया भूयानि'ति प्रकरणे प्राणशब्दो भूमाधिकरणे ब्रह्मपरतया व्यतिहाराधिकरणे मुख्यप्राणपरतया च भाष्ये व्याकृतः। उक्तार्थद्वयपरमिदं प्रकरणमिति च टीकायामुक्तम्। एवमादीन्युदाहरणानि ब्रह्मस्वार्थैरित्यादिद्वितीयचरणेन संगृहीतानि। वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि इत्यादिवाक्ये वाङ्मनः प्राणशब्दानां उत्तरोत्तरस्मिन् लीयमानोमारुद्रहिरण्यगर्भपरा न उत्तरोत्तरस्मिन् लीयमानवागिन्द्रियादिपरा इति चानेकार्थता वाङ्मनसि दर्शनादित्यधिकरणे माध्वैरुक्ता। तत्संग्रहार्थं तृतीयश्चरणः। चतुर्थे तु परमित्यन्तेन प्रकृताधिकरणार्थ उक्तः। वह्न्यादिदेवताप्रतिपादकाः सूक्तमन्त्रास्तत्तदुत्तमसकलदेवताविषयत्वेनामितार्था इत्यङ्गावबद्धाधिकरणे उक्तम्। तत्संग्रहार्थं श्लोकशेषः। एवमनेकार्थत्वेन सकलामपि श्रुतिमाकलयतः तव सृष्टिवाक्येऽपि तथात्वसम्भवात् त्वद्रीत्यैव शास्त्रयोनित्वाद्यधिकरणद्वयं भज्येतेति स्थितम्। एवं समन्वयाध्यायः प्रायेणोच्छिद्येत। तत्र हि देवतान्तरपरत्वमाशंक्य विष्णुमात्रपरत्वं सिद्धान्त्यते। तच्च श्रुतिनानार्थवादिनोऽनुपपन्नमिति। अपि च केन स्याद्वाक्यवदेव पवित्रं त इत्यादीनामप्यनेकार्थता तद्व्यवस्था च प्रसज्येत।

तथाहि—पाञ्चरात्रिकस्य तव संमतस्तावदयमर्थः। ब्रह्मणः वेदस्य चतुर्मुखस्य ब्रह्मणः ब्राह्मणजातेर्वा पते रक्षकेति विष्णुसम्बोधनम्। प्रभुस्त्वं विश्वतः विश्वेषां गात्राणि पर्येषि अन्तर्यामितया प्राप्नोषि तादृशस्य ते तत्पवित्रं सुदर्शनं विततं अर्थात्त्तेनेति लभ्यते। अतप्ततनूः असंस्कृतशरीरः आमः अदग्धपापः तद्ब्रह्मणःश्रितासः पक्काः वहन्त इति। दाहजन्यं किणं वहन्त एव तत्समाशत। पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम्। पर्यायवाचका ह्येते चक्रस्य परमात्मन इति श्रीशास्त्रादिति। शैवास्तु शिवागमोपबृंहणेन व्याचक्षते। तथाहि—ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः। पवित्रं तद्धि विख्यातं तत्संस्पर्कात्तनुश्रुतिः। ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते। तस्मात्पवित्रं लिङ्गाख्यं धार्यं शैवमनामयम्। तेनातप्ततनूरत्र" इत्यादिना "दीक्षया सहितः साक्षादाप्नुयाल्लिङ्गमुत्तमम्।" इत्यन्तेन। अगस्त्यं प्रति रेणुकेन पवित्रश्रुतिलिङ्गधारणपरतया व्याख्याता। तथा चायमर्थः। ब्रह्मणस्पतेः लिङ्गस्याधिष्ठातुः प्रभुः प्रभोः विभक्तिव्यत्ययः ते तव पवित्रं लिङ्गं विश्वतः विशेषां गात्राणि पर्येषि व्याप्नोति पुरुषव्यत्ययः लिङ्गस्य व्यापकत्वं च विष्ण्वादिभिर्धृतत्वात्। स्पष्टंचैतत् पाद्मे—शिवराघवसंवादे अतप्ता अक्लेशिता शैवदीक्षादिना तनुर्येन सः आमः अपक्कान्तःकरणः तल्लिङ्गं नाश्नुते दुरदृष्टवशाल्लिङ्गधारणे न प्रवर्तेन इत्यर्थः। वहन्तो लिङ्गं धारयन्त इत्यादि। अन्येतु तप्तमुद्रानिषेधपरैवेयं श्रुतिः। तथा हि-हे ब्रह्मणस्पते ब्राह्मणोत्तम हे ब्राह्मणेत्येव तु नोक्तम्। पतितान् प्रति प्रतिषेधो नास्तीति सूचयितुम्। त्वं प्रभुः स्वतन्त्रोऽसि। अनेन परप्रचोदनयापि नात्र प्रवर्तितव्यमिति सूचितम्। विश्वतो गात्राणि करचरणादिसर्वाङ्गानि विततं विस्तीर्णं पवित्रं च यथा भवति तथा धारयसि पावित्र्यं च यावती वै देवतास्ताः सर्वा इत्यादि श्रुत्यन्तरसंवादादिति। ततश्च पाञ्चरात्रादौ त्वया न प्रवेष्टव्यमित्याशयेनाह—

अतप्ततनूः । आय-विष्णवे तप्ता तनूर्येन सः । आमः—अपक्वान्तःकरण इत्यादि । परैरुप्य-कारस्य विष्णुपरत्वमुक्तम् । असत्यं विद्धि संसारमित्यादिवाक्यानाम् । अ इति प्रोच्यते विष्णुस्तत्र सत्यमिदं जगदित्यादिना व्याचक्षाणैः । न केवलं तप्ताङ्गानामिष्टाभावमात्रं किंत्वनिष्टमप्यस्तीत्याह-शृतासः तप्तमुद्रां वहन्तः तत् श्रिधात्वर्थभूतं पाकं कुम्भीपाकादिरूपम्। तप्तमुद्रानिषेधकस्मृतिपुराण वचनजातं प्रथमपरिच्छेदोदाहृतमत्रोपष्टम्भकमिति दिक् । एवं चेहापि आद्यौ द्वावर्थौ प्रथम-परिच्छेदोक्तरीत्या पतितादिविषयकौ । तृतीयस्तु शिष्टब्राह्मणादिविषयक इति व्यवस्था सुवचा । केन स्याद्वाक्येन तौल्यात् । वस्तुतस्तु तस्मिन्नुदीचीनदशं पवित्रं वितन्वति पवित्रं ते विततं ब्रह्मणस्पत इति वितन्यमानमभिमन्त्रयते यजमान इत्यापस्तम्बसूत्रेण उद्गातृभिर्द्रोणकलशे वितन्य-मानस्य पवित्रस्यानुमन्त्रणे विनियोगात्तत्परेयं श्रुतिः । तथाहि—हे ब्रह्मणस्पते सोम ते तुभ्यं त्वत्पावनार्थमिदं दशापवित्रं विततमित्यादि, अर्थान्तराणि तु निरर्गळं माध्वप्रतिवन्दीमुखेनेति दिक् ॥ ४ ॥ इत उत्तरो भाष्यशेषः प्रागुक्तखण्डनेनैव गतार्थो न पृथक् खण्डनीयः । तथापि लेशत उपन्यस्य खण्ड्यते ।

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति । नान्ये । य आत्मा अपहतपाप्मा विजर इत्यादि श्रुत्याचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमाप । इन्द्रस्तु सम्यग्ज्ञानमिति छान्दोग्ये उभयविधलिङ्गदर्शनात् ।

## अनभिभवं च दर्शयति ॥ ३५ ॥

दैवीमेव सम्पदं देवा अभिगच्छन्तीत्यासुरीमेव चासुरा नैतयोरभिभवः कदाचित्स्वभाव एव ह्यवतिष्ठत इति स्वभावानभिभवं दर्शयति ॥

## अपि च स्मर्यते ॥ ३७ ॥

असुरा असुरेणैव स्वभावेन कर्मणा ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् । देवा दैवस्वभावेन कर्मणा चाप्यसंशयः । सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् । नानयोरन्यथा भावः कदाचित्क्वापि विद्यते । मानुषा मिश्रमतयो विमिश्रगतयोऽपि चेति स्कन्दे ॥

## विशेषानुग्रहश्च ॥ ३८ ॥

दर्शयति देवेषु श्रुतिः । शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः एधमान द्विरुभयस्य राजा चोष्कूय विशदिन्द्रो मनुष्यानिति । उक्तं च भविष्यत्पर्वणि "असुरान् दमयन् विष्णुः स्वपदे च सुरान् नयन् । पुनः पुनर्मानुषास्तु सृतावावर्तयत्यसाविति । अत्रानुव्याख्यानं चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च । संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा । विमुक्तिश्च

द्विविधस्तत्र सुखं नित्यं तथापरम् । नित्यं दुःखमिति ज्ञेयं साधनं संसृतावपि । काम्यं कर्म निषिद्धं च साज्ञानमिति निश्चयः । द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम् । इति पैङ्गिश्रुतेर्द्वेषो नैव सन्मुक्तिकारणम् असन्मुक्तेः कारणं चेत्यादि ।

अत्रेदं वक्तव्यम् । प्रागभाववादिनस्तव नित्यसंसारिणः केचिदित्यभ्युपगमस्तावदसङ्गतः । प्रागभावकोशक्षये संसारोच्छेदस्य दुर्वारत्वात् । पुनः केचिदवशिष्यन्त इति चेत्तद् ध्वंसानन्तरं तर्हि मुक्तिःस्यात् । ते नश्यन्त्येवेतिचेत् तर्हि तेषामत्यन्ताभावत्वमेव स्यात् । प्रागभावत्वं च भज्येत । किं च श्रृण्वेवीर इति श्रुतिस्त्वदभिमतार्थे न मानं आनन्तर्यव्यवहारकालपरत्वात । तदुत्तरतृतीयमन्त्र एव इन्द्रोमायाभिरित्यादिना व्यावहारिकार्थपरत्वस्य स्फुटीकरणात् । यत्तु तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति वचनाच्च स्वेष्टसिद्धिरिति । तदपि न । उक्तरीत्या गतार्थत्वात् अजस्रशब्दस्तु बहुकालानुवृत्तिपरः । अजस्रदीक्षा प्रयतस्य मद्गुरोरितिवत् । अपि च स्कान्दे ब्रह्मगीतासु सूतगीतयोः, पाद्मे शिवगीतायां, कौर्मे ईश्वरगीतायां च अद्वैतस्य स्पष्टतया उपबृंहितैर्लाघवादिसत्तर्कोपष्टब्धैश्च सकलशिष्टपठ्यमानोपनिषद्वाक्यैः अद्वैततत्त्वे सुस्थिते तद्विरुद्धेयं त्वत्प्रक्रिया अनुपादेयैवेति दिक् ॥

## नचाधिकारिकमपि पतनानुमानात् ४०

## तदयोगात् ॥ ४१ ॥

ज्ञानार्थिभिः स्वायोग्यं पदं नाकांक्ष्यम् । न देवपदन्विच्छेत् कृत एव हरेर्गुणान् । इच्छन्पतति पूर्वस्मात् अधस्ताद्यत्र नोत्थितिरिति ब्रह्माण्डे । स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि । एवमेव सुराद्याश्च हरिश्च स्वपदेच्छकमिति इत्याद्यनुमानरूपवाक्याच्च ।

## उपपूर्वमपीत्येके भावशमनवदुक्तम् ॥ ४२

उपपदं चानवेक्ष्यमित्येके । भावशमनवत् ऋषिपदवदेव । तथा च इन्द्रद्युम्न श्रुतिः—यथा ऋषीन् प्रजापतीनाकांक्षेदेवं न गन्धर्वान्न विद्याधरान् न सिद्धानिति ।

## बहिस्तूभयथाहि स्मृतेराचाराच्च ॥ ४३ ॥

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषये आकांक्षायामनाकांक्षायां च न पतनं देवर्षिगन्धर्वाणां पदान्याकांक्षन् पतति ध्रुवम् । अन्यत्र शुभमाकांक्षन् न पतेदविरोधतः ।" इति स्मृतेः । नानात्वमेव कामानां नाकामः क्वचिद्दृश्यते । अनोऽविरुद्धकामः स्यादकामस्तेन भण्यते । इत्याचाराच्चेति माध्वाः । इह परीक्ष्य लोकानित्यादिश्रुत्या आब्रह्मलोकं विरक्तस्यैवाधिकारित्वात् तं प्रति तावदुक्तप्रलापो व्यर्थः । अविरक्तं प्रति तत्तत्पदकामनया तत्तत्कर्मविधानस्य श्रुतिस्मृत्यादिषु प्रसिद्धतया नाकाङ्क्षेदित्यसंगतमेव । नन्वयोग्यमेव नाकांक्षेदिति ब्रूमः । तत्तत्कर्माधिकारिणां

तत्तद्योग्यमेवेति चेत्, तर्हि अनधिकारी नाकाङ्क्षेदिति प्राप्तम्। अनधिकार्यधिकारिविभागश्च पूर्वतन्त्रस्थषष्ठाध्यायबलेनाध्यवसेयः। ततश्च तस्या आवश्यकत्वे किमनेन। ननु तद्बलेनाधिकारानधिकारौ निर्णयितां नाम। इह तु फलेच्छामेव निषेधाम इति चेन्न। सति विषयसौन्दर्यज्ञाने निषेधसहस्रेणापि तदिच्छाया दुर्वारत्वादिति दिक्॥

**स्वामिनः फलश्रुतेरित्यात्रेयः॥ ४४**

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥ ४५**

**सहकार्यन्तरविधिः परेण तृतीयं तद्वतो विध्यादिवत्॥ ४७**

त्रिसूत्र्या एकमधिकरणम्। ब्रह्मविदाप्नोति परमित्यादिश्रुत्युक्तं ज्ञानफलं ज्योतिष्टोमादिकर्मफलं चेन्द्रियप्रेरकाणां देवानामेव भवति, उत कर्तृभूतानां मनुष्यादीनामपि इति संशये देवानामेवेति प्राप्तम्। भगवदुपासनपुण्यफलमिदं इन्द्रियप्रेरकदेवतापदं प्राप्तानामेव तेषां भगवत्प्रसादलब्धतत्तदिन्द्रियजन्यज्ञानकर्मस्वामित्ववत्त्वात्। लोके च स्वामिन एव फलदर्शनात् कर्तुरप्यस्वामिनः कर्मकरादेः क्षेत्रादिफलादर्शनात्। यदुक्तम् यत् किंचेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यद्‌ किंचेमाः प्रजा विजानते देवा एव विजानते देवानां ह्येतत् भवति स्वामी फलमश्नुते। नास्वामी कर्म कुर्वाण इति **माध्यंदिनायनश्रुतेश्च**। ततश्चैकेन्द्रियस्य बह्वो देवाः स्वामिन इति तेषां तत्तत्स्वातन्त्र्यविज्ञानादितारतम्यानुसारेण फलतारतम्यं भवति। लोकेऽपि हि यस्याधिकं क्षेत्रस्वातन्त्र्यं यस्य वा व्यापारकर्मणि ज्ञानप्रयत्नाधिक्यं तस्य तत्फलमधिकं दृश्यत इति प्राप्ते सिद्धान्तः। अयजमानानामपि ऋत्विजां सत्रयागफलमिवास्वामिनामपि कर्तॄणां कर्मज्ञानफलमुत्पद्यते। ननु सत्रेष्वस्वामिनामप्यृत्विजामगृहीतदक्षिणात्वेन कर्तृत्वाद्भाव्यम् फलेनेति चेत्तर्हि प्रजार्थमेव देवैः ज्ञानकर्मणोः क्रियमाणत्वात् तासामपि भाव्यं फलेन। ननु यदि ज्ञानादिकं प्रजार्थं देवैः संपाद्यते तर्हि कृत्स्नं फलं प्रजानामेव स्यात् न किंचिद्देवानामिति चेन्न। यथा राज्ञा प्रजार्थमेव क्रियमाणस्यापि पालनस्य फलं प्रजावतो राज्ञ एव मुख्यम्। प्रजानां तु तत्सहकारिमात्रफलत्वादल्पम्। यथा च गुरुणा शिष्यार्थमेव क्रियमाणस्यापि व्याख्यानस्य फलं गुरोरेव मुख्यं शिष्याणां त्वल्पम्। ततो ज्ञानादिदानप्रवृत्तैः देवैः प्रजार्थमेव क्रियमाणस्यापि ज्ञानादेः फलं देवानामेव मुख्यम्। प्रजानामल्पमित्यस्योचितत्वात्। अल्पफलत्वादेव प्रजानामफलत्वश्रुतिः। अल्पधनिके अधनत्वव्यवहार दर्शनादिति। उक्तं च वाराहे—"ज्ञानादिदानं देवानां विष्णुना साधुचोदितम्। वेदे च तेषां विहितं तत्राचार्यो महत्तरः। विहितः सहकारित्वे सहकार्यन्तरं प्रजाः। पितृत्वेन यथाराज्ञो यथा शिष्या गुरोरपि। तस्मात् श्रुतं फलं तासामाचार्याणां महत्तरम्। ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरमिति। उक्तं **चानुव्याख्याने** स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेत्। अशुभं त्वशुभे त्वेषाम् स्वातन्त्र्यात् पतितो हरेः। आज्ञया चान्यगं नैव भोगाय भवति क्वचित्। पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात्। इत्यादिश्रुतयो मानमुक्तेर्थे मुक्तयः परा इति।

अत्रेदं वक्तव्यम् । उक्तरीत्या यद्यपि सप्तान्नविद्योपासनाप्रीतभगवद्दत्तमिन्द्रियतत्फले-ष्ववान्तरस्वामित्वमिन्द्रियप्रेरकाणां देवानामङ्गीकृतम् । तथाहि लोके तत्तदिन्द्रियतत्तत्फलस्वामित्वेना-भिमनानां मनुष्यादीनां तत्र स्वामित्वं नास्तीति त्वदीयैतदाधिकरणे पर्यवस्यति । पूर्वपक्षे बहूनां देवानां स्वामित्वतारतम्यानुसारेण फलतारतम्यमुक्त्वापि कर्तुः फलप्रतिषेधात् । सिद्धान्ते पूर्वपक्ष्यभिमतं कर्तुः सर्वदैव स्वामित्वमङ्गीकृत्यैव राजगुरुस्वामिजनपालनव्याख्यानात् स्वामिनामपि प्रजाशिष्याणामिव ज्ञानकर्मास्वामिनामपि मनुष्यादीनां किञ्चित्फलमिति तेषां फलोपपादानाच्च । एवं च जीवस्य सुखदुःादिस्वामित्वाभावे सिद्धे शास्त्रारम्भवैयर्थ्यं स्यादिति कर्ता शास्त्रार्थवत्त्वा-दित्यधिकरणभङ्गे प्रपञ्चितम् । यत्त्विह सत्रे अयजमानानामप्यृत्विजां फलमित्युक्तं तत्पूर्वमीमांसा-नवबोधविजृम्भितम् । सत्रेषु हि यजमाना एव ह्यृत्विजः । ये यजमानास्त ऋत्विज इति । तत्र यजमानानामेव ऋत्विक्कार्ये विधानात् । माध्वादिभिर्हि बहुधा शाब्दिकमीमांसकादिमर्मानवबोधनेनैव व्यवहरन्ति ते यत इति प्रागेव प्रपञ्चितम् ।

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

गृहस्थाश्रमः सन्न्यासादुत्कृष्टः । छन्दोगोपनिषदि कुटुम्बे शुचौ देशे स्वाध्यायमधीयान इति गृहस्थाश्रममुपक्रम्य स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तत इति तन्मोक्षमुक्त्वा उपसंहारात् । उपसंहारवत्त्वेन च तत्र तात्पर्यावगमादिति पूर्वः पक्षः । सिद्धान्तस्तु सन्न्यास एव गार्हस्थ्यादधिकः । तन्मोक्षस्य गृहस्थमोक्षादधिककालसाध्यत्वेन तदतिशायि-त्वात् गृहिणोपसंहारस्तु देवविषयो न मनुष्यविषयः । कृत्स्ना ह्येव गृहिणो देवाः कृत्स्ना ह्येते यतय इति पौत्रायणश्रुतौ देवा एव ब्रह्मचारिणो देवा एव गृहिणो देवा एव वानप्रस्था यथाह्येते मुनय एव सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्तीति काठरव्यश्रुतौ च सर्ववर्णाश्रमाचार वत्तयोक्तानां देवानां गृहस्थानां सतामपि मनुष्यसन्न्यासिभ्योऽधिकत्वादिति माध्वाधिकरणम् । अत्राश्रमचतुष्टयस्य वर्णचतुष्टयस्य च युगपदेकत्राभ्युपगमः श्रुतिन्यायादिविरुद्धः । पौत्रायण काठरव्यादिवचनानि तु तदेककल्पितानि सर्वसम्मतप्रत्यक्षश्रुतिविरुद्धानीति दिक् ॥

## अनाविष्कुर्वन्नन्वयात् ॥ ५०

एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवति । स एतां मनुष्येषु विब्रूयाद्यथा यथाह वै ब्रूयात् तथा तथाधिको भवति इति माठरश्रुतौ विद्यादानं श्रूयते । तच्च बहूनां स्वीकरणार्थं आविष्कारेणेति न मन्तव्यम् अन्वयात् युक्तेः । आविष्कारे हि अयोग्यानामपि स्वीकारप्राप्तिः । तच्च निषिद्धम् । विद्या ह वै ब्राह्मणमाजगाम गोपाय माशेवधिष्टेऽहमस्मि असूयकायानृजवे शठाय न मां ब्रूयाः । ऋजवे ब्रूहि नित्यमिति श्रुतेः ।

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ।। ५१ ।।**

आत्मा वा अरे द्रष्टव्य इत्यादिना दर्शनार्थं श्रवणादि विधीयते । तच्च दर्शनमैहिकमेव । प्रारब्धप्रतिबन्धाभावे । श्रुत्या आत्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिं परमस्य विन्देत् । यद्यारब्धं कर्म निबन्धकं स्यात् प्रत्येव पश्येद्योगमेवान्वत्वेक्ष्य इति **सौपर्णश्रुतौ** दर्शनात् ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ।। ५२ ।।**

एवं प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः । तद्भावे जन्मान्तरेपीत्यनियमः । धर्मी स्वर्गं विधर्मी निरयमेत्येवं ब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थेऽमृतमिति ब्रह्मसंस्थस्य मोक्षस्यैवावधारितत्वात् । विद्वानमृतमाप्नोति नात्र कार्या विचारणा । अवसन्नं यदाराब्धं कर्म तत् तत्रैव गच्छति नचेद्बहूनि जन्मानि प्राप्यैवान्ते न संशय इति **नारायणाध्यात्मे** इति माध्वः । अनाविष्कुर्वन्नन्वयादित्यादिना यदुक्तं तन्नातीवास्माकं विरुद्धम् । सामान्यखण्डनैर्गतार्थं चेति दिक् ॥

**भट्टोजिभट्टरचिते ग्रन्थेस्मिन् तत्त्वकौस्तुभे ।**
**तृतीयाध्यायमाध्वोक्तभाष्यभङ्गः समापितः ।।**

इति श्रीमद्विद्वन्मकुटमाणिक्यलक्ष्मीधरभट्टसूनुभट्टोजिभट्टविरचिते
तत्त्वकौस्तुभे तृतीयस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्चाध्यायः ॥

---

इत्थं मध्वाभिमतेषु समन्वयाविरोधसाधनेषु खण्डितेषु फलनिरूपणार्थं प्रवृत्तश्चतुर्थाध्यायो निरालम्बनत्वादेव परास्तः तथापि क्वचित् कश्चिद्विशेषः उच्यते ।

**आवृत्तिरसकृदुपदेशात् ।। १**

श्रवणादीनामावृत्तिः कार्या । न तु सकृदनुष्ठानेन कृतार्थता । ऐतदात्म्यमिदं सर्वमित्यादिषु असकृदुपदेशात् ॥

**लिङ्गाच्च ।। २**

पुनरेव वरुणं पितरमुपससारेत्याद्यावर्तनलिङ्गाच्च अविरुद्धमेतत् ।

**आत्मेति तूपगच्छन्ति-ग्राहयन्ति च ।। ३**

आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः । सर्वेषां च मुमुक्षूणां उपदेशश्च तादृशः । कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यते । इति **ब्राह्मे** इति माध्वाः । तन्न । आत्मशब्दस्य जीवसाधारणताया वेदान्तानामखण्डार्थतायाश्चोक्तत्वात् । वक्ष्यमाणत्वाच्च ॥

### न प्रतीके न हि सः ॥ ४

नाम ब्रह्मेत्युपासीतेत्यादिना शब्दभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या, किं तु तत्स्थत्वेनैवोपासनं कार्यम्। ब्रह्मतर्के च-नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः। ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति। नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते। सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मतेति।

अत्रेदं वक्तव्यम् "सर्वार्था प्रथमेत्यसङ्गतम्। प्रातिपदिकार्थमात्रे तद्विधानात्। कात्यायनेनापि अभिहिते प्रथमेत्युक्तत्वात्। नामार्थयोश्चाभेदसंसर्गस्य व्युत्पत्तिसिद्धत्वात्। अत एव त्वयापि तत्त्वमसीति वाक्यं भङ्क्त्वा व्याचक्षाणेन तच्छब्दस्य तन्नियम्य इति लक्षणा स्वीकृता। अथ छन्दसि व्यत्ययानुशासनमभिप्रेत्य सप्तम्यर्थे प्रथमेति ब्रूषे तर्हि व्यत्ययानुशासनस्य नायं विषयः। व्यत्ययं विना निर्वाहे सति तदुपन्यासानौचित्यात्। आरोपितेनापि रूपेणोपासनोपपत्तेः। यत्तु 'तस्मादतत्त्वं नोपास्यमिति वेदविदो मतमित्यनुव्याख्यानम्। तत्प्रागुक्तरीत्या भूमत्वाद्युपासने व्यभिचारि॥

### ब्रह्मदृष्टिरुत्कर्षात् ॥ ५

आत्मेत्येव य 1पासा तदा ब्रह्मत्वसंयुता। कार्यैव सर्वदा विष्णोः ब्रह्मत्वं न परित्यजेत्। इति ब्रह्मतर्के।

### आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६

चक्षोः सूर्यो अजायत इत्याद्युपासनं च देवानां कार्यमेव। स्वोत्पत्तिस्थानत्वेन स्वाश्रयत्वेन मुक्तौ तत्र लयस्यापेक्षितत्वेन च तेषां तथोपासनस्योचितत्वात्। उक्तं च नारायणतन्त्रे "आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु। गुणानाश्रयणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु। स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत्। अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते। स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु। तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः। तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः इति माध्वाः। अत्रेदं वक्तव्यम्—तदाश्रिताश्चते नित्यं इति वदता देवानां स्वोत्पत्त्यङ्गे प्रवेशो दुरुपपादः। नहि रूपरसादयः घटं प्रविशन्तीति सुवचम्। एवं च तेषां तत्र प्रवेशो हि मुक्तिरिति त्वदुक्तमपि निरालम्बनमेव। किं च भगवदवयवानां व्यापकत्वात् जीवानां चाणुत्वात्त्वदभिमतानित्यतमोयोग्या नीचा अपि सदा तत्र प्रविष्टा एवेति नित्यमुक्ता एव स्युः। किं च प्रवेशः क्रियाविशेषः। स च जीवस्वरूपेण सहात्यन्ताभिन्न इति त्वद्रीत्या सर्वेषां नित्यमुक्तता दुर्वारैवेति दिक्॥

### आसीनः सम्भवात् ॥ ७

सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात्। सदा विक्षेपाल्पत्वेन सम्भवात्॥

**ध्यानाच्च ॥ ८**

ध्यानत्वादपि आसीनतोचिता । उक्तं हि **नारायणतन्त्रे**—स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा । स्मरणं सर्वदा योग्यं ध्यानोपासनमासने । नैरन्तर्यमनोवृत्तिर्ध्यानमित्युच्यते बुधैः । आसीनस्य भवेत्तत्तु न शयानस्य निद्रया । स्थितस्य गच्छतो वापि विक्षेपस्यैव सम्भवात् । स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः" इति ।

**अचलत्वं चापेक्ष्य ॥ ९**

अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् । चलने तु शरीरस्य चञ्चलं च मनो भवेत्" इति **ब्रह्माण्डे** ।

**स्मरन्ति च ॥ १०**

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्नित्यादि ।

**यत्रैकाग्रता तत्राविशेषात् ॥ ११**

देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम् । तमेव देशं सेवेत तं कालं तामवस्थितिम् । तानेव भोगान् सेवेत मनो यत्र प्रसीदति । नहि देशादिभिः कश्चित् विशेषः समुदीरितः । मनः प्रसादनार्थं हि देशकालादिचिन्तनेति **वाराहे** ।

**अप्रायणात्तत्रापि हि दृष्टम् ॥ १२**

यावन्मोक्षस्तावदुपासनं कार्यम् । सर्वदैनमुपासीत यावद्विमुक्ति । मुक्तोऽपि ह्येनमुपासीत इति **सौपर्णश्रुतेः** । शृणुयाद्यावदज्ञानमतिर्यावदमुक्तता । ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते । दृष्टतत्त्वस्य च ध्यानं यदा दृष्टिर्न विद्यते । भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा । आविमुक्तेर्विधिर्नित्यः स्वत एव ततः परमिति **ब्रह्माण्डे** इति माध्वाः ।

अत्रेदं वक्तव्यम् । आसीनत्वमचलत्वम् एकाग्रता चेत्यादि सर्वसम्मतमेव । स्वत एव ततः परमिति ब्रह्माण्डत्वाभिमतश्लोकशेषेण मोक्षकालेऽपि भक्तिरिति यदवादीः तत्तुच्छम् । मुक्तस्य हि भक्तिरुच्यमाना तत्स्वरूपात्मिकैवेति त्वदभिमतं त्वत्प्रक्रियानुकूलं च । तच्च व्याहतं संसारिसाधारण्यात् । पुत्रादिस्नेहव्यावृत्त्यर्थं हि माहात्म्यज्ञानपूर्वकत्वेन विशिष्टं स्नेहं भक्तित्वेन निरवोचः । अनादेस्तु कथं माहात्म्यज्ञानपूर्वकता स्यात् । सौपर्णश्रुतिःब्रह्माण्डवाक्यं च यदि प्रामाणिकं तर्हि ब्रह्मलोकावाप्तिरूपगौणमुक्तिपरमिति दिक् ॥

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३**

ब्रह्मदर्शने सति उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च । तद्यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पाप कर्म न श्लिष्यते । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं ह वा अस्य सर्वे पाप्मानः प्रदूयन्त इति तद्व्यपदेशात् ।

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४**

इतरस्य पुण्यस्य । उक्तं चाग्नेये । यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः । एवं सुकर्मणश्चापि पततस्तमसि ध्रुवमिति ॥

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५**

पूर्वे पुण्यपापे अप्रारब्धकार्ये एव विनश्यतः । तस्य तावदेव चिरमिति तदवधेः । उक्तं च **नारायणतन्त्रे**—यदनारब्धपापं स्यात्तद्विनश्यति निश्चयात् । पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः । द्विषतोऽपि भवेत्पुण्यं नाशो नास्त्यत्र संशयः । तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् । आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोरिति माध्वाः । नित्यनरकनिराकरणेनैव निरस्तमेतत् ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६**

ज्ञानिना कृतमग्निहोत्रादिकं तु मोक्षेऽनुभवायैव । स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतम् । यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोतीति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते तस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत इति तद्दर्शनात् ।

**अतोऽन्यदपीत्येकेषामुभयोः ॥ १७**

मुक्तावनुभावकादन्यत्पुण्यमपि नश्यति । अप्रारब्धमनभीष्टं च तथा ह्येकेषां पाठः । उभयोस्त्यागेन । तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति । उक्तं च पाद्मे—अनभीष्टमनारब्धं पुण्यमस्य विनश्यति । किमुपायं परंब्रह्म ज्ञानिनो नास्ति संशय इति ।

**यदेव विद्ययेति हि ॥ १८**

ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं भवति । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुतेः । न हास्य कर्म क्षीयत इति च । अल्पमात्रं कृतो धर्मो भवेद् ज्ञानवतो महान् । महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत्" । इति च भारते इति माध्वाः ।

अत्रेदं वक्तव्यम्। यदेव विद्ययेत्येतत् न ज्ञानिपरं किं तु देहातिरिक्तात्मविषयकपरोक्षज्ञानिपरं अवेक्षणेनाज्यस्येव उपनिषज्जन्यदेहातिरेकज्ञानेन जीवस्य संस्काराभ्युपगमात्। संस्कृतस्य च कर्माङ्गत्वात्। तत्त्वज्ञानं तु स्वतन्त्रफलसाधनम् न त्वङ्गम्। तदुक्तं व्याकरणाधिकरणे **भट्टपादैः**—सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते। पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् इति। न चैवं तरप् प्रत्ययानुपपत्तिः। तस्य स्वार्थिकत्वात्। न च तत्र मानाभावः तरप्तमपौ घ इति **सूत्रकारोक्त्या** तज्ज्ञापनात्। अन्यथा हि लाघवार्थमातिशायनिकप्रकरण एव तादीवः पितौ घ इति वा ब्रूयात्। स्पष्टं चेदं भट्टसोमेश्वरादिग्रन्थेऽपि। पूर्वतन्त्ररीत्या चेदम्। अद्वैतमते तु उपनिषदा विद्ययेत्यनेनाङ्गावबद्धोपासनोच्यते। मतद्वयेऽपि तत्त्वज्ञानविनियुक्तं चैतत्। एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेत्यादिवचनस्वरसात्। अन्यथा कृतकृत्यत्वमौपचारिकं स्यादिति दिक्॥

## भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते॥ १९

आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते। उक्तं च **नारायणतन्त्रे**—"आरब्धपुण्यपापस्य भोगेन क्षपणादनु। प्राप्नोत्येव तमो घोरं ब्रह्मविन्नात्र संशयः। उक्तं **चानुव्याख्याने**—ततो भोगेन पुण्यं च क्षपयित्वेतरत्तथा। ब्रह्मविद्ब्रह्मदर्शी च तमोमोक्षाववाप्नुत इति माध्वाः। अत्रापि तमोवेत्यंशो नित्यनरकनिराकरणेनैव निराकृतः अंशान्तरमविरुद्धमिति दिक्॥

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे
चतुर्थाध्यायस्य प्रथमः पादः॥

---

**शिवं शिवकरं देवं सर्वव्यापिनमीश्वरम्।**
**प्रणम्य शिरसा देवं लिखेऽहं तत्त्वकौस्तुभम्॥**

देवानां मोक्ष उत्क्रान्तिश्च अस्मिन्पाद उच्यते॥

## वाङ्मनसि दर्शनाच्छब्दाच्च॥ १

वागभिमानिन्युमा मनोभिमानिनि रुद्रे विलीयते। वाचो मनोवशत्वदर्शनात्। तस्य यावन्नवाङ्मनसि सम्पद्यत इति शब्दाच्च। उमा वै वाक्समुद्दिष्टा मनो रुद्र उदाहृतः। इति **स्कान्दे**।

## अत एव च सर्वाण्यनु॥ २

अत एव च शब्दात् सर्वाणि दैवतानि यथानुकूलं विलीयन्ते। अग्नौ सर्वे देवा विलीयन्ते। अग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयत एवमन्यानि दैवतानि यथानुकूलमिति हि **गौपवन**श्रुतिः॥

**तन्मनः प्राण उत्तरात् ॥ ३**

मन: प्राण इत्युत्तरवचनात् । मनोऽभिमानी रुद्र:प्राणवायौ विलीयते । वायोर्वा रुद्र उदेति । वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठ इति कौण्डिन्यश्रुतेः ।

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४**

स प्राण: परमात्मनि विलीयते । सर्वे प्राणमुपगच्छन्तीत्यादिश्रुतेः ।

**भूतेषु तच्छ्रुतेः ॥ ५**

भूतेष्वन्येषां देवानां लयः । भूतेषु देवा विलीयन्ते भूतानि परे इति **बृहच्छ्रुतेः** ॥

**नैकस्मिन् दर्शयतो हि ॥ ६**

नैकस्मिन् भूते सर्वेषां देवानां लयः । पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्यादि महोपनिषच्चतुर्वेदशिखे दर्शयतो हि । अतोऽग्नौ देवा विलीयन्त इत्यत्र निर्दिष्टानामेव लय इत्यादीनि माध्वाधिकरणानि ।

अत्रेदं वक्तव्यम् । प्रागुक्तरीत्या अद्वैते सुस्थे त्वयोच्यमानं तारतम्यं स्वोत्कृष्टदेवतासु अपकृष्टानां लय इत्यादिकं च सर्वमसङ्गतमेव । तथा च श्रुतिः—इन्द्रं मित्रं वरुणमग्निमाहुरित्यादि । न च व्यवहारिकं तारतम्यं, मोक्षे व्युत्पाद्यमानत्वात् । त्वया सत्तात्रैविध्यानभ्युपगमाच्च । किं च त्वदुक्तं तारतम्यमनेकोपनिषद्विरुद्धम् । तथाहि—तलवकारोपनिषदि-अग्निवायुमघोनां दुरभिमानभङ्गः । पार्वत्या अनुग्रहात् भयनिवृत्तिश्चेत्यादि श्रूयते । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति तस्मिन् त्वयि किं वीर्यमित्यपीदं सर्वमाददीय यदिदं पृथिव्यामिति । तस्मै तृणं निदधौ एतदादत्स्वेति तदुप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुमित्यादि । स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीमित्यादि च । अथर्वशिरसि च । ते देवा रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः इत्यादि । समन्वयाधिकरणद्युभ्वाधिकरणयोर्भङ्गे उक्तमपीहानुसन्धेयम् । एतेन वक्ष्यमाणं मुक्तौ तारतम्यं गुणोपसंहारे अनुव्याख्यानादौ व्युत्पादितं च सर्वमपास्तम् । प्रकृतमनुसरामः ।

**समना चासृत्युपक्रमात् अमृतत्वं चानुपोष्य ॥ ७**

देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना संसारानुपक्रमात् स्वत एवामृतत्वं तस्याः । **बृहच्छ्रुतिश्च** । द्वौ वाव सृत्यनुक्रमौ । प्रकृतिश्च परतश्च । द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चेति ज्ञात्वा विमुच्यत इति । खण्डनं प्राग्वत् । द्वित्वस्य व्या वहारि-

कत्वात् । त्वद्रीत्या तु पञ्चपञ्चजना इत्यादिवदुपपत्तेः । समाना चासृतीति साम्प्रदायिकं त्वतः प्राचीनैरभियुक्तैर्व्याख्यातं पाठं विहाय पाठान्तरकल्पनानौचित्यं च । नद्यृतश्चेति कपि समनाकेति प्रयोगापत्तेश्च । न च समासान्तविधिरनित्य इति कथंचित्समाधातुं युक्तम् । नित्यत्वदार्ढ्यार्थत्वा-दिति दिक् ॥

## तदपीते संसारव्यपदेशात् ॥ ८

प्रकृतौ लीने पुनः संसारसत्त्वात् । न तस्याः सर्वात्मना भगवत्साम्यमिति भावः । समावेतौ प्रकृतिश्च परमश्च । नित्यौ सर्वगतौ नित्यमुक्तावसमौ । प्रकृतिश्च परश्च विलीनो हि प्रकृतौ संसारमेति । विलीनः परमेह्यमृतत्वमेति । इति **सौपर्णेय**श्रुतेः ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९

सूक्ष्मत्वं चाधिकं ब्रह्मणः । ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यं च । सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः । ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोरिति **चतुरश्रुतिः** ॥

## नोपमर्दनातः ॥ १०

अतस्तस्य ये विशेषगुणास्तेषामनुपमर्देनैव साम्यम् । उभयोर्बन्धाभावाविशेषेऽपि स्वातन्त्र्यपारतन्त्र्यादिवैषम्यात् । उक्तं च भविष्यत्पर्वणि-देशतः कालतश्चैव समा प्रकृतिरीश्वरे । उभयोरप्यबद्धत्वं तदबन्धः परात्मनः । स्वत एव परेशस्य सा चोपास्ते सदा हरिम् । प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना । नियता नैव केनापि नियता हि हरेर्गुणा इति माध्वाः ॥

अत्रेदं वक्तव्यम् । हरेः प्रकृतिं तद्गुणांश्च प्रति नियामकत्वं दुर्वचम् । तद्धि न जनकत्वम् । तस्या अनादित्वात् । नापि व्यापकत्वं समव्याप्तत्वेनाविशेषात् । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेति वचनमप्यपार्थकम् । अनुग्रहत इति पञ्चम्यर्थस्य बाधात् । न सन्ती-त्यादेरप्रसिद्धिग्रस्तत्वाच्चेति दिक् । एतेनास्यैव चेत्यादिप्रवृद्धकोऽपि परास्तः ।

## स्मर्यते चेति सूत्रान्तरम् ॥ १४

विष्णोः केचित्समाः । केचिदसमाः । समासमा तु रमोक्ता । अत्रार्थे स्पष्टो ह्येकेषा-मिति पूर्वसूत्रेण अथातः समाश्चासमाश्चाभिवीयन्ते समासमाश्च । अथ समानि ब्रह्मणोरूपाणि यैरुत्पत्तिस्थितिलयानि यतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्ररुद्रप्रजापतिबृहस्पतिर्ये केचिदेव-गन्धर्वा मनुष्याः पितरोऽसुरा यत्किंचिदेवं चरमचरं चाथ समासमा प्रकृतिर्वाव समासमैषा हि नित्या-परा तद्वशा चेति **माध्यन्दिनायनानां** श्रुतिमुक्त्वा स्मृतिमनेनाह, उक्तं च **वाराहे** मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः । ब्रह्माद्यास्तु असमाः प्रोक्ताः प्रकृतिश्च समासमेति माध्वाः । खण्डनं प्राग्वत् । किं च सच्चिदानन्दनित्यत्वादिना जीवा अपि समाः सर्वसमा तु रमापि न, मत्स्यादिनां चा-

भेदात्साम्यं दुर्वचं सादृश्यस्य भेदगर्भत्वात् । अन्यथा निरञ्जनः परमं साम्यमुपैतीति श्रुत्या जीवा ब्रह्मणोरभेद एव सिध्येत् । साम्यशब्दबलादेव भेदसिद्धिरिति त्वदीयानां खण्डनं गर्भस्रावेणैव गच्छेत् । तस्मादुक्तविभागो निष्फलो दुरुपपादश्चेति दिक् ॥

## तानि परे तथाह्याह ॥ १५

प्राप्यद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते । सर्वे देवाः प्राणमाविश्य देवी-मुक्तालयं परमे यान्त्यचिन्त्ये । इति **कौषारवश्रुतेः** । इति माध्वाः । खण्डनं प्राग्वत् ॥

## अविभागो वचनात् ॥ १६

एते देवा एतमात्मानमनुप्रविश्य सत्याः सत्यकामाः सत्यसंकल्पा यथा निकाम-मन्तर्बहिः परिचरन्तीति **गौपवनश्रुतेः** । तत्परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वं कामेन मे काम आगादित्यादिश्रुतेः । उक्तं च **ब्राह्मे** मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु । कामानु-कूलकामत्वं नान्यत्तेषां विधीयत" इति । इति माध्वाः । खण्डनं प्राग्वत् । किं च त्वद्रीत्या कामादेः स्वरूपात्मकत्वादानुकूल्यादिकं दुर्वचमिति दिक् ॥

तदोकोग्रेत्यादिसूत्राणां माध्वानां व्याख्यानं प्रायेणास्माकमपि संवादित्वान्नोट्टङ्क्यते ।

## अतश्चायनेऽपि हि दक्षिणे ॥ २०

दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायणे इत्युक्तेपि ज्ञानिनो दक्षिणोत्क्रान्तिर्युज्यते । शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः । तावन्त एव निर्दिष्टा उत्तरायणरश्मयः । ते सर्वेदेह-सम्बद्धाः सर्वदा सर्वदेहिनाम् । महर्लोकादिगन्तार उत्तरायणरश्मिभिः । निर्गच्छन्तीतरैश्चापि यैरेष्टव्योत्तरा गतिः । उत्तरं दक्षिणमिति त एव तु निगद्यते । न तु कालादिविशेषोऽस्ति ज्ञानिनां नियमात्फलम् । ददाति कालानुगुणफलं किंचिद्विशिष्यते । अत्युत्तमानां केषां चित् न विशेषोऽस्ति कालतः । इति **नारायणाध्यात्म** इति माध्वाः । खण्डनं प्राग्वत् । नहि ज्ञानिनो गमनादिकमस्ति । अत्र ब्रह्म समश्नुते इति श्रुतेः । उक्तवचनानि तु ब्रह्मलोकाख्यगौणमुक्तिपराणीति दिक् ॥

## योगिनः प्रति स्मर्यन्ते स्मार्ते चैते ॥ २१

**न केवलं** कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किं तु स्मार्ते स्मरणनिमित्ते । योगी प्राप्य निवर्तेत इत्यत्र योगीति विशेषणात् । गत्यनुस्मारणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम् । अननुस्म-रतः काले स्मरणं प्राप्य वै गतिरिति **अध्यात्मे** । खण्डनं प्राग्वत् ।

इति श्रीतत्त्वकौस्तुभे द्वितीयपरिच्छेदे
चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

तृतीयपादे मार्गो गन्तव्यं च निरूप्यत इति माध्वाः। मार्गश्च गौणमुक्तेरेव, परममुक्तेस्तु न संभवतीति प्रागेवोक्तम्। सूत्राणां पाठोऽर्थश्च प्रायेण संवादी। क्वचित्तु विशेषः। तद्यथा—

**आतिवाहिकस्तल्लिङ्गात्॥ ४**

आतिवाहिको वायुपुत्रः। उक्त च ब्रह्मतर्के—"उत्क्रान्तस्तु शारीरात् सोदूगच्छत्यर्चिषमेव तु। ततोऽपि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः। ततोहः पूर्वपक्षं च उदक् संवत्सरं तथा। तडितं वरुणं चैव प्रजापं सूर्यमेव च। सोमं वैश्वानरं चेन्द्रं ध्रुवं देवं दिवं तथा। ततो वायुं परं प्राप्य तेनैति पुरुषोत्तममिति। आतिवाहिका इति तु माध्वात्प्राचां पाठः। एतत्पादार्थखण्डनं प्राग्वत्॥

इति श्रीतत्त्वकौस्तुभे द्वितीय-
परिच्छेदे चतुर्थाध्यायस्य तृतीयः पादः॥

---

चतुर्थपादे भोग उच्यते—

**सम्पद्याविर्भावःस्वेन शब्दात्॥ १**

स एवंविदेवं मन्वान एवं पश्यन्नात्मानमभिसंपद्यैतेनात्मना यथाकामं सर्वान् कामाननुभवतीति **सौपर्णश्रुतेः**।

**मुक्तः प्रतिज्ञानात्॥ २**

मुक्त एवातोच्यते। अहरहरेताननुप्रविशाति। अथ सङ्क्रमे च न तत्र मोदते। न कामाननुभवति बद्धो ह्येव तदा भवत्यथ यदेनं मुक्तोनुप्रविशति मोदते च प्रमोदते च। कामांश्चैवानुभवन्ति कामांश्चैवानुभवतीति **बृहच्छ्रुतौ** प्रतिज्ञानात्॥

**आत्मा प्रकरणात्॥ ३**

परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति छान्दोग्ये। परंज्योतिःशब्देन परमात्मैवोच्येत। तत्प्रकरणात्। परंज्योतिः परंब्रह्म परमात्मादिका गिरः। सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथंचनेति **ब्रह्माण्डे**॥

**अविभागेन दृष्टत्वात् ॥ ४**

ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते यानेवाहं शृणोमि यान्पश्यामि यान् जिघ्रामि तानेवैते इदं शरीरं विमुच्यानुभवन्तीति **चतुर्वेदशिखायां** दृष्टत्वात्। भविष्यत्पुराणे च मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित्। बहिष्ठान् भुञ्जते भोगान् आनन्दादीन् कथंचनेति ॥

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५**

सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान्भुञ्जते इति जैमिनिर्मन्यते। स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणाशृणोति ब्रह्मणैव सर्वमनुभवतीति **माध्यंदिनायन**श्रुतावुपन्यासात्। आदत्ते हरिहस्तेन हरिदृष्टयैव च पश्यति। गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेदिति स्मृतेः। गच्छामि विष्णुपादाभ्यां च विष्णुदृष्टया च दर्शनम्।" इत्यादिपूर्वस्मरणान्मुक्तस्य च भविष्यतीति। बृहत्तन्त्रोक्तयुक्तेश्च ॥

**चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६**

चितिमात्रो देहो मुक्तानां पृथग्विद्यते तेन भुञ्जते। सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते। तामेतां मुक्तिरित्याचक्षत **इत्युद्दालकश्रुतेः**। चिदात्मकत्वादिति औडुलोमिः मन्यते ॥

**एवमप्युपन्यासात पूर्वभावादविरोधं बादरायणः ॥ ७**

स वा एष एतस्मान्मर्त्यात् विमुक्तश्चिन्मात्री भवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोति अभिमनुतेऽभिविजानाति तामाहुर्विमुक्तिरिति **सौपर्ण**श्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य च भावादुभयत्राप्यविरोधं बादरायणो मन्यते। **नारायणाध्यात्मे** च "मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः। चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम्। तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम्। कुर्वन्ति भुञ्जते भोगान् तदन्तर्बहिरेव वा। यथेष्टं परिवर्तन्ते तस्यैवानुग्रहादिति ॥

**सङ्कल्पादेव च तच्छ्रुतेः ॥ ८**

न तेषां भोगादिषु प्रयत्नापेक्षा, स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिश्रुतेः ॥

**अत एव चानन्याधिपतिः ॥ ९**

सत्यसंकल्पत्वादेव । परमोऽधिपतिस्तेषां विष्णुरेव न संशयः । ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः । ततः प्राणादिनामान्ताः सर्वेऽधिपतयः क्रमात् । आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् । एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशय इति **वाराहे** ॥

**अभावं बादरिराह ह्येवम् ॥ १०**

चिन्मात्रं विनान्यो देहस्तेषां न विद्यत इति बादरिः । अशरीरो वाव तदा भवति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां एष उन्मथ्यत इत्येवं **काठरव्य** श्रुतावववादि ॥

**भावं जैमिनिर्विकल्पाम्नानात् ॥ ११**

स वा एवंवित्परममभिपश्यति अभिशृणोति ज्योतिषा रूपेण चिता वाऽचिता वा नित्येन वा अनित्येन वा यावानन्दी ह्येष भवति नानानन्दः किंचिदुपस्पृशति **इत्यौद्दालकश्रुतौ** विकल्पाम्नाना-दन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२**

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति एवं मुक्तभोगो बाह्यशरीरकृतश्चिन्मा-त्रकृतश्च भवतीति बादरायणो मन्यते । अत्रोपपत्तिमाह—

**तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३**

सन्ध्यं स्वप्नः । सन्ध्यं तृतीयं स्वप्नस्थानमिति श्रुतेः ॥

**भावे जाग्रद्वत् ॥ १४**

ब्रह्मवैवर्ते च स्वप्नस्थानां यथा भोगो विना देहेन युज्यते । एवं मुक्तावपि भवेत् विना देहेन भोजनम् । स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवत् भुक्त्वा त्यागः कदाचनेति ॥

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५**

शरीरमनुप्रविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति । नतु दुःखादीन् । यथा प्रदीपिकादिषु प्रविष्टः तत्स्थं तैलाद्येव भुङ्क्ते नतु तत्कार्ष्ण्यादि । तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति हि दर्शयति । नन्वेतत्स्वर्गादिविषयकं किं न स्यादित्याशंक्याह—

**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६**

सुप्तौ मोक्षे वा तदुच्यते। अत्र पिताऽपिता भवति। अनन्वगतं पुण्येन अनन्वागतं पापेन इत्याद्याविष्कृतत्वात्। **ब्रह्मतर्के च** "ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वसाक्षिणः। भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन। तीर्णा हि सर्वशोकास्ते पुण्यपापविवर्जिताः। निवृत्तसर्वदोषास्ते गुणमात्रस्वरूपत इति ॥

**जगद्व्यापारवर्जम् ॥ १७**

सर्वान् कामानाप्त्वाऽमृतः समभवदित्युच्यते। तत्र सृष्ट्यादिभ्योऽन्यानाप्नोति। कुतः?

**प्रकरणादसन्निहितत्वाच्च ॥**

जीवप्रकरणात् जीवानां तादृक्सामर्थ्यविदूरत्वाच्च। वाराहे च—"स्वाधिकानन्दसंप्राप्तौ सृष्ट्यादिव्यापृतेष्वपि। मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुञ्जते। तद्योग्यता नैव तेषां कदाचित्क्वापि विद्यते। नचायोग्यं विमुक्तोऽपि प्राप्नुयान्नच कामयेदिति ॥

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८**

ता यो वेद स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमस्तीति चेन्न, आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते। **गारुडे** च आत्मन्येव परं देवमुपास्य हरिमव्ययम्। केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन। अत्रैव च स्थितिस्तेषां अन्तरिक्षे तु केचन। केचित्स्वर्गे महर्लोके जने तपसि वा परे। केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम्। तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः। सालोक्यं च समीपत्वं सारूप्यं योग एव च। इमामारभ्य सर्वत्र यावत्तु क्षीरसागरम्। पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः। मानुषा वर्णभेदेन तथैवाश्रमभेदतः। क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः। आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः। रुद्रो ब्रह्मेति क्रमशः तेषुचैवोत्तमोत्तमाः। नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च। सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम्। पूज्यन्ते चावरैस्तेषु सर्वपूज्यश्चतुर्मुखः। स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता। सयुजः परमात्मानं प्रविश्य च बहिर्गताः। तद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन। भुञ्जते मुक्तिरेवेति विस्पष्टं समुदाहृतेति ॥

**विकारावर्ति च तथा हि दर्शयति ॥ १९**

विकारावर्तिव्यापारो मुक्तानां विद्यते। इमं मानवमावर्तं नावर्तन्त इति श्रुतेः। वाराहे च—"स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम्। बलिं हरन्ति मुक्ताय विरिञ्चाय च पूर्ववत्। सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः। न विकाराधिकारस्तु मुक्तानां अन्य एव तु। विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुनेति ॥

**स्थितिमाह दर्शयतश्चैव प्रत्यक्षानुमाने ॥ २०**

एतत्साम गायन्नास्ते इत्युच्यते। तत्रानन्दादीनां वृद्धिर्ह्रासश्च न विद्यते। एकप्रकारेणैव सर्वदा स्थितिः। स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव तथा भवति। दर्शनेव ब्रह्म दर्शन्नेवात्मानं तस्यैवं दर्शतो नापत्तिर्विपत्तिरित्याह। **जाबालश्रुतौ**—यत्र गत्वा न म्रियते यत्र गत्वा न जायते। न हीयते यत्र गत्वा यत्र गत्वा न वर्धते इति। मोक्षधर्मे विद्वत्प्रत्यक्षात् कारणाभावलिङ्गाच्च। ब्रह्मवैवर्ते च—न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित्। विद्वत्प्रत्यक्षसिद्धत्वात् कारणाभावतोऽनुमा। हरेरुपासना चात्र सदैव सुखरूपिणी। न च साधनभूता सा सिद्धिरेवात्र सा यत इति॥

**भोगमात्रसाम्यलिङ्गाच्च ॥ २१**

न च भोगविशेषादिविरोधः। एतमानन्दमयमात्मानमनुप्रविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमत इति भोगमात्रसाम्यलिङ्गात्। अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत्। कादाचित्कविशेषस्तु नैव तेषां निषिध्यत इति च **कौर्मे**॥

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२**

न च पुनरावर्तते न च पुनरावर्तते सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत्॥ इत्यादिश्रुतिभ्य इति मध्वभाष्यम्।

अत्रायं निष्कृष्टोऽर्थः। सायुज्यमुक्तिभाजो देवाः स्वोत्तमदेवतानुप्रवेशक्रमेण भगवद्देहमनुप्रविश्य ग्रहावेशन्यायेन भगवद्देहेन्द्रियैः तद्भुक्तानेव भोगान् कदाचिद्बहिर्निर्गत्यात्मस्वरूपाभिन्नैश्चिन्मात्रदेहेन्द्रियैः स्वसंकल्पोपनतान् भोगान् भुञ्जाना आनन्दवल्ल्युक्तक्रमेण स्वरूपानन्दज्ञानैश्वर्यभोगेषु चोत्तरोत्तरं शतगुणोत्कृष्टाः पूर्ववदेव मुक्तावपि यथास्वं ब्रह्मेन्द्रवरुणचन्द्रसूर्यादितत्तदाधिकारिकदेवतापदं तदनुसारिणमुत्तमाधमभावं पूज्यपूजकत्वादिव्यवस्थां चानुभवन्तो विहरन्ति। देवव्यतिरिक्तास्तु सालोक्यादिमुक्तिभाजो यथाधिकारं भूरादिषु सप्तसु लोकेषु भगवल्लोकेषु च स्थितानि भगवतः स्थानानि प्राप्य स्वेच्छया गृहीतबाह्यदेहैः चिन्मात्रदेहैर्वा स्वसंकल्पोपनतान् भुञ्जानाः पूर्ववद्वर्णाश्रमादिभेदं तदनुसारिणीं पूज्यपूजकत्वादिव्यवस्थां ज्ञानानन्दैश्वर्यभोगतारतम्यं च प्राप्ता विहरन्ति। न चैवं मुक्तानां तारतम्यवत्त्वे तद्दर्शनकृतदुःखद्वेषेर्ष्यादिभिर्मुक्तेरपुरुषार्थत्वप्रसङ्गः। निर्दोषाणां तेषां गुरुशिष्यवत्तदप्रसक्तेः। मुक्तानामन्तःकरणाभावाच्च ईर्ष्यादीनामन्तःकरणधर्मत्वेन च तदभावे असंभवादिति माध्वमतमिति।

अत्रेदं वक्तव्यम्। स्वोत्तमदेवतानुप्रवेशस्तावदसंगतः। इन्द्रं मित्रमित्युपक्रम्यैकं सद्विप्रा बहुधा वदन्तीति श्रुत्या अद्वैतस्यैव लाभात्। तस्य समर्थितत्वाच्च। भगवद्देहमित्यप्यसङ्गतम्। अपाणिपादमित्यादिश्रुतेः। ननु प्राकृतपाणिपादाद्यभावविषयिणी सा, भगवद्देहस्तु सच्चिदानन्द-

मात्रं पाणिपादादयोऽप्येवम्, उक्तम् भारततात्पर्यनिर्णये आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मेति । अतो नोक्तदोष इति चेन्नैवम् । लोकवेदाधिकरणविरोधात् । देह-शब्दस्य करचरणपादादिशब्दानां च लोके अन्यत्रैव शक्तिग्रहात् । अनुप्रविश्येत्यप्यसङ्गतम् । भगवद्देहतदवयवानां व्यापकतया अणूनां जीवानां सर्वदा तत्सम्बन्धसत्त्वात् । एवं भगवद्देहेन्द्रियै-रित्यप्यसाधु । चक्षुरादिशब्दानामिन्द्रियशब्दस्य चान्यत्रैव शक्तिग्रहात् । तद्भुक्तानित्यप्यसाधु । भोगस्यापि तत्स्वरूपात्मकतया तत्कर्तृकभोगविषयत्वस्य भोग्येषु बाधात् । बहिर्निर्गत्येति तु सुत-रामसाधु । सर्वव्यापकादन्तर्यामिणो बहिर्भोगस्यैव दुर्वचत्वात् । चिन्मात्रदेहेन्द्रियैरित्यप्यसाधु । तृतीयार्थस्य करणत्वस्य बाधात् । स्वसंकल्पेत्यपि न युक्तम् । मुक्तावन्तःकरणाभावेन तद्धर्मसंकल्पा-योगात् । स्वरूपमात्रस्यातिप्रसक्तत्वात् । पूर्ववद्वर्णाश्रमादिभेदमित्यपि न, ब्राह्मणत्वादीनां स्थूल-शरीरधर्मत्वात् । आश्रमाणामप्यष्टवर्षं ब्राह्मणमुपनयीतेत्यादिपर्यालोचतया तथात्वात् । अन्यथा लोकवेदाधिकरणविरोधध्रौव्यात् । अपि चैवं जीवस्यैव वर्णाश्रमकरचरणादिसकलकर्मज्ञानेन्द्रिय-सहितदेहरूपत्वं, तेनैव देहेन स्वप्ने मुक्तौ च व्यवहार इति वदतो देहात्मत्वादिमतप्रवेशः । किं च आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च हरिपादेन इत्यादित्वदुक्तं दुरुपपादम् । स्वगतभेदविरहाभ्युपगन्तुस्तव उक्तव्यवस्थानुपपत्तेः । अभेदे हि हस्तचक्षुरादिना भगवान् गच्छति । मुखपादादिना आदत्ते । करपादादिना पश्यतीत्यादिसङ्करप्रसंगः स्पष्ट एव । नन्वेतत्सर्वं विशेषबलेन समाधास्यामीति चेन्न । विशेषशब्दस्यापि स्वरूपमात्रपरतया करचरणादिशब्द-तौल्यात् । तस्माच्छ्रुतिस्मृतिन्यायविरुद्धत्वान्माध्वोक्तमोक्षरूपफलं दुरुपपादमिति स्थिते तादर्थ्येन समन्वयाविरोधसाधनानामप्यविचार्यतया शास्त्रानारम्भ एव पर्यवस्यति । प्रागुक्तरीत्या त्वदभिमत-समन्वयादयोऽपि दुरुपपादा इति सहृदयैराकलनीयम् । यत्तु चतुरमाठरेत्यादिसकललोका-प्रसिद्धवचनानां साक्षितयोपन्यासात् तत्प्रयुक्तां स्वानाप्तत्वशङ्कां परिहर्तुं हनूमद्भीमसेनक्रमेण वायोः स्वयं तृतीयावतार इति उद्घुष्य तत्र च साक्षितया—प्रथमो हनूमान्नाम द्वितीयो भीमसेनकः । पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः । इति स्मृतिवचनमस्तीति स्वयमेव तदुदाहर-णेन शिष्यान् प्रतार्य किं बहुना श्रुतिसिद्धोऽयमर्थ इति दर्शयितुं भाष्यान्ते मध्वेन पद्यं निर्मितम्—

> **यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
> **बडित्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
> **वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः**
> **मध्वो यत्तु तृतीयतःकृतमिदं भाष्यं हरौ तेन हि ॥** इति ॥

तस्यायमर्थः—यस्य वायोः वेदवचने बलित्थेत्यादौ अत्यद्भुतानि त्रीणि रूपाणि उदितानि तेनेदं हरि-विषयकं भाष्यं कृतम् । तस्य मूलरूपम् त्रीणि रूपाणीति विशिनष्टि- बडित्यादिना यस्य तत् मूलरूपं बट्बिलात्मकं दर्शतं ज्ञानरूपं च दृशेरौणादिको अतच् प्रत्ययः । किं च भर्गः भरणगमनयोः कर्तृ । डुभृञ् भरणे गम्लृ गतौ आभ्यामसुच्प्रत्ययो डिच्च । अपि च महत् श्रेष्ठं न केवलं

मूलरूपमेव, किं तु यस्यावतारेषु निहितं रूपमपीत्थमेव यस्य प्रथमं रामविषयाणि वचांसि मूल-रामायणादिवचांसि तेषां नयनं नीयते एष्वेषु प्रवर्त्यते अनेनेति एरच् इत्यच् यस्य द्वितीयं वपुःपृक्षः पूतनाक्षयकारीत्यर्थः। पुंस्त्वं श्रुत्यनुसारेण, यस्य तृतीयं वपुरेव मध्व इत्यादि ॥

अत्रेदं वक्तव्यम्। बिभर्तिगच्छतिभ्यां धातुभ्यां एकमसुच्प्रत्ययं वदन्तो व्याख्यातारस्ता-वदनभियुक्ता एवेति स्पष्टम्। मूलश्लोकोप्यसंगतः। बळित्थेति सूक्तस्याग्नेयत्वेन तत्र मध्वाद्यनन्व-यात्। तथा चानुक्रान्तं-वेदिषदेसप्तोनादीर्घतमा औचथ्यः आग्नेयं तु द्वित्रिष्टुभन्तं तु त्रिष्टुप् दशमी वा। बळित्थासमिद्ध इति। इह बळित्थेति सूक्तप्रतीकं तत्र च वेदिषद् इत्यत्रोक्तं सर्वं संबध्यते आग्नेय त्विति तुशब्दोपादानात्। तथा च परिभाषितं तु हि वै तच्छब्दयुक्तानि द्विचतुः पञ्च-षट्सूक्तभाञ्जीति। युक्तं चैतत्। सहसो यतो जनीति वाक्यशेषात्। दिवः शिशून् सहसः सूनुमग्निं सहसः सूनुरग्निरध्वरे हित इत्यादौ सहसो जन्यत्वस्य वह्निलिङ्गतया प्रसिद्धेः। सूक्त-चरममन्त्रे अस्ताव्यग्निरिति दर्शनाच्च। यदि तु वाक्यशेषानुक्रमणिकादिविरुद्धं स्वेच्छया व्याकरोषि तर्ह्यतिप्रसङ्गः। अयं ते योनिरिति मन्त्रे नग्न इति पदंभित्वा नग्नस्सन्नारोहेति योजनामाश्रित्य मातृगमनकर्तव्यताया अपि त्वया स्वीकर्तव्यतापत्तेः। तस्मात्सकलवैदिकमर्यादां न्यायोपष्टम्भं चोल्लंध्य प्रवृत्तमिदं मध्वदर्शनं प्रामाणिकैरुपेक्षणीयमिति स्थितम्। एवं स्थिते सति श्रीशङ्करभगव-त्पादकृतं निसर्गोज्ज्वलं वाचस्पतिमिश्रप्रभृतिभिः पण्डितवर्यैः निष्कर्षं प्रापितं शारीरकमेकमेव श्रेयोर्थिभिरादरणीयमिति सिद्धम् ॥

इति श्रीमद्विद्वन्मकुटमाणिक्यलक्ष्मीधरभट्टसूनुभट्टोजिभट्टविरचिते
तत्त्वकौस्तुभे द्वितीयपरिच्छेदे चतुर्थस्याध्यायस्य
चतुर्थः पादः ॥
समाप्तश्चाध्यायः ॥

---

## तृतीयः परिच्छेदः

श्रीशङ्करभगवत्पादकृतं भाष्यमादर्तव्यमित्युक्तम्। तत्कार्यविषयभूतमर्थं संक्षेपेण प्रदर्शयामः। प्राग्भवीयसुकृतपरिपाकात् कश्चिन्निष्कामस्सन् ईश्वरार्पणबुद्ध्या कर्माण्यनुतिष्ठति ज्ञानोद्देशेन वा विविदिषोद्देशेन वा, ततो भगवदनुग्रहादतिविमलमानसो विवेकं लभते। स चेत्थं—यत्र यत्र कर्मफलीभूतं सुखं सम्भाव्यते आमनुष्यादा ब्रह्मलोकं तत्र तत्र क्षयो नियतः। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः। भावकार्यस्य घटादेरिव क्षयनियमाच्च। अक्षय्यं हि चातुर्मास्ययाजिनः सुकृतं भवतीति श्रुतिस्तूक्तन्यायोपष्टब्धश्रवणविध्य-पेक्षितक्षयप्रतिपादकश्रुतिविरोधात् गुणवादः। उक्तं हि—विरोधे गुणवादः स्यादनुवादोऽवधा-रिते। भूतार्थवादस्तद्धानात् अर्थवादस्त्रिधा मत इति। न चानित्यत्वेप्यगत्या तदेवादर्तव्यमिति

वाच्यम् आनन्दरूपस्यात्मनः सत्त्वेनागत्यभावात् । इत्थं विवेके सति अनित्यदर्शनकृतं विषयेषु उपेक्षात्मकं मन्दवैराग्यं लभ्यते । इदमेव परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादिति श्रुतेरित्यर्थः । ततः चित्तेन्द्रिययोः व्यापारोपरमरूपौ शमदमौ भवतः । ततो द्वन्द्वसहनरूपा तितिक्षा श्रद्धावित्त इत्यादि श्रुत्युक्ता श्रद्धा च। ततोऽनर्थं जिज्ञासुः तज्ज्ञानोपायं विचारयन् तरतिशोकमात्मवित्' 'तमेव विदित्वातिमृत्युमेति' इत्यादिश्रुतिभिः ज्ञानस्य तदुपायतां निश्चित्य 'ब्रह्मविद्ब्रैव भवती'त्यादिना च ब्रह्मीभावस्यापि ज्ञानायत्ततामवगत्य जिज्ञासते । ननु ब्रह्म निर्विशेषं तच्च अवगतं चेन्न तर्हि जिज्ञास्यम् निश्चितत्वात् । नहि कोटिद्वयानवगाहिनो वेदान्तजनितज्ञानस्यानिश्चयरूपत्वम् इति चेन्न, अविचारितवेदान्तजन्यत्वेन तस्यापातरूपत्वादापातत्वं च संशयनिवृत्त्यसमर्थत्वम् तच्च निष्प्रकारके एककोटिके च सर्वैरभ्युपेतम् । नहि पराभ्युपेतनिर्विकल्पकाद्वा प्रमेयम् प्रमेयमिति ज्ञानाद्वा अयं यावत्स्वगतधर्मवामिति ज्ञानाद्वा अयं वह्निरित्याहार्यारोपाद्वा वह्निमान्नवेत्ति संशयस्य निवृत्तिं कश्चिदभ्युपैति । तच्चापातज्ञानं संशयत्वेन परिभाष्यताम् । परिभाषाया अपर्यनुयोज्यत्वात् । सर्वथापि ब्रह्म न वेति संशयनिवृत्तिक्षमज्ञानस्यानिष्पन्नत्वाद्युक्तैव जिज्ञासेति स्थितम् । य एवं विवेकवैराग्यशमादिसम्पन्मुमुक्षाख्यसाधनचतुष्टयसम्पन्नो जिज्ञासुः कर्मणामनुपयोगं विक्षेपहेतुतां च पश्यन्नेव निजेच्छयैव तत्परित्यागे प्रत्यवैष्यामीति पर्यालोच्य एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यादिवाक्याच्च सन्यासस्य ज्ञानसाधनत्वं निश्चित्य कर्मणां विधितःपरित्यागरूपं सन्न्यासं करोति । सन्यासश्च जन्मान्तरकृतोऽप्युपकरोति, ज्ञानप्रतिबन्धकनिवृत्तिरूपस्य तद्द्वारस्य ततोऽपि सम्भवात् । अत एव अन्तरा चापि तु तद्दृष्टेरित्यधिकरणे विधुरस्यापि श्रवणेऽधिकारो निर्णीतः । 'यद्यातुरः स्यात् मनसा वाचा वा सन्न्यसेत्' इत्यापत्सन्यासविधिः । जनकादीनां श्रवणं चात एव सङ्गच्छते । ततः कृतसन्यासः श्रवणार्थं गुरुमुपसर्पति 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं इत्यादिश्रुतेः । ततः तदधीनःसन् सर्वेषां वेदान्तानां अद्वितीये ब्रह्मणि तात्पर्यं निश्चित्येत्थं मनुते । ननु त्वंपदार्थस्य प्रमातृत्वकर्तृत्वभोक्तृत्वादिधर्मिणः तद्विपरीतब्रह्मणा कथमभेदः । न च भागत्यागलक्षणया चिदंशस्यैवाभेदं ब्रूम इति वाच्यम् । विरुद्धधर्मविशिष्टयोरिव तदुपलक्षितयोरप्यभेदायोगात् । नहि घटत्वपटत्वोपलक्षितयोरभेदः सम्भवति । तथा च वाक्यस्योपासनापरत्वं अर्थान्तरपरत्वं वा बोध्यमिति चेन्न, जीवो ब्रह्मभिन्नः तदवृत्तिधर्मवत्त्वात् इत्यनुमाने व्यावहारिकभेदेन सिद्धसाधनात् पारमार्थिकभेदवानिति साधने तु साध्याप्रसिद्धिः स्वसमानसत्ताकेति विशेषणे तु स्वत्वस्याननुगतत्वेन जीवपरत्वे पुनस्साध्याप्रसिद्धिः । घटदृष्टान्तस्य साध्यवैकल्यं च । एतेन स्वज्ञानाबाध्यत्वं स्वाज्ञानकार्यप्रतीत्यविषयत्वं यावद्धर्मिस्वरूपानुवर्तित्वं धर्मिसमसत्ताकत्वं भेदेन विशेषणं प्रत्युक्तम् ॥

किञ्च प्राङ्मुखत्व प्रत्यङ्मुखत्वादिविरुद्धधर्मवतोरपि बिम्बप्रतिबिम्बमुखयोरुक्तविशिष्टभेदाभावात् व्यभिचारः हेतावपि समसत्ताकत्वं देयमिति चेत् स्वरूपासिद्धिः । कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे हि जीवतद्विवर्तभूतं विषमसत्ताकं कर्तृत्वं स्वीकृतम् । तावतैव शास्त्रसार्थक्यात् समानसत्ताकं कर्तृत्वादि परिणामिनो मनस एव । नन्वेवं कर्तृत्वादिविवर्ताधिष्ठानस्य परिणामिनश्चाहङ्कारस्य

युगपद्भाने अहं करोमि इति प्रतीतिः न स्यात्। स्याच्च आवां कुर्वहे इति धर्मधर्मिणोः द्वित्वादिति चेत्। सत्यम्। अधिष्ठानाध्यस्तयोः आविद्यकतादात्म्येनैक्योल्लेखात् न द्वित्वं प्रतीयते इदं रजतमिति यथा। स्यादेतत् व्यावहारिकाध्यस्तत्वादिकमप्रसिद्धमेवेति कथं सिद्धसाधनमिति चेत् तस्य श्रुतिस्मृतिपुराणादिसिद्धत्वात् इति पृथगुपदेशात् तद्गुणसारत्वादिति माध्वाधिकरणभङ्गे प्रपञ्चितत्वात्। श्रुत्याद्यनुग्राहकं तर्कमपि ब्रूमः। अस्ति तावत् शुक्तौ रजतार्थिप्रवृत्तिजनकं इदं रजतमिति ज्ञानम्। तत्र तावत् स्वरूपतो विषयतश्चागृहीतभेदं ज्ञानद्वयम्। ततो रजतार्थिप्रवृत्त्यनुपपत्तेः। यत्र इष्टता (साधना) वच्छेदकवैशिष्ट्यं विषयीकरोति तत्रैव ज्ञानं प्रवर्तकमिति प्रमायां क्लृप्तत्वात्। अत एवासत्ख्यातिवादी बौद्धः तदनुगो माध्वश्च प्रत्युक्तः। किञ्च असद्रजतमित्यपार्थकं वचः। न ह्यसति रजतत्वमस्ति। तथात्र इदं रजतं अयं सर्पं इति भ्रमाभ्यां प्रवृत्तिनिवृत्ती व्यवस्थया न स्याताम्। उभयोरसद्विषयत्वाविशेषात्। असतोश्च रजतत्वसर्पत्वयोरभावात् तत्सत्त्वे वा प्रपञ्चान्तःपातात्। यत्तु अन्यत्र सदेवान्यत्र भासत इति अन्यथाख्यातिरिति तदपि न, असन्निकृष्टस्य चक्षुरादिनाऽग्रहात्। न च ज्ञानं प्रत्यासत्तिः, अनुमानादिप्रामाण्योच्छेदापत्तेः, अनुमिनोमि इत्यनुभवसिद्धे फलवैलक्षण्ये करणवैलक्षण्यमप्यावश्यकमिति चेन्न, प्रत्यक्षविशेषे आलोकादिवत् लिङ्गविशेषपरामर्शादिकारणविशेषोपपत्तेः। त्वन्मते व्याप्त्यादेरननुगतत्वेनानुमितित्वस्य कार्यतानवच्छेदकत्वात्। तर्हि अनुमिते शब्दात् ज्ञाते च साक्षात्करोमि इत्यनुभवः स्यादिति चेन्न, त्वत्पक्षेपि अनुमिनोमि इत्यनुव्यवसायानन्तरं वह्निं साक्षात्करोमि इत्यनुभवस्य दुर्वारत्वात्। ज्ञानलक्षणाजन्ये इत्थमनुभवो नेति चेत् इदं रजतमिति भ्रमोऽपि न स्यात्। नन्वेवं ज्ञानलक्षणानिराकरणे सिद्धान्तेपि कविकाव्यमूलभूतबोधस्य कथं निर्वाह इति चेत् अनेकधेति ब्रूमः। तथाहि—परमते पदार्थेष्विव अदृष्टादिवशात् पदेषु स्मृतेषु पदैः पदार्थेष्विव सम्बन्धित्वाविशेषात् पदार्थैः पदेषु स्मारितेषु हि तत्र शाब्दबोधः। तात्पर्यज्ञानं च शाब्दधीहेतुः। अथवा साक्ष्यात्मकमेकविज्ञानं, सम्बन्धिद्वये भासमाने असंसर्गाग्रहे च सति साक्षिण एव संसर्गभासकत्वाभ्युपगमात्। तदुक्तम्—(श्लो.) एवं सुगन्धीदमितीदृशानि ज्ञानानि तान्यप्युभयात्मकानि। वैशिष्ट्यमप्यत्र तथाविधासु धीवृत्तिषु व्यक्तचितिप्रकाश्यम्॥ सम्बन्धयुग्मे खलु भासमाने संसर्गबोधे सति तावतैव॥ संसर्गज्ञानमिति। ननु असंसर्गग्रहे सति का गतिरिति चेत् तत्र उपासनादाविव इच्छाजन्या मनोवृत्तिरस्त्येव तद्विषयीभूतं चेच्छाविषयवत् साक्षिणा भास्यत इति।

प्रकृतमनुसरामः। अन्यथाख्यातिवादिमतेपि रजतार्थिनः शुक्तौ प्रवृत्तिर्न स्यात्। यत्र इष्टतावच्छेदकवैशिष्ट्यं विषयीकरोति ज्ञानं तत्र प्रवर्तकमिति चेत्। यत्रेत्यस्य कोऽर्थः? वस्तुतो यन्निष्ठमिति वा? यन्निष्ठत्वेन विषयीकरोति इति वा? नाद्यः, सत्संसर्गवादे अन्यत्र विद्यमानः संसर्गोऽन्यत्र भासत इति वादे च रजतसंसर्गस्य शुक्त्यवृत्तित्वात्। न द्वितीयः। रजतरजतत्वयोः प्रकारत्वेपि शुक्तिनिष्ठत्वस्याप्रकारत्वात्। किञ्चासद्वैशिष्ट्यमिति शब्दो बाधित एव। न हि तत्र सम्बन्धत्वं सुवचम्। देशान्तरे सदिति पक्षे तु भ्रमस्य विशिष्टज्ञानत्वमेव न स्यात् भासमानवैशिष्ट्ये शुक्तिरजतयोः अनुयोगित्वप्रतियोगित्वाभावेन विशेष्यत्वविशेषणत्वानुपपत्तेः। नहि निर्विशेष्यकं

निष्प्रकारं च विशिष्टज्ञानं सम्भवतीति दिक् । तस्मात् इदं रजतमिति प्रत्यक्षेण विषयीक्रियमाणं रजतं पुरोवर्तिदेश एवोत्पद्यत इति स्वीकर्तव्यम् । कालत्रयेपि नेदंरजतं इति बाधेनैतदभावोऽपि-सिद्ध इति मिथ्यात्वमर्थसिद्धम् । तद्धि प्रतिपन्नोपाधावभावप्रतियोगित्वं, उपाधिशब्देन अवच्छेदकं संसर्गोऽधिकरणं च गृह्यते। तथाच यदवच्छेदेन येन संसर्गेण यस्मिन्नधिकरणे यदवच्छिन्नं यत्प्रतीतं तदवच्छेदेन तत्संबन्धावच्छिन्नतदधिकरणनिष्ठव्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं पर्यवस्यति । तेन परमते अव्याप्यवृत्तिसंयोगादौ मिथ्यात्वसाधने न हि सिद्धसाधनम् । संयोग-तदभावयोरवच्छेदकभेदात् । समयविशेषसंसर्ग्यत्यन्ताभावप्रतियोगिनि घटपटादावपि न, तत्रावच्छेद-कीभूतकालभेदात् । तथाच इदं रजतं, कालत्रयेऽपि नेदंरजतमित्यनुभवाभ्यां दुरपह्नवाभ्यां एका-वच्छेदेन रजततदभावसिद्धौ साक्ष्येव निरुक्तमिथ्यात्वं गृह्णाति । ननु भावाभावयोर्विरोधादेकत्र कथं स्थितिरिति चेन्न, अगत्या समसत्ताकयोरेव विरोध इति कल्पनात् प्रामाणिकगौरवस्यादोषत्वाच्च । अन्यथा सम्बन्धान्तराद्यवच्छिन्नस्यापि विरोधापत्तौ अतिप्रसङ्गात् । तच्च रजतं प्रतिभासिकं न तु घटादिवद्व्यावहारिकमिति न व्यवहारकाले भ्रमप्रमाविभागोच्छेदः । ननु किमिदं प्रतिभासि-कत्वं इति चेदुच्यते । सति प्रमातरि सविकल्पेन अशाब्देन स्वाबाधकेन वा बाध्यत्वं प्रतिभासिकत्वं प्रमात्रा सह निर्विकल्पकेन शाब्दज्ञानेन स्वबाधकेन बाध्यत्वं व्यवहारिकत्वम् । शुक्तिरजतं हि इयं शुक्तिरिति साक्षात्कारेण बाध्यते । तच्चाज्ञानकार्यत्वात् तदा प्रमाताऽस्ति । तद्बाधकब्रह्म-ज्ञानस्यानुदयात् सविकल्पकश्च शुक्तिकासाक्षात्कारः अशाब्दश्च । न चासौ स्वस्य बाधकः । वियदादिप्रपञ्चस्तु ब्रह्मज्ञानेन बाध्यते । मूलाज्ञानकार्यत्वात् । स च बाधः प्रमातुरपि तुल्यः । ब्रह्मज्ञानं च निर्विकल्पकं शाब्दं स्वबाधकं चेति । अत्र प्रमातृपदस्य स्वपदस्य वा स्थाने वियदादिकं घटपटा-दिकं वा किञ्चित् प्रक्षिप्य अनन्तानि लक्षणानि बोध्यानि । मिथ्यात्वं तु प्रातिभासिकत्वव्यावहारि-कत्वयोर्व्यापकम् । स्यादेतत् । वियदादावुक्तं मिथ्यात्वं दुरुपपादम् । तथाहि--आत्मन आकाश इत्याद्यध्यारोपेण ब्रह्मणि प्रपञ्चसिद्धौ नेह नानास्ति इत्यादिना च तत्रैव तदभावसिद्धौ प्रतिपन्नो-पाधाविति मिथ्यात्वं साक्षिणा सिध्यतीति तावत् त्वदभिमतम् । तत्र नेह नानेति श्रुत्या बोध्यमानो-ऽभावः पारमार्थिको व्यावहारिकपारमार्थिको वा? नाद्यः, अद्वैतभङ्गात् । न द्वितीयः, समानसत्ता-केन प्रपञ्चेन सह विरोधात् । न तृतीयः, प्रपञ्चस्य पारमार्थिकत्वापत्तेः इति चेन्मैवम् । अभावस्य पारमार्थिकत्वेपि भावाद्वैते क्षत्यभावात् ।

नन्वयमभावो दृश्यो वा न वा? आद्ये मिथ्यात्वहेतोः दृश्यत्वस्येहैव व्यभिचारः । द्वितीये तद्व्युत्पादनासङ्गतिरिति चेन्न, व्यावहारिकत्वात् धर्मिविषमसत्ताकेन दृश्यत्वेन व्युत्पादनादिसम्भ-वात् । मिथ्यात्वहेतौ तु समसत्ताकत्वस्य देयत्वात् । अन्यथा कल्पितभेदेन दृग्विषये ब्रह्मणि व्यभिचारापत्तेः । नन्वेवं व्यर्थविशेष्यत्वापत्तिः समसत्ताकत्वादित्येव हेतुत्वसंभवादिति चेन्न इष्टापत्तेः । नन्वेवमपि निरुक्ताभावे अभावत्वप्रतियोगित्वादिकं समसत्ताकमस्ति चेत् पुनरद्वैतक्षतिः । विषमसत्ता-कत्वे तु तन्मिथ्यात्वघटकीभूताभावान्तरस्यावश्यकतया अनन्ताप्रामाणिकपदार्थापत्तिः । निष्प्रति-योगिकतया भावापत्तिः । निर्धर्मिकत्वात् ब्रह्मभेदानुपपत्तिश्चेति दिक् । अस्तु तर्हि ब्रह्मैव प्रपञ्चा-

भावः। स च विषमसत्ताकत्वात् न प्रपञ्चेन विरुध्यते। कल्पितभेदेन च आनन्दादिवत्तस्य ब्रह्मवृत्तित्वात् उक्तमिथ्यात्वलक्षणं न विरुध्यते। एतदेवानिर्वचनीयत्वम्। तदुक्तं-मिथ्याशब्दो द्व्यर्थः, अपह्नववचनोऽनिर्वचनीयतावचनश्चेति। एतदेव चाध्यस्तत्वम्। एतद्विशिष्टं ज्ञायमानत्वं वेत्यन्यत्र विस्तरः।

स्यादेतत्। कर्तृत्वादिविशिष्टाहङ्काराधिष्ठानचिद्भागस्यैव जीवत्वे प्रमाणव्यापार-वैयर्थ्यम् सार्वज्ञ्यापत्तिश्चेति चेत्। अत्रेयं व्यवस्था-जडं द्विविधं ज्ञातैकसत्ताकं अज्ञानविषयतावच्छेदकं चेति। तत्राद्यं अज्ञानान्तःकरणतद्धर्मतदभावादिरिति। तत्र च प्रमाणं नापेक्ष्यत एव केवल-साक्षिणैव तत्सिद्धेः। द्वितीयं घटादि तस्य च ज्ञानं द्विधा ज्ञाततया अज्ञाततया च। आद्यमपि द्विधा अपरोक्षं परोक्षं च। तत्राद्ये चक्षुरादिव्यापारोऽपेक्ष्यते। तज्जन्यान्तःकरणवृत्त्या विषयदेशव्यापिन्या घटाद्यवच्छिन्नचैतन्यस्यावच्छेदेनान्तःकरणावच्छिन्नत्वानवच्छिन्नत्वप्रयुक्तभेदाप-गमेनावरणभङ्गेन च अनावृतसाक्षितादात्म्यरूपापरोक्षत्वसिद्धेः। परोक्षभाने तु लिङ्गशब्दादि-जन्या वृत्तिरपेक्ष्यते न तु तन्निर्गमनम्। तत्र हि न साक्षितादात्म्यमपेक्ष्यते। किन्तु चैतन्यमेव वास्तवैक्यमात्रेण दूरस्थवन्ह्यादेर्भासकम्। तत्तदाकारवृत्तिस्तु सहकारिणी सा च लिङ्गादिजन्यैवेति नियमः। इच्छाद्वेषादिवृत्तेरप्यनुभवबलेन तथात्वात्। सहकारित्वं च यद्यपि ज्ञाने न सम्भवति तस्यानादित्वात् तथाप्यभिवदने प्रवृत्तौ च सम्भवत्येव। अज्ञाततया भाने तु तदवच्छिन्नविषय-मज्ञानं तत्तदाकारनिश्चयाभावो वा सहकारी। घटं न जानामि इदं रजतमेतावत्कालं नावेदिष-मित्याद्यनुभवात्।

ननु वृत्त्यैव सर्वनिर्वाहे पृथक् चैतन्याभ्युपगमे गौरवमिति चेन्न। अस्ति हि वैशेषिकादेरपि मते स्वप्रकाशं नित्यं एकं चैतन्यं तदाश्रयः ईश्वरः जीवाश्चानन्ता इति तैरभ्युप-गतम्। वयं तु तदेव ईश्वरो जीवश्चेति ब्रूमः। एवं चास्मन्मत एव लाघवम्। जन्यज्ञानव्यक्त-योऽपि घटपटादिविषया मतद्वयेऽप्यनन्तास्सन्ति सुखदुःखादिकेवलसाक्षिभास्यपदार्थेषु तु क्लृप्त-साक्षिणैवास्माकं तु निर्वाहः। परेषां तु तत्राप्यनन्तानि जन्यज्ञानानि तावन्तः प्रागभावाः ध्वंसाश्चेत्यादि बहु कल्प्यमिति महदेव गौरवम्। ननु चैतन्यस्यैकस्यैव कथं जीवेश्वरप्रमातृ-साक्ष्यादिविभाग इति चेदित्थम्। अविद्यायामन्तःकरणे वा प्रतिबिम्बितं जीवः, बिम्बभूतं त्वीश्वरः। अनयोः संसारतदभावौ व्यवस्थितौ। औपाधिकश्यामत्वावदातत्ववत्। अन्तः करणविशिष्टः प्रमाता। तदुपहितः साक्षी वृत्तिविशिष्टा प्रमा विषयावच्छिन्नमज्ञातं सत् प्रमेयम्। तदेवाभिव्यक्तं सत् फलमिति। इदमेव चैतन्यं स्वप्नसुषुप्त्योरपि साधकम्। तच्च स्वप्रकाशत्वं च चिदविषयत्वम्। ननु कल्पितभेदेन चितोऽपि चिद्विषयत्वादसम्भव इति चेन्न, तथापि मिथ्यात्वघटकीभूतस्य तदभावस्यापि सत्त्वात्। एवं च वृत्तिविषयत्वाभावस्यापि सत्त्वेन असम्भवाभावात् लाघवाच्चाविषयत्वमेव स्वप्रकाशत्वमिति निष्कर्षः। सुखमहमस्वाप्सं न किञ्चिद-वेदिषं इति सुप्तोत्थितस्यानुसन्धानेन सिद्धं सौषुप्तिकमपि तदेव। न चैवं जीवस्वरूपात्मकज्ञाना-

नन्दवत् ब्रह्माभेदोऽपि इदानीं भासत इति वाच्यम् । तस्यावृतत्वात् । आवरणं चास्ति प्रकाशते इति व्यवहारयोग्ये नास्ति न प्रकाशते इति व्यवहारयोग्यता । अधिष्ठानात्मकत्वेन तस्याः पारमार्थिकतया व्यावहारिकद्वितीयया सह विरोधाभावात् । ननु तथापि ब्रह्माभेदस्य ज्ञानादिना सहाभेदात् कथमेकस्यैवावरणमनावरणं चेति चेत् जीवब्रह्मणोरिव व्यावहारिकभेदेन व्यवस्थासम्भवात् । वस्तुतस्तु निरुक्तमावरणं व्यवहारगर्भं व्यवहारश्च ज्ञानानन्दादिगर्भो भिद्यते व्याप्नोति व्याप्यश्चेत्यादिवत् । 'नीहारेण प्रावृता' इति श्रुतिश्चेह मानम् ।

ननु निरुक्तावरणाज्ञानयोः स्वप्रकाशेन चैतन्येनाप्यनिवृत्तौ निवर्तकान्तरासम्भवादनिर्मोक्षप्रसङ्ग इति चेन्न । तत्त्वमस्यादिवाक्योत्थवृत्तिविशिष्टस्यैव निवर्तकत्वात् । ननु निवर्तनीयाज्ञानसमानविषयकमेव ज्ञानमज्ञाननिवर्तकं दृष्टम् । तत्कथमुदाहृतवाक्यार्थज्ञानं निवर्तकं स्यात् । तस्य पदार्थतावच्छेदकसंसर्गादिगोचरत्वादिति चेन्न, अखण्डार्थत्वाभ्युपगमात् ।

तथाहि---वेदान्तवाक्यं हि द्विविधं पदार्थपरं वाक्यार्थपरं च द्विविधमखण्डार्थम् । अखण्डार्थत्वं च स्वविषयभिन्नाविषयकज्ञानजनकत्वम् । ननु कथमेतत् पदार्थसंसर्गस्य वाक्यार्थत्वात् अन्यथाऽनेकपदवैयर्थ्यापत्तेः वाक्यत्वोच्छेदप्रसङ्गाच्च । आकाङ्क्षादिघटितत्वं हि वाक्यत्वम् । अन्वयाबाधो योग्यता, अव्यवधानेनान्वयप्रतियोग्युपस्थितिः आसत्तिरिति तल्लक्षणात् । अपि च तत् त्वमेव, त्वमेव तत् इत्यादौ उद्देश्यविधेयभावव्यत्यासेन वाक्यार्थवैलक्षण्यमनुभूयमानं भज्येतेति चेत् । उच्यते ।

संसर्ग एव वाक्यार्थ इति न नियमः । तात्पर्यविषयीभूतस्यैव वाक्यार्थत्वात् यत्परः शब्दः स शब्दार्थ इति न्यायात् । तात्पर्यं च यथा प्रमाणं क्वचित्संसर्गे । प्रकृते तु पदार्थमात्र इत्यन्यदेतत् । यत्त्वेवं सति अनेकपदवैयर्थ्यमिति । तन्न । तत्तत्संशयनिवर्तकत्वेन सार्थक्यमिति प्रथमाधिकरण एवोक्तत्वात् ।

यदपि आकाङ्क्षादिकं संसर्गघटितमिति । तदपि न । अन्वयपदस्थाने तात्पर्यविषयेति प्रवेश्य संसर्गाघटितानामेव आकाङ्क्षादीनां सुवचत्वात् । अतिनिष्कर्षे तु त्वदुक्ताकाङ्क्षादिलक्षणानां दुष्टत्वाच्च । उद्देश्यविधेयभावस्तु प्राथमिकबोध इष्ट एव । तदनन्तरं हि लक्षणया चिन्मात्रबोधः । तात्पर्यानुपपत्तिर्हि लक्षणाबीजम् । लोके क्रय्येयं गौः यतो बहुक्षीरा इत्यादौ । वेदेपि वायुर्वै क्षेपिष्ठा देवतेत्यादौ तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात् प्रकृतेप्युपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैः शुद्धे अद्वितीये ब्रह्मणि वेदान्तानां तात्पर्यावधारणात् तदनुरोधेन जडांशपरित्यागात् लक्षणया चिन्मात्रबोध इतिन्याय्यमेव । नन्वीदृशबोधस्य किं फलमिति चेत् बन्धनिवृत्तिरेवेति गृहाण । अधिष्ठानसाक्षात्कारात् अध्यस्तनिवृत्तेर्लोके क्लृप्तत्वात् सविकल्पादेव सा दृष्टेति चेन्न अप्रयोजकत्वात् । न चैवं घटादिनिर्विकल्पकादपि तदापत्तिः अशाब्दनिर्विकल्पकस्य दूषितत्वात् अनिश्चयत्वाच्च । निश्चयत्वं हि विषयकृतविशेषाभावेपि कारणविशेषात् यथानुभवं क्वचिदस्ति क्वचिन्नेत्युक्तम् । तस्मादुपक्रमोपसंहारादितात्पर्यलिङ्गपर्यालोचनारूपेण श्रवणेन

प्रमाणगतासम्भावनायां निरस्तायां मननेन च प्रमेयगतासम्भावनायां गतायां निदिध्यासनेन च विपरीतभावनायामपाकृतायां तत्त्वमस्यादिवाक्योत्थवृत्त्या सर्वानर्थभूताविद्या निवर्तत इति स्थितिः। अविद्यानिवृत्तिश्च अधिष्ठानात्मिका अतिरिक्ता वेति पक्षद्वयम्। आद्येयमस्मिन् भवतीत्यादिना निरुक्तक्षेमसाधारणी प्रवृत्त्यङ्गभूता साध्यता यथा परमते प्रागभावादेः। द्वितीयपक्षे तु स्फुटमेव साध्यत्वम्। न चाद्वैतक्षतिः भावाद्वैताश्रयणात्। निरङ्कुशाद्वैतपक्षेपि न क्षतिः। अविद्यानिवृत्ते-रनिर्वचनीयत्वात्। न चैवमविद्योपादनकत्वापत्तिः भूयश्चान्ते विश्वमायानिवृत्तिः ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः इत्यादिश्रुतिस्मृतिबलेनाविद्यानिवृत्तौ सिद्धायां प्रमाणबलेन तदितर-कार्याणामेव अविद्योपादानकत्वकल्पनात् शुष्कतर्काणां चोपेक्षणीयत्वात्। तस्मात् सिद्ध-मद्वितीयं ब्रह्मैव तात्पर्यविषयः तत्साक्षात्काराच्च कृतकृत्यतेति सिद्धम्।

शुद्धाद्वैतसमर्थनेतिपटुं यस्योपदेशं सकृत्
श्रुत्वाप्यैक्यरुचिं सदा विदधते त्यक्तैषणा भेदिनः।
ये द्रव्येषु गुणेषु कर्मसु तथा जातौ विशेषेषु च
प्रौढाहङ्कृत (त) योद्धतास्सहजसम्बन्धंसमुद्भाव्यते॥

केलदिवेङ्कटेन्द्रोसावघोरेशपरायणः।
अचीकरदिमं ग्रन्थं तत्त्वकौस्तुभसंज्ञितम्॥
पदवाक्यप्रमाणाज्ञान् गुणग्राह्यान् विपश्चितः।
कौतुकाक्रान्तमनसः प्रमोदयतु मत्कृतिः॥

इति श्रीमद्विशुद्धाद्वैतप्रतिष्ठापकेत्यादिविरुदावलीविराजमानेन सकलसामन्तचक्रचूडा-मणीमञ्जरीनीराजितचरणकमलेन केलदिवेङ्कटभूपेन कारिते विद्वन्मकुटमाणिक्यलक्ष्मीधरभट्ट-सूरिसूनुभट्टोजिभट्टविरचिते तत्त्वकौस्तुभे तृतीयः परिच्छेदः।

**माध्वदर्शनदुःखौघविकर्तनपटीयसी।**
**भट्टोजिदीक्षितकृतिर्जीयादाचन्द्रतारकम्॥**

इह खलु केचित् पाञ्चरात्राद्यागमांस्तदनुसारिपुराणभागांश्चोपजीव्य तदधिकारितत्त्वम-पर्यालोचयन्तः श्रौतस्मार्तमार्गं त्यजन्ति त्याजयन्ति च। तान् सम्यक् शिक्षयितुं तन्त्राद्यधिकारी तावन्निरूप्यते। तत्रायं राद्धान्तः—

**शापाद्वा गौतमादीनां पापाद्वा महतो नराः। ये गता वेदबाह्यत्वं ये च संकीर्णयोनिजाः॥**
**तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथायथम्।**

तथा हि कौर्मे चतुर्दशाध्याये—

**तेषां मायावशाज्जातं गोवधं गौतमो मुनिः। केनापि हेतुना ज्ञात्वा शशापात्यन्तकोपनः॥**

भविष्यथ त्रयीबाह्या महापातकिनः शठाः । इत्यादिना गौतमशप्तान् प्रस्तुत्य,

सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् । अस्तुवंस्तादृशैः स्तोत्रैः...

इत्यादिना शिवकेशवसंनिधौ तेषां गतिप्रार्थनां प्रदर्श्य,

तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् । विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥
एवं संचोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
कापालं गारुडं शाक्तं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ॥

इत्युक्तम् । अत्र च गौतमशप्तानां वेदबाह्यानां कथंचिद्गतिप्राप्तये आगमप्रणयनेऽपि तत्र प्ररोचनार्थं चतुर्षु वेदेषु परमपुरुषार्थमलभमानः शाण्डिल्यः इमां विद्यामधिगतवानित्यादिक्रमेण तन्त्राणामवैदिकत्वं वैदिकमार्गादाधिक्यं बहुधा वर्णितमिति । एतावता विमोहनायेत्युक्तिः ॥

कौर्मे एकादशाध्याये—

कापालं पाञ्चरात्रं च यामलं वाममार्हतम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥
ये तु शास्त्राभियोगेन मोहयन्ति च मानवान् । मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ॥

इत्यादि । अत्रापि मोहनायेति प्राग्वद्व्याख्येयम् ॥

तथा स्कान्देऽपि यज्ञवैभवखण्डे गौतमशापो दर्शितः—

पाञ्चरात्रे च कापाले तथा कालामुखेऽपि च । शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥
बौद्धे चार्हन्मते चैव तथा पाशुपतेऽपि च । इत्यादि ॥

ब्रह्मशापस्तु पराशरपुराणे तृतीयाध्याये दर्शितः—

आयुधैः शङ्खचक्राद्यैस्त्वदीयैरङ्किता जनाः । अग्नितप्तैर्महामोहाद्भवेयुश्चांसयोर्द्वयोः ॥
त्वदीये पाञ्चरात्रे च तन्त्रे भागवते तथा । दीक्षिताश्च द्विजा नित्यं भवेयुर्गर्हिता हरे ॥ इति ।

भृगुदधीचिशापावपि सौरपुराणादिषु द्रष्टव्यौ । तथा पापविशेषस्यापि तन्त्रमार्गप्रवेशहेतुत्वं पाराशर्ये एकादशेऽध्याये दर्शितम्—

शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिः । अङ्किताश्च भविष्यन्ति मनुष्याः पापकर्मिणः ॥ इति ।

पाञ्चरात्रे च कापाले पाषण्डेष्वखिलेष्वपि । दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मिणः ॥
इति वासिष्ठे ॥

लैङ्गे नवमाध्याये—

अङ्किताश्च भविष्यन्ति देवतायुधलाञ्छनैः । नराणां नामरूपाभ्यां युगान्ते समुपस्थिते ॥

पाञ्चरात्रं प्रशंसन्ति केचिद्भागवतं मुने । केचित्कापालमिच्छन्ति केचित्पाशुपतं मुने ॥
[1]केचिद्बौद्धं प्रशंसन्ति [2]केचिज्जैनं परं मुने । अन्यानि यानि शास्त्राणि विरुद्धानि महामुने ॥
[3]खलप्रमाणभूतानि वेदेन मुनिसत्तम । तान्येव श्रद्धया युक्ताः परिगृह्य द्विजातयः ॥
आचरन्ति महापापम युगान्ते समुपस्थिते ।

साम्बपुराणे—
श्रुतिभ्रष्टः श्रुतिप्रोक्ते प्रायश्चित्ते भयं गतः । क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ।
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् । प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥
भयं दुर्बलचित्तानां मरणाज्जायते भृशम् । तेषामेवाभिरक्षार्थं [4]खलानां तन्त्रमुक्तवान् ॥ इति ।

तथा तत्रैव—
पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् । वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् ॥ इति ।

सूतसंहितायां मुक्तिखण्डे चतुर्थाध्याये —
अत्यन्तं पतितानां हि द्विजानां वेदमार्गतः । पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ॥ इति ।

पाञ्चरात्रादीनां न स्मृतिपुराणसाम्यम्, किं तु पतितादीन् प्रत्येवानुष्ठापकत्वम्, काल-विलम्बेन कथंचिदुपकारकत्वं चेति तस्मिन् प्रघट्टके माधवः ॥

तथा सूतसंहितायामेव चरमाध्याये—
श्रुतिपथगलितानां मानुषाणां हितार्थं हरिरपि मुनिमुख्यः प्राह तन्त्रं स्वकीयम् ।
श्रुतिपथनिरतानां तन्न सेव्यं हि नित्यं श्रुतिपथसममार्गो नैव सत्यं मयोक्तम् ॥
पाञ्चरात्राद्यागमानां श्रुत्यनधिकृतपतितादिमात्राधिकारिकत्वं दर्शयति प्रकृतप्रघट्टकव्याख्यायां माधवः । यज्ञवैभवखण्डे द्वादशाध्याये तद्व्याख्यायां च स्पष्टमेतत् ॥

तथा [5]संकरजातीनामप्यधिकारः कौर्मे द्वाविंशे दर्शितः—
अथांशोः सात्त्वतो नाम विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रतः । शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम् । प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥
इति । स्त्रीशूद्राधिकारो भागवते दशमस्कन्धे दर्शितः—
त्रिवक्रायामुपश्लोकपुत्रः कृष्णमनुव्रतः । शिष्यः साक्षान्नारदस्य ददौ चित्तमनुत्तमम् ॥

---

1. केचिदैन्द्रं 2. केचिद्दैगम्बरं 3. स्वतः प्रमाणभूतेन 4. खस्त्वहं 5. कुण्डानाम०

तेनोक्तं सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् । यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥

इति । हेमाद्रौ प्रायश्चित्तकाण्डे पद्मपुराणवचनमुदाहृतम्—

शृणु राम महाबाहो लिङ्गचक्रादिधारिणाम् । शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ॥
विप्रस्यैतद्विगर्ह्यत्वात्प्रायश्चित्तमुदीरितम् ॥ इति ।

ब्रह्मपुराणे दशमेऽध्याये—

तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा । भूदेवस्तप्तमुद्रां तु चिह्नं कृत्वा विमूढधीः ॥
इह जन्मनि शूद्रः स्यात्प्रेत्य श्वा च भविष्यति । इति ।

आश्वलायनस्मृतौ षष्ठेऽध्याये—

शिवकेशवयोश्चिह्नं चक्रशूलादिकं द्विजः । न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ॥
व्यक्तवैदिककर्माणो नास्तिका नटनर्तकाः । ते धारयेयुश्चिह्नानि शिवयोर्भिन्नबुद्धयः ॥
वेदाक्षरविहीनानां नास्तिकानां द्विजन्मनाम् । विहितं धारणं नित्यं चिह्नानां केशवेशयोः ॥
तेषां भिन्नधियां किंचित्सुगत्यर्थं शिवः पुरा । कृपया तच्चकारेह पुराणेषूदितं च तत् ॥ इति ।

किंचिदिति तन्त्रमित्यर्थः । इहेति स्मृतिष्वित्यर्थः । चकारो भिन्नक्रमः; पुराणेषु चेति योज्यः । अत एव स्मृतिपुराणयोरपि क्वचित्तन्त्रसमानविषयत्वं पराशरपुराणे दशमेऽध्याये स्पष्टीकृतम्—

क्वचित्कदाचित्स्मर्तारस्तन्त्रार्थे च ब्रुवन्ति वै । क्वचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि ॥
वदन्ति तादृशोंऽशश्च ग्राह्यस्तन्त्रावलम्बिना ॥ इति ।

स्कान्देऽपि—

तन्त्रावलम्बनेनैव पुराणानि च कानिचित् । साक्षाद्वेदविरुद्धार्थं प्रवदन्ति क्वचित्क्वचित् ॥
अधिकारिविभेदेन नैव वेदपरं प्रति । इति ।

अधिकारीति भ्रष्टाद्यधिकारीत्यर्थः । अत एव वेदाधिकारिणां तप्तमुद्रादिनिषेधकं तद्धारणे प्रायश्चित्तविधायकं प्रायश्चित्ताननुष्ठाने नरकादिबोधकं च वचनसहस्रं तत्र तत्रोपलभ्यते । दिङ्मात्रं तु प्रदर्शयामः ॥

बृहन्नारदीये चतुर्दशाध्याये—

यस्तु संतप्तशङ्खादिलिङ्गचिह्नतनुर्नरः । स सर्वयातनाभोगी चण्डालः कोटिजन्मसु ॥
तं द्विजं तप्तशङ्खादिलिङ्गाङ्किततनुं नृप । संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ॥
चक्राङ्कितततनुर्यत्र तत्र कोऽपि न संवसेत् । यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ॥
गङ्गास्नानरतो वाऽपि अश्वमेधरतोऽपि वा । चक्राङ्कितततनुं स्पृष्ट्वा रौरवं परमश्नुते ॥

चक्राङ्किततनुं दृष्ट्वा पश्येत्सूर्यं जले स्थितः । जपेच्च पौरुषं सूक्तमन्यथा रौरवं व्रजेत् ॥
चक्राङ्किततनुर्वाऽपि राजन् लिङ्गाङ्कितोऽपि वा । नाधिकारी परिज्ञेयः श्रौतस्मार्तेषु कर्मसु ॥ इति ।

कौर्मे उपरिभागे षोडशाध्याये—

पाषण्डिनो विकर्मस्थान्धर्माचार्यांस्तथैव च । पाञ्चरात्रान्पाशुपतान्वाङ्मात्रेणापि नार्चयेत् ॥

तत्रैवैकोनविंशेऽध्याये श्राद्धवर्ज्यब्राह्मणप्रस्तावे—

बौद्धश्रावकनिर्ग्रन्थाः पाञ्चरात्रविदो जनाः । कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥
इति । तथा पूर्वार्धे सप्तविंशेऽध्याये—

वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः । भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा ॥
इति । तथा हेमाद्रौ श्राद्धकाण्डे श्राद्धवर्ज्यब्राह्मणप्रस्तावे 'बौद्धश्रावक—' इत्यादि समनन्तरोक्तं कौर्मवचनमुदाहृत्य प्रघट्टकान्तरे,

विड्भक्षाश्चैव ये केचित्कपालकृतभूषणाः । शैवाः पाशुपताश्चान्ये पाञ्चरात्रास्तथापरे ॥
पाशब्देन त्रयीधर्मः पालनाज्जगतः स्मृतः । तं खण्डयन्ति यस्मात्ते पाखण्डास्तेन हेतुना ॥
इति ब्रह्मवैवर्तवचनमुदाहृत्य पाञ्चरात्राणां विड्भक्षादिसमकक्षत्वं पाखण्डत्वं च स्फुटीकृतम् । तथा प्रायश्चित्तकाण्डे पुराणान्तराण्युदाहृतानि । तद्यथा वायुपुराणे—

ब्राह्मणो यदि मोहेन तापयेद्वह्निमुद्रया । न कर्मार्हो भवेदत्र स वै पाखण्डसंज्ञितः ॥

लिङ्गपुराणे—

शङ्खचक्रे तापयित्वा यस्य देहः प्रदह्यते । स जीवन्कुणपस्त्याज्यः सर्वधर्मबहिष्कृतः ॥

आदित्यपुराणे—

वेदेषु यज्ञभागेषु यस्य नास्त्यधिकारिता । स तापयित्वा चक्रादीन्धारयेत्स्वभुजद्वये ॥
ब्राह्मणो यदि मोहेन धारयेत्तप्तमुद्रिकाः । तस्य दर्शनमात्रेण कुर्यात्सूर्यावलोकनम् ॥

वह्निपुराणे—

पूर्वजस्य तनुं दग्ध्वा शङ्खचक्रादिभिः पृथक् । न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः ॥
तस्य निष्कृतिरुत्पन्ना पाराशर्येण भाषिता । केशान्संवापयित्वाऽथ पुनः कर्म समाचरेत् ॥
गर्भगोलात्समुद्धृत्य गर्भाधानादिपूर्वकम् । षष्ट्यावृत्त्यैव कृच्छ्राणां प्रायश्चित्तमुदीरितम् ॥

कौर्मे—

अज्ञात्वा भुखजेभ्यस्तु मुद्रादग्धेभ्य आदरात् । सुवर्णमात्रसंग्राही प्राजापत्यं समाचरेत् ॥

मानवोपपुराणे चतुर्दशेऽध्याये—
आयुधैः शङ्खचक्राद्यैर्न दहेच्च कदाचन । इति ।

प्रयोगपारिजाते पृथ्वीचन्द्रोदयादौ तु विष्णुशातातपहारीतादिवचनान्युदाहृतानि । यथा विष्णुः—
शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥
यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु । तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥
शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥

शातातपः—
अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः । अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः ॥

हारीतः—
राम संदग्धगात्राणां न स्यात्पारत्रिकं शुभम् ॥

बोधायनः—
नाङ्कनाय दहेद्देहं दहेच्चेत्कामकारतः । नाधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्तेषु कर्मसु ॥

यमः—
नाङ्कनाय दहेद्गात्रं देवतायुधलाञ्छनैः । दहनाल्लेखनाद्विप्रः पातित्यं याति तत्क्षणात् ॥

इत्यादि । यत्तु माध्वाः —
वैष्णवं नारदीयं तु तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥
षडेतानि पुराणानि सात्त्विकानि मतानि मे । ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ॥
भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे । मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ॥
आग्नेयं च षडेतानि तामसानि मतानि मे ॥

इति वचनानि परिकल्प्य 'तामसा नरकायैव' इत्यादि पठित्वा मात्स्यकौर्मादेरप्रामाण्यमेवेति जल्पन्ति, तत्तुच्छम्, पुराणानां क्वचिदप्रामाण्ये त्वदुदाहृततामसादिविभागवाक्यस्यैव लाघवादप्रामाण्यौचित्यात् । न चास्य बाधकाभावात् प्रामाण्यम्, 'इदं पुराणं मुक्त्वैकं नास्त्यन्यत्पावनं परम्' इत्यादिकौर्मादिपठिततत्तत्पुराणोत्कर्षप्रतिपादकानेकवाक्यानामेव बाधकत्वात्,
मदुक्तसंहिता तु या तया विरुद्धमस्ति चेदनर्थकं हि तद्बुधा वचः प्रयोजनाय न ॥
इति सूतसंहिताचरमाध्यायवचनाच्च, भूयसामनुग्रहस्य न्याय्यत्वाच्च । किं च सात्त्विकाभिमते गारुडे शिवरहस्ये पाद्मे शिवराघवसंवादाद्यनेकप्रदेशेषु च लैङ्गादिभ्योऽप्यधिकं विभूतिरुद्राक्षादि-

